# कादम्बरी।

## पूर्वभागः ।

—:o:—

महाकवि-श्रीबाणभट्टविरचितः ।

—:o:—

श्रीयुक्तगङ्गाधरविद्यालङ्कारभट्टाचार्य्यात्मजेन
शब्दाचार्य्य-पुराणशास्त्रि-सांख्यरत्न-
व्याकरणतीर्थ-काव्यतीर्थ-
स्मृतितीर्थ-
मन्त्रोपदेशक-
श्रीहरिदाससिद्धान्तवागीश-भट्टाचार्य्येण
प्रणीतया कल्पलताभिधानया टीकया
वङ्गानुवादेन च समेतः ।

—:—

नकीपुर-हरिचरणचतुष्पाठीतस्तेनैव
प्रकाशितश्च ।

द्वितीय संस्करणम् ।

१८४७ शकाब्दे सौरश्रावणस्य
एकविंशतितमे दिवसे ।

मूल्यं ५) राजतमुद्रापञ्चकम् ।

धर्म्मो नयश्च विनयश्च

विचारणञ्च

रूपं शुभञ्च चरितञ्च

मनस्विता च ।

सम्मेलनेन सदसीव

सदा सदस्या

यस्मिन् गुणाः समुदिता

मुदिता इवासन् ॥

तस्य

खुलनाजिलाधीन-नकीपुरस्थ-भूस्वामिनः

राय^ हरिचरणचतुर्धुरीणरायवाहादुरस्य

पवित्रनामोद्देशे

समर्पितेयम्

तत्स्मृतिसन्तत-

श्रीहरिदासदेवशर्म्मणा ।

सेयं कादम्बरीकथा बाणभट्टेन कथासरित्सागरीनषष्टितमतरङ्गगतं मकरन्दिकोपाख्यानमेव क्वचित् किञ्चिदविकलीकृत्य पात्राणां नामान्तराणि च विधाय विरचिता। भूषणभट्टेन तूत्तरार्द्धे वृत्तान्तवैषम्यमपि किञ्चित् प्रतिपादितमिति प्रतीयते। तथा च

| कथासरित्सागरगतनामानि। | | | कादम्बरीगतनामानि |
|---|---|---|---|
| काञ्चनपुरी | ... | ... | विदिशा। |
| सुमनाः | ... | ... | शूद्रकः। |
| मुक्तालता | ... | ... | चाण्डालदारिका। |
| शास्त्रगञ्जः (शुकः) | ... | ... | वैशम्पायनः। |
| हिमालयपादे रोहितकतरुः | ... | ... | विन्ध्याटव्यां शाल्मलीतरुः। |
| मरीचिः | ... | ... | हारीतः। |
| पौलस्त्यः | ... | ... | जाबालिः। |
| रत्नाकरं पुरं | ... | ... | उज्जयिनी नगरी। |
| ज्योतिष्प्रभः | ... | ... | तारापीड़ः। |
| हर्षवती | ... | ... | विलासवती। |
| सोमप्रभः | ... | ... | चन्द्रापीड़ः। |
| प्रभाकरः | ... | ... | शुकनासः। |
| प्रियङ्करः | ... | ... | वैशम्पायनः। |
| आशुश्रवाः (उच्चैःश्रवसः पुत्रः) | ... | ... | इन्द्रायुधः। |
| पद्मकूटः | ... | ... | हंसः। |
| हेमप्रभा | ... | ... | गौरी। |
| मनोरथप्रभा | ... | ... | महाश्वेता। |
| दीधितिमान् | ... | ... | श्वेतकेतुः। |
| रश्मिवान् | ... | ... | पुण्डरीकः। |
| सिंहविक्रमः (विद्याधरराजः) | ... | ... | चित्ररथः [गन्धर्वराजः] |
| मकरन्दिका | ... | ... | कादम्बरी। |
| देवजयः | ... | ... | केयूरकः। |
| सिंहविक्रमः शुकोऽभूत् | ... | ... | पुण्डरीको मर्त्ये वैशम्पायन परञ्च तदात्व एव शुकोऽभूत् |
| रश्मिवान् सुमना अभूत् | ... | ... | चन्द्रापीड़ः शूद्रकोऽभूत्। |

# अथ बाणभट्टस्य संक्षिप्तजीवनचरितम् *

## समयनिरूपणञ्च ।

आसीत् पुरा कान्यकुब्जप्रदेशे शोणनदस्य पश्चिमे भागे प्रीतिकूटनामा ग्रामः । तत्र वात्स्यगोत्रसम्भवः परमवेदविद्वैदिकक्रियानिपुणश्च कुबेरनामा कश्चित् पण्डितप्रवरो बभूव । तस्य पुत्रः पाशुपतः (१) तदात्मजश्चार्थपतिस्तस्य चैकादश (२) पुत्रा आसन्, तेषामष्टमश्चित्रभानुस्तु राज्यदेव्यभिधानायां भार्य्यायामस्माकं महाकविमुकुटमणिं बाणं नाम पुत्रं लेभे । बाणस्य तु शैशव एव राज्यदेवी परलोकं गता । अथ चित्रभानुरेव तं बाणं मातृवत् परिपोषयन् यथाविधि संस्कृत्य तस्य चतुर्दशवर्षे वयसि लोकान्तरमगमत् । ततस्तु यौवनस्वभावसुलभदोषेण साहचर्य्यदोषेण च दूषितो बाण ईशानप्रभृतिभिः प्रियसहचरैः स्वदेशान्निर्गतो विविधान् देशान् पर्य्यटन् अनेकैर्नृपतिभिर्बहुभिरुपाध्यायैः सह साक्षात् कुर्वन् विविधं ज्ञानमुपार्ज्य पुनः स्वदेशमागतः । अथ कदाचित् कान्यकुब्जेश्वरो हर्षवर्द्धनो दूतमुखेन बाणमाहूतवान् । उपस्थिते च बाणे राजा दुर्जनेभ्यः श्रुततद्दुश्चरितः "महाभुजङ्गः (३) खल्वयमागतः" इति कश्चन सदस्यं प्रत्यभिदधौ । तेन चापमानमात्मनो मन्यमानो बाणः "निजविचारेण निर्णीयतां सर्वम्" इत्यभिधायावतस्थे । परन्तु सभासद्भिः सुधीभिः सह शास्त्रतर्के तं महाविचक्षणतया परिचिन्वानो राजा स्वसभायां प्रधानोपाध्यायपदमध्यारोपयामास । तस्य च सभायां सूर्य्यशतक-रचयिता मयूरभट्टो मातङ्गदिवाकरनामापरश्च कविरासीत् । अथ कदाचिद्बन्धुभिरनुरुद्धो बाणो हर्षचरितं नाम हर्षवर्द्धनस्य जीवनचरितं प्रणीय दृश्यमानांशान्तं कादम्बरीपूर्वभागं प्रणयन्नेव परलोकं गतः । अथ तु बाणनन्दनो भूषणभट्टो नाम कादम्बर्य्याः परभागं प्रणीतवान् ।

हर्षवर्द्धनस्तु ६०६ खृष्टाब्दमारभ्य ६४८ खृष्टाब्दपर्य्यन्तं कान्यकुब्जराज्यं शशास ; (४) सुतरां खृष्टीयषष्ठशताब्दीशेषभागात्तदीयसप्तमशताब्दीपूर्वार्द्धपर्य्यन्तो बाणभट्टस्यावस्थितिसमयो निर्णीयत इति ।

---

* हर्षचरितस्यानुक्रमणिकायामिदं दृश्यते ।

(१) बाणस्तु कादम्बर्य्यां निजवंशवर्णने नामेदं नाभिहितवान् ।

(२) "सोऽजनयद्भृगुं हंसं शुचिं कविं महीदत्तं धर्म्मं जातवेदसं [illegible] त्र्यक्षम् अहिदत्तं विश्वरूपञ्चेत्येकादश रुद्रानिव सोमामृतरसशीकरच्छुरितमुखान् पवित्रान् पुत्रान् [illegible] चरितम् ।

(३) भुजङ्गः षिङ्गः पारदारिक इति यावत् ।

(४) चीनदेशीयपरिव्राजकस्य हियुयेनसाङ्गस्य भारतपरिभ्रमणवृत्तान्तादिदं लभ्यते । अत्र त्वपराण्यपि सन्ति [illegible]णानि ।

# सूचीपत्रम् ।


| विषयः | पृष्ठाङ्कः | पङ्क्त्यङ्कः |
|---|---|---|
| मङ्गलाचरणम् | १ | १ |
| सुजनदुर्जनयोः स्तुतिनिन्दे | ४ | ” |
| कथाप्रशंसा | ५ | ” |
| कविवंशवर्णनम् | ६ | ३ |
| शूद्रकवर्णनम् | १२ | १ |
| चण्डालकन्यावर्णनम् | ३४ | ४ |
| शुकप्रशंसा | ४२ | ५ |
| शूद्रकसभाभङ्गः | ४८ | १ |
| शूद्रकस्नानम् | ५३ | ५ |
| शूद्रकाह्निकादिकम् | ५९ | १ |
| सभामण्डपगमनम् | ६१ | १ |
| शुककथारम्भः | ६५ | २ |
| विन्ध्याटवीवर्णनम् | ६७ | ४ |
| अगस्त्याश्रमवर्णनम् | ७५ | ” |
| पम्पासरोवर्णनम् | ८२ | १ |
| शाल्मलीतरुवर्णनम् | ८७ | ३ |
| शुकोत्पत्तिः | ९१ | ” |
| प्रभातवर्णना | ९६ | १ |
| शबरमृगया | १०२ | ” |
| शबरसैन्यवर्णना | १०९ | ६ |
| शबरसेनापतिवर्णना | १११ | ” |
| शबरचरितसमालोचना | १२२ | ५ |
| शुकशावकनिपातः | १२५ | ७ |
| पिपासावस्थावर्णनम् | १३० | ३ |
| हारीतवर्णना | १३७ | १ |
| शुकजलपानादिकम् | १४३ | ४ |
| जाबाल्याश्रमवर्णना | १४६ | २ |
| जाबालिवर्णना | १६० | ” |
| [illegible]विषयालोचना | १७८ | ४ |

| विषयः | पृष्ठाङ्कः | पङ्क्त्यङ्कः |
|---|---|---|
| सन्ध्यावर्णना | १८२ | ३ |
| उज्जयिनीवर्णना | १९२ | १ |
| तारापीडवर्णना | २११ | ” |
| शुकनासवर्णना | २२२ | ३ |
| राजभोगविलासः | २२६ | ६ |
| शुकनासगौरवम् | २३४ | ४ |
| अनपत्यताविषादः | २३७ | ५ |
| पुत्रलाभार्थं विलासवतीव्यवहारः | २५१ | ४ |
| स्वप्नविषयालोचना | २५६ | १ |
| राज्ञीगर्भधारणम् | २५८ | ८ |
| राज्ञीगर्भवार्त्तागमः | २६० | ३ |
| चन्द्रापीडजन्मोत्सवः | २७२ | १ |
| सूतिकागृहवर्णना | २७५ | ६ |
| बालकवर्णना | २८० | ” |
| शुकनासपुत्रजन्मोत्सवः | २८५ | ३ |
| चन्द्रापीडशिक्षा | २९१ | ७ |
| चन्द्रापीडयौवनोदयः | २९६ | ७ |
| राजादेशनिवेदनम् | २९८ | ५ |
| इन्द्रायुधवर्णना | ३०२ | १ |
| विद्यालयाच्चन्द्रापीडनिर्गमः | ३१३ | ” |
| चन्द्रापीडप्रवेशे नागरीणां भावालापाः | ३१७ | ४ |
| चन्द्रापीडदर्शने नागरीणां भावालापाः | ३१९ | १ |
| राजवाटीवर्णना | ३३२ | ४ |
| चन्द्रापीडस्य मातापितृदर्शनम् | ३४१ | ३ |
| चन्द्रापीडस्य शुकनास-मनोरमासाक्षात्कारः | ३७० | ४ |
| प्रदोषवर्णना | ३७७ | ” |
| चन्द्रापीडमृगया | ३८४ | २ |
| चन्द्रापीडविश्रामादिकम् | [illegible] | १ |
| पत्रलेखावर्णना | ३९१ | ” |

| विषयः | पृष्ठाङ्कः | पङ्क्त्यङ्कः |
|---|---|---|
| पत्रलेखापरिचयः | ३९४ | ५ |
| शुकनासोपदेशः | ३९८ | ५ |
| चन्द्रापीड-यौवराज्याभिषेकः | ४३१ | २ |
| चन्द्रापीडदिग्विजययात्रा | ४३४ | १ |
| चन्द्रापीडदिग्विजयप्रस्थानम् | ४३८ | ४ |
| दिग्विजयवर्णना | ४६२ | १ |
| किन्नरमिथुनाप्राप्तिनिर्वेदः | ४६४ | ४ |
| जलान्वेषणम् | ४६८ | ५ |
| अच्छोदसरोवर्णना | ४७३ | ४ |
| स्नानजलपानविश्रामाः | ४८५ | ३ |
| शिवसिद्धायतन-वर्णना | ४८६ | ७ |
| महाश्वेतावर्णना | ४९७ | ५ |
| महाश्वेतात आतिथ्य-स्वीकारः | ५१४ | ८ |
| महाश्वेताजन्मवृत्तान्तः | ५२० | ७ |
| महाश्वेतास्नानविचरणवृत्तान्त | ५३० | ३ |
| पुण्डरीकवर्णना | ५३५ | ४ |
| पुण्डरीकदर्शने महाश्वेताया अवस्था | ५४४ | १ |
| महाश्वेतादर्शने पुण्डरीकस्यावस्था | ५५० | १ |
| पुण्डरीकजन्मवृत्तान्तः | ५५३ | २ |
| कुसुममञ्जरीलाभवृत्तान्तः | ५५६ | ४ |
| पुण्डरीकाय कपिञ्जलोपदेशः | ५६० | ७ |
| मदनाकुलमहाश्वेतावस्था | ५६२ | २ |
| कामार्त पुण्डरीकावस्थावर्णना | ५७७ | ७ |
| पुण्डरीककपिञ्जलयोरुक्ति-प्रत्युक्ती | ५८८ | १ |
| पुण्डरीकसन्तापशान्तिचेष्टा | ५९४ | ४ |
| महाश्वेतायाः स्वकर्तव्यालोचना | ६०२ | २ |
| महाश्वेताया अभिसारः | ६१० | २ |
| उपरत पुण्डरीकवर्णना | ६२० | ५ |
| महाश्वेताविलापः | ६२६ | ३ |
| महाश्वेतावृत्तान्तोपसंहारः | ६३० | १ |
| चन्द्रापीडकर्तृकमहाश्वेतासान्त्वनम् | ६४४ | ७ |
| उभयोः सन्ध्यावन्दनम् | ६५४ | ४ |
| कादम्बरीजन्म | ६५७ | ६ |
| केयूरकेण सह तरलिकाया आगमनम् | ६६१ | ९ |
| कादम्बरीप्रत्युत्तरम् | ६६७ | ७ |
| कुमारीपुरवृत्तान्तः | ६७० | ६ |
| कादम्बरीवर्णना | ६८६ | ५ |
| कादम्बरी चन्द्रापीडयोः परस्परभावावेशः | ७०३ | ३ |
| चन्द्रापीड परिचयः | ७०५ | ५ |
| चन्द्रापीडदर्शने कादम्बर्या भावावेशः | ७०८ | ३ |
| शुकसारिकाभ्यां कौतुकम् | ७१७ | ९ |
| कादम्बर्याः स्वविकारजा चिन्ता | ७२२ | ७ |
| उत्कण्ठित-चन्द्रापीड-चिन्ता | ७२९ | ९ |
| कादम्बर्याश्चन्द्रापीडदर्शनप्रकारः | ७३३ | ३ |
| चन्द्रापीडाय कादम्बर्या उपहारसमर्पणम् | ७३५ | ५ |
| कादम्बर्याः स्वविकारप्रदर्शनम् | ७४७ | ९ |
| पुनः सन्ध्यावर्णना | ७५० | ३ |
| कादम्बरीं प्रति मदलेखाचन्द्रापीडयोरालापः | ७५५ | ९ |
| चन्द्रापीडस्य कादम्बरीदर्शनाय गमनम् | ७५९ | ९ |
| चन्द्रापीडस्य कादम्बरीमहाश्वेतासाक्षात्कारः | ७६१ | ९ |
| चन्द्रापीडप्रस्थानम् | ७६४ | ६ |
| कादम्बरीसंवादसंग्रहः | ७६७ | ३ |
| कादम्बर्या भवने चन्द्रापीडस्य पुनःप्रयाणम् | ७७७ | ६ |
| कामार्त कादम्बरीवर्णना | ७८८ | ५ |
| कादम्बरीचन्द्रापीडयोर्व्यवहारः | ७९५ | ९ |
| चन्द्रापीडस्य समभिभाषितम् | ७९९ | ९ |
| चन्द्रापीडप्रस्थानम् | ८०३ | ३ |
| उज्जयिनीं प्रति चन्द्रापीडप्रस्थानम् | ८०५ | ५ |
| शून्याटवीरमणीयतावर्णना | ८०९ | ७ |
| चण्डिकावर्णना | ८१४ | ६ |
| जरद्द्रविडधार्मिकवर्णना | ८२२ | ३ |
| चन्द्रापीडस्योज्जयिनीप्रस्थानम् | ८३० | ६ |
| चन्द्रापीडस्य बान्धवसन्दर्शनम् | ८३४ | ९ |
| पत्रलेखातः कादम्बरीवृत्तान्तश्रवणम् | ८३६ | ५ |

# अथ बाणभट्टस्य वंशावली।




* केषाञ्चिन्मते 'भूषणबाण,' अपरेषां मते 'पुलिन्द:' तदन्येषाञ्च मते 'पुलिन:' इति बाणभट्ट-तनयस्य चत्वारि नामानि परिलक्ष्यन्ते।

# अथ कादम्बरीकथासंक्षेपः ।

आसीत् किल विदिशाभिधानायां राजधान्यामशेषगुणाकरो राजा शूद्रको नाम । तस्यैकदा सभामण्डपगतं परमरूपवती प्रतीहारी कस्याश्चिच्चाण्डालदारिकाया आगमनं न्यवेदयत् । अथ राजादेशेन प्रतीहारी प्रवेशिता सा केनचिद्वृद्धेन शिशुना च समागत्य राजानं प्रणनाम । वृद्धस्तु पञ्जरगतं वैशम्पायननामानं शुकमेकमवस्थाप्य विहृत्य च तदीयगुणावलीमपससार । अपसृते च तस्मिन् वैशम्पायनो दक्षिणं चरणमुत्तोल्य—

"स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः । चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम् ।।"

इत्युक्त्वा राजानं सवर्द्धयामास । राजा तु सह सदस्यैरतिशयं विस्मयमापन्नः शुकमन्तःपुरं प्रवेशयितुमादिश्योदतिष्ठत् । कृतस्नानाह्निकभोजनश्च बृहस्पतिकल्पेन कुमारपालितनाम्ना मन्त्रिवरेण सह सुखोपविष्टस्तं शुकमानाय्य तदीयं सर्ववृत्तान्तमभिधातुमनुरुरोध । अथासौ कथयामास—"अस्ति विन्ध्याटवी नाम काचिदरण्यानी । तत्र कस्मिन् विशाले शाल्मलीवृक्षे मां प्रसूय परलोकं गतायां मे जनन्यां जराजीर्णो जनको मामपालयत् । कदाचित् मातङ्गनामनि शबरसेनापतौ प्रस्थिते तत्सेनान्तर्गतः कश्चिद्वृद्धशबरस्तं शाल्मलीवृक्षमारुह्य पक्षपुटेन मामाच्छादयन्तं पितरं मे गतासुं विधाय शुष्कपर्णपुञ्जोपरि समपातयत् । अहन्तु भाग्यवशाज्जीवितो जलमन्विष्यन् चलितो मुनिकुमारेणासाधारणमहिम्ना हारीतनाम्ना स्वपितुर्महर्षेर्जाबालेराश्रममुपनीतः । स तु महर्षिर्मामवलोक्य इमन् पृष्टश्च मुनिभिः कृतकृत्यो रात्रौ सविस्तरमुवाच । (कथामुखम्) ।

"आसीदवन्तीदेशे राजधान्यामुज्जयिन्यां महाराजाधिराजस्तारापीडो नाम । तस्य महिषी विलासवती, सर्वगुणाकरो मन्त्री शुकनासस्तस्य च पत्नी मनोरमा नामाभूत् । चिरमनपत्यताविषण्णायां विलासवत्यां विविधं व्रतमाचरन्त्यां कदाचित् राजा तन्मुखे प्रविशन्तं चन्द्रं स्वप्ने ददर्श । शुकनासोऽपि स्वप्ने केनचिद्विप्रेण निहितं मनोरमायाः क्रोडे पुण्डरीकमेकमद्राक्षीत् । अथ विलासवती चन्द्रापीडं नाम पुत्रं सुषाव, मनोरमापि वैशम्पायनं नाम । तौ च कुमारौ परस्परपरमसौहार्दसम्पन्नौ राज्ञो यत्नेन सकलविद्यापारमुपगतौ । ततस्तु चन्द्रापीडो राजादेशाद्बलाहकनाम्ना सेनापतिना समुपनीतमिन्द्रायुधनामानमश्ववरमधिरुह्य विद्यालयात् राजधानीमाजगाम । जनकजनन्यादिसन्दर्शनानन्दितो मृगया विधायागतः पत्रलेखाप्राप्तिमुदितः शुकनासेन विविधमुपदिष्टो राज्ञा च यौवराज्येऽभिषिक्तो दिग्विजयाय प्रतस्थे । क्रमशश्चैव सर्वा दिशो विदिशश्च विजित्य हेमकूटाख्यां किरातानामावासभूमिं विश्रामहेतोरधितिष्ठन् कदाचिदेकाकी चन्द्रापीड इन्द्रायुधमारुह्य मृगयानिर्गतः किन्नरमिथुनमालोक्य तद्ग्रहणायानुधावन् पञ्चदश योजनानि ययौ । तस्मिंश्च किन्नरमिथुने सन्निहितमुत्तुङ्गशैलशृङ्गमारूढे नितान्तनिर्वेदमापन्नः परिश्रान्तः पिपासातुरश्च जलमन्विष्यन् विशालमनोहरमच्छोदं नाम सरो दृष्टवान् । कृतावगाहनपानश्च तत्तीरे विश्राम्यन् वीणानिनादसमेतं मधुरं गानमाकर्ण्य तदनुसृत्य गतः परमसुन्दरीं योगिनीं शिवान्तिकगतामालोकयत् । ततश्च लब्धातिथिसत्कारेण तेन स्पृष्टा सा समभाषत—

"अरिष्टातनयो गन्धर्वराजो हंसो मे जनकः, सोमसयूखसम्भवकुलजाता गौरीदेवी च जननी, नाम च मे महाश्वेतेति । एकदा तु समतीतशैशवा स्नातुमनसा मात्रा सहाच्छोदसरसि स्नातुमागता कुतोऽप्यलौकिकं सौरभमाघ्राय तदन्वेषणाय गच्छन्ती केनचिदन्येन कुमारेण सहितं द्वितीयमिव मन्मथं मुनिकुमारमेकमालोक्य 'कोऽयं युवा, किमभिधाना चेयं कुसुममञ्जरी' इति द्वितीयं कुमारमपृच्छम् । स पुनरवादीत्—"दिव्यस्य महर्षेः श्वेतकेतोर्निरुपमरूपमोहितायाः श्रियो देव्या जातोऽयं तस्यैव महर्षेः पालितपुत्रः, पुण्डरीकजाततया पुण्डरीक इत्यस्य

गम  इयन्तु पारिजातकुसुममञ्जरी नन्दनवनदेवतया सादरमुपहृता। सोऽपि कुमारः—"चपले! किमनेन प्रश्नप्रपञ्चेन, यदि रोचते गृह्यतामियम्" इत्युक्त्वा तां मञ्जरीं मम कर्णे निवेशयन् पतितामपि इस्तादक्षमालिकां नाज्ञासीत्। अहन्तु तां मालामादाय प्रास्थिता। अत्रान्तरे द्वितीयेन तु कुमारेण तं खलु मन्मथविकारमवलोक्य तिरस्क्रियमाणः स कुमारः समुपेत्य मालां ययाचे। अहन्तु स्वकीयमेव स्थूलमुक्तामयं हारं स्वकण्ठादुन्मुच्य तस्मै दत्त्वा तां पुनः स्फटिकजपमालां कण्ठे निधाय कृतस्नाना जनन्या सह स्वगृहमागच्छम्। अथ मुहूर्तानन्तरं परिचारिका मे तरलिका नाम समागत्य तेन कुमारेण कृतं मत्परिचयादिप्रश्नवृत्तान्तमचाख्यत्, अददाच्च पत्रिकाम्, तत्र चेयमार्या लिखितासीत्—

'दूरं मुक्तालतया बिससितया विप्रलोभ्यमानो मे। हंस इव दर्शिताशो मानसजन्मा त्वयानीतः।'

दिवावसाने तु कपिञ्जलः समागत्य समुत्कण्ठितहृदया मां तस्य कुमारस्य मन्मथव्यथामावेदयत् स। मातरमागच्छन्तीमवेत्य त्वरितं प्रातिष्ठत। जनन्यान्तु समागत्य प्रस्थितायाम्, अतीतायाञ्च सन्ध्यायाम्, उदिते चन्द्रमसि, निभृतमहं तरलिकाद्वितीया तमभिसरन्ती कपिञ्जलविलापमाकर्णयन्ती द्रुतमुपेत्य मन्दभाग्या तं खलु कुमारमुपरतमद्राक्षम्। अत्रान्तरे चन्द्रमण्डलादवतीर्य कश्चन महापुरुषः—"वत्से! महाश्वेते! न त्वया जीवनं परित्याज्यम्, पुनरप्यनेन सह ते भविष्यति समागमः" इत्यभिधाय तं मृतमुत्क्षिप्य गगनमुदतिष्ठत्। शोकपरवशः कपिञ्जलोऽपि बद्धपरिकरस्तमन्वधावत्। अहन्तु विस्मिता च विषण्णा च संसारस्य क्षणभङ्गुरतामालोकयन्ती व्रतमिदमवलम्बितवती" इति।

अथ "सा तरलिका क्व गता" इति चन्द्रापीडेन पृष्टा सा पुनरवादीत् "मदिरादेव्यां जाता गन्धर्वराजस्य चित्ररथस्य कन्या कादम्बरी नाम द्वितीयमिव मे हृदयम्। सा च मदार्त्तया "सशोकायां महाश्वेतायां नाहमात्मनः पाणिं ग्राहयिष्यामि" इति प्रतिजज्ञे। गन्धर्वराजानुरोधेन तु कादम्बर्याः पाणिग्रहणं सम्प्रतिसाधनाय तरलिकामहमद्यैव प्रेषितवतीति।

अथ परेद्युः प्रभात एव तरलिकया सह केयूरको नाम कश्चित् कादम्बरीभृत्यः समागत्य तस्याः पाणिग्रहणासम्मतिं न्यवेदयत्। ततो भगवत्यनुकम्पया महाश्वेतया सह चन्द्रापीडो गन्धर्वराजधानीमुपेत्य असामान्यरूपलावण्यवतीं कादम्बरीं पश्यन्नमुह्यत। कादम्बर्यपि तथैव परिमुह्यन्ती यथावसरं दुकूलयुगलं शेषनामानमेकमनर्घ्यं हारञ्च चन्द्रापीडायोपजहार। स तु कादम्बर्या भावविमोहितस्तदीयहृदयेन सह अच्छोदसरस्तीरमागत्य स्वकीयमेवागतं स्कन्धावारमालोक्य प्रविश्य च वैशम्पायनाय सर्वं न्यवेदयत्। अथ परेद्युः प्रभाते केयूरकेण समुपेत्य कादम्बरीदशां वर्णयता सहैव चन्द्रापीडः पत्रलेखामादाय गत्वा हिमगृहगतां कामाकुलां कादम्बरीं पश्यन् व्यङ्ग्यार्थपूर्णं ललितमालापं विधाय, तदनुरोधेन पत्रलेखां तत्रैवावस्थाप्य स्कन्धावारमागतः प्राप्य च पितुः पत्रम्, पत्रलेखामादाय गन्तुं सेनापतिपुत्रं मेघनादनामानं स्थापयित्वा उज्जयिनीमयासीत्। कतिपयदिनानन्तरन्तु मेघनादेन सह पत्रलेखा गत्वा चन्द्रापीडाय कादम्बर्या अवस्थामुक्तिविशेषञ्च न्यवेदयदिति। (पूर्वभागः)।

# अथ स्वरूपनायकादिनिरूपणम् ।

कादम्बरी नामेदं कथाकाव्यम् । यथा साहित्यदर्पणे—

"कथायां सरसं वस्तु गद्यैरेव विनिर्मितम् ।
क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके ॥
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम् ॥"

अत्र मुक्तकादीनि चतुर्विधान्येव गद्यानि सन्ति, किन्तु उत्कलिकाप्रायमेव गद्यं बहुलम् । तथा च तत्रैव—

"वृत्तबन्धोज्झितं गद्यं, मुक्तकं वृत्तगन्धि च । भवेदुत्कलिकाप्रायं चूर्णकञ्च चतुर्विधम् ॥
आद्यं समासरहितं वृत्तभागयुतं परम् । अन्यद्दीर्घसमासाढ्यं तुर्यञ्चाल्पसमासकम् ॥"

अनुकूलो धीरोदात्तलक्षणश्चन्द्रापीडो नायकः । यथा—

"अनुकूल एकनिरतः ।"
"अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः ।
स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः ।"

कादम्बरी तु कन्या परकीया मुग्धा नायिका । यथा—

"कन्या त्वजातोपयमा सलज्जा नवयौवना ।"
"परकीया द्विधा प्रोक्ता परोढा कन्यका तथा ।"
प्रथमावतीर्णयौवनमदनविकारा रतौ वामा ।
कथिता मृदुश्च माने समधिकलज्जावती मुग्धा ॥'
परिणयात् परन्तु (उत्तरार्द्धे) स्वकीया मध्या च मन्तव्या ।

विप्रलम्भशृङ्गारः प्रधानरसस्तत्र च पूर्वार्द्धे उत्तरार्द्धस्य कियदंशे च पूर्वरागरूपः, उत्तरार्द्धशेषे तु करुणरूपः । सम्भोगशृङ्गारोऽपि क्वचिद् दृश्यते ।

"यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ ।"
"श्रवणाद्दर्शनाद्वापि मिथःसंरूढरागयोः ।
दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते ॥"
"यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये ।
विमनायते यदैकस्तदा भवेत् करुणविप्रलम्भाख्यः ॥"

करुणहास्यादयोऽन्येऽपि रसाः सन्ति ।

बाहुल्येन माधुर्यं गुणः । यथा—

"चित्तद्रवीभावमयो ह्लादो माधुर्यमुच्यते । सम्भोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात् ।" प्रसादो गुणोऽपि न विरलः ।

अतिरिक्तेण पाञ्चाली रीतिः। यथा च—

"वर्णैः शेषैः पुनर्द्वयोः। समस्तपञ्चषपदो बन्धः पाञ्चालिका मता॥"

अन्या अपि रीतयोऽत्राधिक्याभावेन परित्यज्यन्ते।

---

तदयं संग्रहश्लोकः—

चन्द्रापीडोऽनुकूलः सकलगुणधरो नायकोऽस्मिन्नुदात्तः
नेत्री कन्यान्यदीया मृदुललिततनुर्मुग्धकादम्बरी च।
पाञ्चाली नाम रीति विंलसति बहुला विप्रलम्भो रसोऽङ्गी
माधुर्य्याख्यो गुणो वा कविमुकुटमणेः काव्ययोरम्यमेतत्॥

---



# कादम्बरी ।



## पूर्वभागः ।

### मङ्गलाचरणम् ।

—:०:—

**रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे**
**अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः ॥१॥**

---

**नमो गणेशाय ।**

शिरसि सुरसरिद्गङ्गा चित्रभानुश्च भाले
वपुषि दधदनन्तः सागरान्तामनन्ताम् ।
उरसि च जगदम्बामम्बरं सन्ततं यः
मनसि चिरमटीयात् स शिवः श्रीशिवः सः ॥१॥

ज्योतिरिङ्गणरुचा परिमोहात् यामिनीविकसनं प्रचिकीर्षुः ।
मिलयाऽस्य जलधिञ्च तितीर्षुः देवदेव ! भव मेऽद्य सहायः ॥२॥

कादम्बरीरसनिपाननितान्तमत्तो जानाति कोऽपि न जनो गुणदोषमार्गम् ।
तस्मात्तदीयविवृतावपि टीकाकर्ता श्रीमानिह प्रयतते हरिदासशर्मा ॥३॥

मूलानुगता सरला सुगाढ़ा सुपल्लवा कल्पलताऽभिधाना ।
सहृन्मनोनन्दनमध्यवेद्यं टीका प्रदेयादभिलषितार्थं न ॥४॥

अथ तत्रभवान् महाकविर्बाणभट्टः प्रारिप्सितपरिसमाप्तये "मङ्गलाचरणं शिष्टाचारात् फलदर्शनात् श्रुतितश्च" इति सांख्यसूत्रादिबोधितकर्तव्यताकतया जगत्कारणस्य सगुणब्रह्मणो नमस्कारं कुरुते—

रजोजुषे इति । प्रजायन्ते इति व्युत्पत्त्या प्रजापदमत्र जन्यपदार्थमात्रोपलक्षणम् । तथा च प्रजानां जगतां जन्मनि उत्पत्तिकाले रजोजुषे रजोगुणावलम्बिने चतुराननमूर्तये, स्थितौ प्रजानां परिपालनसमये

---

যিনি জগতের উৎপত্তির বেলায় রজোগুণাবলম্বী ব্রহ্মা, পরিপালনের সময় সত্ত্বগুণাধিষ্ঠিত বিষ্ণু, আবার প্রলয়কালে তমোগুণশালী রুদ্র ; সৃষ্টি, স্থিতি ও প্রলয়ের কারণ বেদময় মায়াশালী সেই পরব্রহ্মকে নমস্কার করি ॥১॥

जयन्ति बाणासुरमौलिलालिता दशास्यचूडामणिचक्रचुम्बिनः ।
सुरासुराधीशशिखान्तशायिनो भवच्छिदस्त्र्यम्बकपादपांशवः ॥२॥

---

सत्त्ववृत्तये सत्त्वगुणाधिष्ठिताय विष्णुस्वरूपाय, तथा प्रलये प्रजानां विनाशकारिणे तमःस्पृशे तमोगुणभाजे रुद्ररूपाय, सर्गस्थितिनाशहेतवे जगतां सृष्टिस्थितिसंहारकारणीभूताय, त्रयीमयाय ऋग्यजुःसामरूपाय, त्रिगुणात्मने त्रिगुणं माया आत्मनि यस्य तस्मै मायाशालिने, अजाय नित्याय परब्रह्मणे नम इति वास्तविकनमस्कारः ।

अत्र रजोजुषे सर्गहेतवे, सत्त्ववृत्तये स्थितिहेतवे, तमःस्पृशे नाशहेतवे इति यथासंख्येनान्वयसम्भवाद् यथासंख्यमलङ्कारः ।

पद्ये तेषु वंशस्थविलं वृत्तं "वदन्ति वंशस्थविलं जतौ जरौ" इति लक्षणात् ।

रजोगुणादीनां लक्षणमुक्तं साङ्ख्यकारिकायाम्—
"सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः ।
गुरुवरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥"

ब्रह्मणः सर्गादिहेतुत्वे प्रमाणन्तु "जन्माद्यस्य यतः" इति वेदान्तसूत्रं, "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" इति श्रुतिः, "ब्रह्मत्वे सृजते लोकान् विष्णुत्वे पालयत्यपि । रुद्रत्वे संहरत्येव तिस्रोऽवस्थाः स्वयम्भुवः ।" इति स्मृतिश्च ।

हेतुत्वञ्चास्य निमित्तत्वमुपादानत्वञ्चावगन्तव्यम् । तथा च वेदान्तसूत्रं "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" । "प्रकृतिश्च उपादानकारणञ्च ब्रह्माभ्युपगन्तव्यं निमित्तकारणञ्च" इति शाङ्करभाष्यञ्च ।

"चत्वारि शृङ्गास्त्रयोऽस्य पादाः" इत्यादिश्रुतेः "वेद एव परं ब्रह्म" इत्यादिस्मृतेश्च ब्रह्मणस्त्रयीमयत्वं, "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ।" इति श्रुतेः "मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम् । अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥" इति साङ्ख्यप्रवचनभाष्यधृतस्मृतेश्च मायाधिष्ठानकारिणो ब्रह्मणस्त्रिगुणात्मकत्वमवगन्तव्यमिति संक्षेपः ॥१॥

"शाकल्य शङ्करादिकम्" इति श्लोकैकांशिसन्ताप्यकरणोपयोगिज्ञानलाभाय चरणरेणूत्कर्षप्रतिपादनव्याजेन शङ्करं स्मरति जयन्तीति । बाणासुरस्य बाणनाम्नो महाशैवस्य असुरस्य मौलिना मुकुटेन लालिताः नमस्कारकाले आदरेण गृहीताः, दशास्यचूडामणीनां रावणकिरीटरत्नानां चक्रं समूहं चुम्बन्ति प्रणामकाले स्पृशन्ति ये ते । सुरासुराधीशानां देवासुरपतीनां शिखान्तेषु चूडाग्रभागेषु शेरते प्रणतिकाले स्थानं लभन्ते ये ते, तथा भवच्छिदः पुनर्जन्मनिवर्त्तकाः मोक्षोपयोगिज्ञानजननद्वारा संसारक्लेशनिवर्त्तका इत्यर्थः, त्र्यम्बकस्य त्रिलोचनस्य शिवस्य पादपांशवः चरणधूलयो जयन्ति सर्वोत्कर्षेण वर्त्तन्ताम् । "लोट्लङ्क्षिवन्ति" इति वचनात् लट् । उत्कर्षप्रतिपादनेन नमस्कार आक्षिप्यते ।

अत्र उत्कर्षप्रतिपादनकार्यं प्रति बाणासुरमौलिलालनादिकारणचतुष्टयोपन्यासात् समुच्चयोऽलङ्कारः वृत्त्यनुप्रासश्चैतयोः संसृष्टिः ॥२॥

---

অসুররাজবাণকর্ত্তৃক আদরে মস্তকে পরিগৃহীত, রাক্ষসরাজ রাবণের মুকুটমণিসংস্পর্শী, দেবাধিপতি ও অসুরাধিপতিগণের কেশকলাপবর্ত্তী এবং সংসারযন্ত্রণাবিনাশী মহাদেবের চরণধূলির জয় হউক ॥২॥

উবাস যস্য শ্রুতিশান্তকল্মষে সদা পুরোডাশপবিত্রিতাধরে ।
সরস্বতী সোমকষায়িতোদরে সমস্তশাস্ত্রস্মৃতিবন্ধুরে মুখে ॥১১॥
জগুর্গৃহেঽভ্যস্ত(১) সমস্তবাঙ্ময়ৈঃ সসারিকৈঃ পঞ্জরবর্ত্তিভিঃ শুকৈঃ ।
নিগৃহ্যমাণা বটবঃ পদে পদে যজূংষি সামানি চ যস্য শঙ্কিতাঃ ॥১২॥

---

উবাসেতি। শ্রুতিভির্বেদৈঃ বেদপাঠৈরিত্যর্থঃ শান্তং বিনষ্টং কল্মষং পাপং যস্য তস্মিন্ নিত্যবেদপাঠেন বাচনিকপাপশূন্যে ইত্যর্থঃ। পুরোডাশেন অগ্নিহোত্রাদৌ হুতশেষেণ হবিষা পবিত্রিতৌ ভক্ষণকালে সংযোগেন পবিত্রীকৃতৌ অধরৌ ওষ্ঠৌ যস্য তস্মিন্। সোমেন সোমরসেন যজ্ঞে সোমরসপানেন কষায়িতং সুরভীকৃতম্ উদরম্ অভ্যন্তরং যস্য তস্মিন্। তথা সমস্তা যাঃ শাস্ত্রস্মৃতয়ঃ ব্যাসাদিপ্রণীতব্রহ্মসূত্রাদীনি শাস্ত্রাণি মন্বাদিপ্রণীতধর্ম্মসংহিতাশ্চ স্মৃতয়ঃ, তাসাং সৎপাঠৈরিত্যর্থঃ বন্ধুরং রম্যং তস্মিন্। যস্য কুবেরস্য মুখে বদনে সরস্বতী বাগ্দেবী সদা উবাস বসতি স্ম। এতেনাস্য নিত্যবেদপাঠিত্বং নিয়তযাজ্ঞিকত্বং সর্ব্বশাস্ত্রজ্ঞত্বঞ্চ প্রখ্যাপিতম্।

"পুরোডাশো হবির্ভেদে···হুতশেষে চ কীর্ত্তিত" ইতি বিশ্বঃ। "বন্ধুরং মুকুটে···ত্রিষু স্যাদ্রম্যনম্রয়োঃ" ইতি মেদিনী।

পুরোডাশেতি "মন্ত্রে শ্বেতবহোক্থশস্পুরোডাশো ণ্বিন্" ইতি নিপাতঃ। পবিত্রৌ কৃতাবিতি পবিত্রিতৌ, কষায়ং কৃতমিতি কষায়িতম্ উভয়ত্রাপি করোত্যর্থে ণিজন্তাৎ কর্ম্মণি ক্তঃ। স্মৃতীনাং শাস্ত্রান্তর্গতত্বেঽপি তাসাং ধর্ম্মপ্রতিপাদকতয়া প্রাধান্যসূচনার্থং পৃথক্ স্মৃতিপদমুপাত্তং গোবৃষন্যায়াৎ ॥১১॥

জগুরিতি। যস্য কুবেরস্য গৃহে বটবো ব্রাহ্মণবালকাঃ, অভ্যস্তম্ অনেকশঃ শ্রবণাৎ স্বায়ত্তীকৃতং সমস্তং সকলং বাঙ্ময়ং শাস্ত্রং যৈস্তৈঃ, পঞ্জরবর্ত্তিভিঃ সারিকাভিঃ, সহেতি সসারিকৈঃ শুকৈঃ কীরপক্ষিভিঃ পদে পদে প্রতিপদোচ্চারণে নিগৃহ্যমাণাঃ 'যুষ্মাভিরশুদ্ধং পঠিতম্, ইদন্তু এতাদৃশম্' ইত্যেবং পরাভূয়মানাঃ, অতএব শঙ্কিতাঃ পুনরপি শুকবর্গকর্ত্তৃকদোষোদ্ভাবনশঙ্কান্বিতাঃ সন্তঃ, যজূংষি যজুর্ব্বেদান্ সামানি সামবেদাংশ্চ জগুঃ পঠিতবন্তঃ। এতেন তস্য বিরতপ্রচুরশিষ্যাধ্যাপকত্বং সূচিতম্।

অত্র সসারিকৈঃ শুকৈস্তথা নিগ্রহাসম্বন্ধেঽপি তৎসম্বন্ধোক্তেরতিশয়োক্তিরলঙ্কারঃ ॥১২॥

---

বাগ্দেবী সর্ব্বদা যাঁহার মুখে বাস করিতেন, এবং বেদপাঠে যাঁহার মুখের বাচনিক পাপ বিনিষ্ট হইয়াছিল, যজ্ঞের অবশিষ্ট দ্রব্যভক্ষণে ওষ্ঠযুগল পবিত্র করিয়াছিল, যজ্ঞকালে সোমরস পান করায় মুখমধ্য সৌরভ সম্পন্ন হইত, আর যাঁহার মুখখানি সকলশাস্ত্র উচ্চারণ করিবার কালে সুন্দর দেখাইত ॥১১॥

অনবরত শ্রবণ করায় সকল শাস্ত্র যাহাদের মুখস্থ হইয়াছিল, এই জাতীয় পঞ্জরস্থিত শুক ও সারিকাগণকর্ত্তৃক পদে পদে পরাস্ত হইয়া ব্রাহ্মণবালকগণ, আশঙ্কিত চিত্তে যাঁহার গৃহে যজুর্ব্বেদ ও সামবেদ পাঠ করিত ॥১২॥

---

(১) স্মস্ত···।

हिरण्यगर्भो भुवनाण्डकादिव क्षपाकरः क्षीरमहार्णवादिव ।
अभूत् सुपर्णो विनतोदरादिव द्विजन्मनामर्थपतिः पतिस्ततः ॥१३॥
विवृण्वतो यस्य विसारि वाङ्मयं दिने दिने शिष्यगणा नवा नवाः ।
उषस्सु लग्नाः श्रवणेऽधिकां श्रियं प्रचक्रिरे चन्दनपल्लवा इव ॥१४॥
विधानसम्पादितदानशोभितैः स्फुरन्महावीरसनाथमूर्त्तिभिः ।
मखैरसंख्यैरजयत् सुरालयं सुखेन यो यूपकरैर्गजैरिव ॥१५॥

---

हिरण्येति । भुवनाण्डकात् ब्रह्माण्डात् द्विजन्मनां पतिः ब्राह्मणानामधिपतिः हिरण्यगर्भो ब्रह्मा इव, क्षीरमहार्णवात् द्विजन्मनां पतिः द्विजराजः क्षपाकरश्चन्द्र इव, विनतायास्तदाख्यायाः कश्यपभार्य्यायाः उदरात् द्विजन्मनां पतिः पक्षिश्रेष्ठः सुपर्णो गरुड इव, ततः कुवेरात् द्विजन्मनां पतिः ब्राह्मणश्रेष्ठः अर्थपतिः अर्थपतिनामा कश्चिदभूत् । ब्रह्मतुल्यतया वेदपारदर्शित्वं चन्द्रसाम्येन सर्वाह्लादकत्वं गरुडसादृश्येन च नारायणपरायणत्वं सूचितम् ।

अत्र मालोपमालङ्कारः । ब्रह्माण्डतो ब्रह्मण उत्पत्तौ प्रमाणं यथा मनुः "तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् यज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ।" ॥१३॥

विवृण्वत इति । दिने दिने प्रत्यहम् उषस्सु प्रभातकालेषु नवा नवा नूतना नूतनाः शिष्यगणाः चन्दनपल्लवाः चन्दनतरुकिसलयानि इव श्रवणे शास्त्रार्थाकर्णने रमणीनां कर्णे च लग्ना आसक्ताः सन्तः, विसारि विशालं वाङ्मयं शास्त्रं विवृण्वतः विवरणेनार्थं प्रकाशयतः अध्यापयत इत्यर्थः यस्य अर्थपतेः अधिकां श्रियं शोभां प्रचक्रिरे । अत्रोपमालङ्कारः ॥१४॥

विधानेति । यः अर्थपतिः, विधानेन वेदविध्यनुसारेण सम्पादितं कृतं यद्दानं धनवितरणं तेन शोभितैः अन्यत्र तु विधानेन भक्ष्याकवलेन सम्पादितं जनितं यद्दानं मदजलं तेन शोभितैः । स्फुरन्तः प्रज्वलन्तो ये महावीरा होमाग्नयः तैः सनाथाः सहिता मूर्त्तयः स्वरूपाणि येषां तैः, अन्यत्र तु स्फुरन्तः समरोत्साहेन स्पन्दमानाः ये महावीरा महायोद्धारः तैः सनाथा पृष्ठेन संयुक्ताः मूर्त्तयः शरीराणि येषां तैः ।

---

ভুবনকোষ হইতে ব্রহ্মার ন্যায়, ক্ষীরোদসমুদ্র হইতে চন্দ্রের ন্যায় এবং বিনতার উদর হইতে গরুড়ের ন্যায় সেই কুবের হইতে ব্রাহ্মণশ্রেষ্ঠ অর্থপতি জন্মগ্রহণ করিয়াছিলেন ।১৩।

কর্ণস্থিত চন্দনপল্লব রমণীগণের যেমন শোভাসম্পাদন করে, তেমন প্রতিদিন প্রভাতকালে নূতন নূতন ছাত্রগণ, শাস্ত্রার্থ শ্রবণে আসক্ত হইয়া বিস্তৃত শাস্ত্রসমূহের অধ্যাপনায় ব্যাপৃত যে অর্থপতির বিশেষ শোভা সম্পাদন করিত ।১৪।

যথাবিধি ধনবিতরণে পরিশোভিত, প্রজ্বলিতহোমাগ্নিসম্পন্ন এবং যূপবিশিষ্ট (খাদ্য দান করায় মদজল নিঃসৃত হইয়া যাহাদের শোভা জন্মায়, সমরোৎসাহে স্ফূর্ত্তিমান্ মহাবীরগণ যাহাদের উপরে আরোহণ করেন এবং যূপকাষ্ঠের ন্যায় যাহাদের শুড়, সেইরূপ) হস্তিতুল্য অসংখ্য যজ্ঞদ্বারা যিনি অনায়াসে স্বর্গলোক আয়ত্ত করিয়াছিলেন ।১৫।

स चित्रभानुं तनयं महात्मनां सुतोत्तमानां श्रुतिशास्त्रशालिनाम्।
अवाप मध्ये स्फटिकोपलामलं क्रमेण कैलासमिव क्षमाभृताम्॥१६॥
महात्मनो यस्य सुदूरनिर्गताः कलङ्कमुक्तेन्दुकलामलत्विषः।
द्विषन्मनः प्राविविशुः कृतान्तरा गुणा नृसिंहस्य नखाङ्कुरा इव॥१७॥

---

यूपान् पशुबन्धनस्तम्भान् कुर्वन्ति यज्ञार्थमवयवान् सम्पादयन्तीति यूपकरास्तैः, अन्यत्र तु यूपा इव कराः शुण्डा येषां तैः। गजेन्द्रैरिव अमर्त्यैः मखैर्यज्ञैः सुखेन अनायासेन सुरालयं स्वर्गं अजयत् आयत्तीकृतवान्। स्वर्गकामनया कृतैः बहुभिर्यज्ञैः स्वर्गलाभमवश्यम्भाविनमकरोदिति सरलार्थः।

अत्र पूर्णोपमानुप्राणिता समासोक्तिः कार्य्येण गजसैन्यैः परनगरविजयिनः कस्यचिन्नरपतेर्व्यवहारसमारोपात्।

“विषाणं हस्तिकवलः” इति वैजयन्ती। “होमाग्निस्तु महाज्वालो महावीरः प्रवर्ग्यकः।” इति भानुचन्द्रादिधृतः कोषः॥१५॥

स इति। सः अर्थपतिः, क्रमेण पुत्राणामुत्पत्तिक्रमेण, क्षमाभृतां गिरीणां मध्ये स्फटिकोपलैः स्फटिकमणिभिः अमलं निर्मलं धवलं कैलासमिव क्षमाभृतां क्षमागुणान्वितानां महात्मनां महाबुद्धीनां श्रुतिशास्त्रशालिनां वेदशास्त्रज्ञानां सुतोत्तमानाम् उत्कृष्टपुत्राणां मध्ये चित्रभानुं नाम तनयं पुत्रम् अवाप लेभे।

अत्रोपमाऽलङ्कारः।

अर्थपतेर्भृगुप्रभृतयः एकादश पुत्रास्तन्मध्ये चित्रभानुरष्टमः। तथा च हर्षचरिते “सोऽजनयद्भृगुं हंसं शुचिं कविं महीदत्तं धर्मं जातवेदसं चित्रभानुम् त्र्यक्षं अहिदत्तं विश्वरूपञ्चेत्येकादश रुद्रानिव सोमामृतरसशीकरच्छुरितमुखान् पवित्रान् पुत्रान्।”॥१६॥

महेति। सुदूरनिर्गताः बहुदूरदेशव्यापिनः, अन्यत्र तु आधिक्येन बहिर्भूताः। कलङ्केन हरिणलाञ्छनेन मुक्ता रहिता या इन्दुकला चन्द्रलेखा तद्वत् अमला त्विट् द्युतिर्येषां ते। इदमुभयत्रापि समानम्। तथा कृतं स्वमाहात्म्यादिभिः अन्तरं प्रवेशावकाशो यैस्ते, अन्यत्र तु कृतम् अन्तरं भेदो विदारणं यैस्ते। यस्य महात्मनः चित्रभानोर्गुणा दयादाक्षिण्यविद्यादयः, नृसिंहस्य नरसिंहमूर्त्तिधारिणो नारायणस्य नखाङ्कुरा अङ्कुरवद्धन्तो नखरा इव द्विषतां शत्रूणां मनोऽपि अन्यत्र तु द्विषः शत्रोर्हिरण्यकशिपोः, मनो हृदयं वक्षश्च प्राविविशुः प्रविशन्ति स्म। यस्य गुणाः शत्रूणामपि हृदयग्राहिण आसन् तन्माहात्म्यं किं नाम वर्ण्यमिति भावः।

अत्र पूर्णोपमालङ्कारः। तथा हि ‘द्विषन्मनः’ इत्यत्र अपिशब्दोऽवश्यं वक्तव्यः किन्तु नोक्त इति वाच्यानभिधानदोषः, स तु ‘द्विषन्मनोऽपि गुणाः कृतान्तराः’ इति पाठेन समाधेयः॥१७॥

---

সেই অর্থপতি, পর্ব্বতগণের মধ্যে স্ফটিকমণি-নির্ম্মল কৈলাস পর্ব্বতের ন্যায়, মহাবুদ্ধিমান্, ক্ষমাশীল ও বেদশাস্ত্রজ্ঞ উৎকৃষ্ট পুত্রগণের মধ্যে চিত্রভানুনামে পুত্র লাভ করিয়াছিলেন ॥১৬॥

যে মহাত্মার বহুদূরগামী ও নিষ্কলঙ্ক চন্দ্রকলার ন্যায় নির্ম্মলকান্তিশালী, গুণগ্রাম, নিজ

दिशामलीकालकभङ्गतां गत स्त्रयीवधूकर्णतमालपल्लवः ।
चकार यस्याध्वरधूमसञ्चयो मलीमसः शुक्लतरं निजं यशः ॥१८॥
सरस्वतीपाणि-सरोजसम्पुट-प्रमृष्टहोमश्रमशीकराम्भसः ।
यशोंऽशुशुक्लीकृतसप्तविष्टपा-त्ततः सुतो बाण इति व्यजायत ॥१९॥

---

दिशामिति । दिशां प्राच्यादीनां वधूरूपाणामिति तात्पर्यम्, अलीकेषु ललाटेषु ये अलकाश्चूर्णकुन्तलास्तेषां भङ्गतां रचनाविशेषरूपत्वं गतः प्राप्तः । त्रयी ऋग्यजुःसामवेदानां त्रयमेव वधूः तस्याः कर्णे तमालपल्लवः तमालतरुकिसलयस्वरूपः । उभयत्रापि स्वभावकृष्णवर्णत्वादिति भावः । मलीमसः स्वभावमलिनः यस्य चित्रभानोः, अध्वरधूमसञ्चयः यज्ञाग्निधूमसमूहः निजं स्वकीयं यशः स्वभावशुक्लां सुख्यातिं शुक्लतरं अतिशयेन शुक्लं चकार । विद्याविनयादिगुणग्रामजनिता सुख्यातिः नियतयज्ञानुष्ठानात् धर्म्माचारपरायणतया अपि प्रकामेव बहुलीबभूवेति समुदायार्थः ।

अत्र अध्वरधूमसञ्चये केशरचनाविशेषत्वारोपः प्रकृष्टः, दिक्षु वधूत्वारोपस्तु आर्थं इत्येकदेशविवर्त्ति रूपकं त्रय्यां वधूत्वारोपः धूमसञ्चये तमालपल्लवत्वारोपे निमित्तमिति परम्परितरूपकं तथा मलीमसो धूमसञ्चयो यशः शुक्लतरं चकारेति कारणगुणविरुद्धकार्य्योत्पत्तेर्विषमालङ्कारश्च, इत्येतेषामङ्गाङ्गिभावेन सङ्करः ।

“अलीकमप्रिये भाले वितथे—” इति हेमः ॥१८॥

सरस्वतीति । सरस्वत्या वाग्देव्या पाणिसरोजसम्पुटेन करकमलयुगलेन प्रमृष्टानि प्रोञ्छितानि होमश्रमस्य होमकर्म्मायासस्य शीकराम्भांसि बिन्दुभूतजलानि स्वेदजलबिन्दवो यस्य तस्मात् । तथा यशसः सुख्यातेः अंशुभिः किरणैः शुक्लीकृतानि सप्त विष्टपानि भूरादीनि सप्त भुवनानि येन तस्मात् । तस्माच्चित्रभानोः बाण इति प्रसिद्धः बाणनामा सुतः पुत्रः व्यजायत अभवत ।

अत्र सरस्वत्याः पाणिपद्मद्वयेन घर्म्मवारिबिन्दूनां प्रमार्जनासम्बन्धेऽपि तत्सम्बन्धोक्तेरेकातिशयोक्तिः, तथा यशोंऽशुभिः, सप्तभुवनानां शुक्लीकरणासम्बन्धेऽपि तत्सम्बन्धोक्तेर्द्वितीया चातिशयोक्तिरित्यनयोर्मिथो निरपेक्षत्वात् संसृष्टिः ।

“विष्टपं भुवनं जगत् ।” इत्यमरः ॥१९॥

---

মাহাত্ম্যে প্রবেশপথ পাইয়া অঙ্কুশ তুল্য বিদারণকারী নরসিংহের নখসমূহের ন্যায় শত্রুর হৃদয়েও প্রবেশ করিয়াছিল ॥১৭॥

যাঁহার যজ্ঞীয় অগ্নির মলিন ধূমসমূহ, দিগ্‌বধূগণের ললাটদেশে কেশরচনাস্বরূপ এবং বেদ-বধূর কর্ণে তমালপল্লবস্বরূপ হইয়া স্বকীয় যশকে সমধিক শুভ্রবর্ণ করিয়াছিল ॥১৮॥

সরস্বতীদেবী স্বকীয় পাণিকমলে যাঁহার হোমপরিশ্রম-জনিত ঘর্ম্মজলবিন্দুসকল মুছিয়া দিতেন এবং যাঁহার যশের কিরণ সপ্ত ভুবনকে শুক্লবর্ণ করিয়াছিল, সেই চিত্রভানু হইতে ‘বাণ’ নামে একটি পুত্র জন্মিয়াছিল ॥১৯॥

দ্বিজেন তেনাক্ষতকণ্ঠকৌণ্ঠ্যয়া মহামনোমোহমলীমসান্ধয়া।
অলব্ধবৈদগ্ধ্যবিলাসমুগ্ধয়া ধিয়া নিবদ্ধেয়মতিদ্বয়ী কথা॥২০॥

---

দ্বিজেনেতি। তেন দ্বিজেন বিপ্রেণ বাণেন, অক্ষতম্ অবিনষ্টং কণ্ঠকৌণ্ঠ্যং বাগ্বিন্যাসে কণ্ঠস্য মান্দ্যং বাল্যস্বভাবসুলভবাগ্বৈকল্যং যস্যাং তয়া, মহান্ যো মনোমোহঃ বাল্যেন চিত্তবিক্ষেপতা তেন মলীমসা মলিনা অপ্রসন্না অতএব অন্ধা সদসদ্বিবেচনাক্ষমা তয়া। তথা অলব্ধেন অপ্রাপ্তেন বৈদগ্ধ্যবিলাসেন পাণ্ডিত্যচাতুর্য্যেণ করণেন, মুগ্ধা মূঢ়া তয়া পাণ্ডিত্যচাতুর্য্যাভাবেন নিতান্তসরলয়েত্যর্থঃ, ধিয়া বুদ্ধ্যা ইয়ং কাদম্বরীরূপা, নিন্দার্থে দ্বয়ীম্ অতিক্রান্তা ইত্যতিদ্বয়ী নিকৃষ্টত্বে অদ্বিতীয়া, গূঢ়োऽর্থস্তু উৎকৃষ্টত্বে অদ্বিতীয়া কথা কথাখ্যঃ কাব্যবিশেষঃ নিবদ্ধা গ্রথিতা বিরচিতা। অপরিপক্ববুদ্ধিসময়ে খল্বিয়ং বিরচিতেতি তাৎপর্য্যং, তেন বাল্যচাপল্যজনিতদোষঃ সুধীভির্মার্জনীয় ইতি ভাবঃ।

অত্র প্রথমপাদে ছেকানুপ্রাসঃ অন্যেষু তু বৃত্ত্যনুপ্রাস ইত্যুভয়োঃ সংসৃষ্টিঃ॥২০॥

---

যাহাতে কণ্ঠের জড়তা বিলুপ্ত হয় না এবং মনের নিতান্ত চঞ্চলতা বশতঃ যে বুদ্ধি মলিন ও সদসদ্বিবেচনাহীন, আর পাণ্ডিত্যচাতুর্য্য লাভ না করায় যে বুদ্ধি নিতান্ত সরল; ব্রাহ্মণ বাণভট্ট সেই বুদ্ধি অনুসারে এই অদ্বিতীয় কথাকাব্য রচনা করিয়াছেন॥২০॥

# কাদম্বরী।



## কথামুখম্।



## শূদ্রকবর্ণনম্।

—:০:—

আসীদশেষ-নরপতি-শিরঃ-সমভ্যর্চ্চিত-শাসনঃ পাকশাসন ইবাপরঃ (ক) চতুরুদধি-মালা-মেখলায়া ভুবো ভর্ত্তা (খ) প্রতাপানুরাগাবনত-সমস্ত-সামন্ত-

---

(ক) অথেদানীং কথামারভতে আসীদিত্যাদিনা। আসীদিতি ক্রিয়াপদস্য 'রাজা শূদ্রকো নাম' ইতি বক্ষ্যমাণকর্তৃপদেনান্বয়ঃ। অশেষৈঃ সকলৈঃ নরপতিভিঃ ভূপতিভিঃ কর্ত্তৃভিঃ, শিরোভির্মস্তকৈঃ করণৈঃ, সমভ্যর্চ্চিতং সম্মানেন গৃহীতং শাসনম্ আদেশো যস্য সঃ, অতএব অপরো দেবরাজাদন্যো দ্বিতীয়ঃ পাকশাসন ইন্দ্র ইব। পাকং নামাসুরং শাসিতবান্ দমিতবানিতি পাকশাসনঃ।

অত্র ভাবাভিমানিনী বাচ্যা উৎপ্রেক্ষালঙ্কারঃ শাসনপদাবৃত্তেঃ যমকস্য চ ইত্যনয়োরেকাশ্রয়ানুপ্রবেশরূপঃ সঙ্করঃ। ন চ শাসনপদাবৃত্তৌ লাটানুপ্রাস ইতি বাচ্যং শব্দার্থয়োরভেদে কেবলতাৎপর্য্যতো ভেদ এব তদঙ্গীকারাৎ অত্র তু শব্দার্থস্যাপি ভেদাৎ।

(খ) চতুরেতি। চতুর্ণাং ভূমণ্ডলস্য চতসৃষু দিক্ষু স্থিতানাম্ উদধীনাং সাগরাণাং মালা পঙ্‌ক্তিরেব মেখলা কাঞ্চী যস্যাস্তস্যাঃ, ভুবো বসুধায়াঃ ভর্ত্তা পতিঃ।

অত্র স্ত্রীপুংলিঙ্গাভ্যাং পৃথিবীশূদ্রকয়োর্নায়িকানায়কব্যবহারসমারোপাৎ সমাসোক্তিরলঙ্কার এব নত্বেকদেশ-বিবর্ত্তি রূপকং, তৎকারণন্তু সাহিত্যদর্পণে সমাসোক্তিপ্রস্তাবে সমনুসন্ধেয়ম্।

---

দ্বিতীয় ইন্দ্রের ন্যায় শূদ্রক নামে এক রাজা ছিলেন। সমস্ত রাজগণ তাঁহার আদেশ সগৌরবে শিরোধার্য্য করিতেন। তিনি চারিটি সমুদ্র (মালারূপ মেখলা)-পরিবেষ্টিত সমগ্র ভূমণ্ডলের অধীশ্বর ছিলেন, অধীনস্থ সকল রাজগণ তাঁহার প্রভাবে ও স্নেহে বশীভূত থাকিতেন; তিনি সম্রাটের যোগ্য সকল লক্ষণ-সম্পন্ন ছিলেন, চক্রপাণি বিষ্ণুর ন্যায় তাঁহার করকমলেও শঙ্খ-

चक्रः (ग) चक्रवर्त्तिलक्षणोपेतः (घ) चक्रधर इव करकमलोपलक्ष्यमाण-शङ्ख-चक्र-लाञ्छनः (ङ) हर इव जितमन्मथः (च) गुह इवाप्रतिहतशक्तिः, (छ) कमलयोनिरिव विमानीकृतराजहंसमण्डलः (ज) जलधिरिव लक्ष्मीप्रसूतिः (झ) गङ्गाप्रवाह इव भगीरथपथप्रवृत्तः (ञ) रविरिव प्रतिदिवसोपजायमानो-

---

(ग) प्रतापेति। प्रतापानुरागाभ्यां कोषदण्डजतेजोवात्सल्याभ्याम् अवनतं वशीभूतं समस्तं सकलं सामन्तचक्रम् अधिकृतराजसमूहो यस्य। एतेन न केवलं तस्य प्रजामण्डलं प्रभावशाद्वशीभूतमासीत् किन्तु तदीयवात्सल्यवशादपीति सूचितम्।

चक्रेति। चक्रवर्त्तिलक्षणैः सार्व्वभौमचिह्नैः करतलरक्तिमादिभिः उपेतो विशिष्टः। तथा च सामुद्रके—

"अतिरक्तः करो यस्य शशिनाङ्गुलिको मृदुः। चापाङ्कुशाङ्कितः सोऽपि चक्रवर्त्ती भवेद्ध्रुवम्॥"

(घ) चक्रेति। चक्रधरः चक्रपाणिर्विष्णुरिव करकमले पाणिपद्मतले उपलक्ष्यमाणं दृश्यमानं शङ्खचक्र-लाञ्छनं शङ्खचक्राकृतिरेखारूपं चिह्नं, अन्यत्र तु वास्तविकशङ्खचक्ररूपं चिह्नं यस्य सः।

अत्र पूर्णोपमालङ्कारः, चक्रशब्दस्यासकृत्पाठाद्वृत्त्यनुप्रासश्च त्वनयोः संसृष्टिः।

(ङ) हर इति। हरः शिव इव जितमन्मथः पराभूतमदनः। ललाटलोचनवह्निना भस्मीकरणात्, राजपक्षे तु समधिकरूपवत्त्वादिति भावः। पूर्णोपमा।

(च) गुह इति। गुहः कार्त्तिकेय इव अप्रतिहता केनापि न विफलीकृता शक्तिः प्रभावोत्साहमन्त्रजं सामर्थ्यं अस्त्रविशेषश्च यस्य सः। पूर्णोपमा।

(छ) कमलेति। कमलं नारायणनाभिपद्मं योनिरुत्पत्तिस्थानं यस्य स कमलयोनिर्ब्रह्मा इव, विगतः पराजयेन विनष्टः मानो गर्व्वो यस्य तद्विमानं तादृशं कृतं राजहंसानां श्रेष्ठनृपतीनां मण्डलं समूहो येन सः, ब्रह्मपक्षे तु विमानीकृतं गगने वाहनीकृतं राजहंसमण्डलं पक्षिविशेषसमूहो येन सः। पूर्णोपमा।

राजानो हंसा इवेति राजहंसाः "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति कर्म्मधारयः। "स्युरुत्तरपदे व्याघ्र"त्याद्यमरप्रामाण्यादस्य श्रेष्ठराजवाचकत्वम्। "व्योमयानं विमानोऽस्त्री" इत्यमरः।

(ज) जलधिरिति। जलधिः समुद्र इव लक्ष्म्याः लक्ष्मीदेव्याः धनसम्पत्तेश्च प्रसूतिरुत्पत्तिस्थानम्। एकत्र दैवासुरैर्मन्थनात् अन्यत्र नीतिकौशलादिति भावः। पूर्णोपमा।

(झ) गङ्गेति। गङ्गायाः प्रवाह ओघ इव भगीरथस्य तदाख्यस्य सूर्य्यवंशीयनृपतिविशेषस्य पथि रथचक्र-

---

চক্র-চিহ্ন দেখা যাইত; তিনি শিবের তুল্য মদনবিজয়ী ও কার্ত্তিকেয়ের ন্যায় অপ্রতিহতশক্তি ছিলেন; তিনি রাজহংসবাহন ব্রহ্মার ন্যায় প্রভাবশালী ছিলেন এবং বিপক্ষ রাজগণকে পরাজয় করিয়া অভিমানহীন করিয়াছিলেন। সমুদ্র যেমন লক্ষ্মীদেবীর উৎপত্তিস্থান, শূদ্রকও তেমন ধনসম্পত্তির উৎপত্তিস্থান ছিলেন। গঙ্গার প্রবাহ যেরূপ ভগীরথের রথচক্রপথে

दयः (१) (ट) मेरुरिव सकलोपजीव्यमान (२) पादच्छायः (ठ) (३)-दिग्गज इवानवरतप्रवृत्तदानार्द्रीकृतकरः (ड) कर्त्ता महाश्चर्य्याणाम्, आहर्त्ता क्रतूनाम्, आदर्शः सर्वशास्त्राणाम्, उत्पत्तिः कलानाम्, कुलभवनं गुणानाम्, आगमः काव्यामृतरसानाम्, (ढ) उदयशैलो मित्रमण्डलस्य, (ण) उत्पात-

---

कृतमार्गे सदाचारपद्धतौ च प्रवृत्तः प्रचलितः। गङ्गा हि हिमालयान्निपत्य मर्त्त्यमण्डले भगीरथरथचक्रकृतपथि प्रवृत्ता कपिलाभिशापभस्मीभूतान् सगरसुतानुद्धारयितुं पातालं प्रविवेशेति; राजा च भगीरथः परमसदाचारवानासीदिति च पौराणिकी वार्त्ता। पूर्णोपमा।

(ट) रविरिति। रविः सूर्य्य इव प्रतिदिवसम् उपजायमान उत्पद्यमानः, उदय उदयाचलसम्बन्धः अभ्युदयश्च यस्य सः। पूर्णोपमा।

(ठ) मेरुरिति। मेरुः सुमेरुपर्व्वत इव सकलैः देवैः जनैश्च उपजीव्यमाना आश्रीयमाणा पादानां प्रत्यन्तपर्व्वतानां छाया अनातपभागः, पादयोश्छाया चरणकान्तिश्च यस्य सः। "एकविंशत्यमी स्वर्गा निर्म्मिता मेरुमूर्द्धनि" इत्यादिव्यपुराणात् सुमेरुसन्निहितपर्वतानां छायासु देवा विचरन्तीति पुराणप्रवादः। पूर्णोपमा।

(ड) दिग्गिति। दिग्गज ऐरावतादिको दिङ्नाग इव अनवरतप्रवृत्तेन सर्वदा जातेन दानेन मदजलेन धनादिदानजलेन च आर्द्रीकृतः क्लिन्नः करः शुण्डा पाणिश्च यस्य सः। पूर्णोपमा।

(ढ) कर्त्तेति। महाश्चर्य्याणां प्रबलशत्रुविजयादिविस्मयावहव्यापाराणां कर्त्ता निर्वाहकः। क्रतूनां यज्ञानां आहर्त्ता अनुष्ठाता। सर्वशास्त्राणां वेदादीनां आदर्शो दर्पणः। यथा दर्पणे प्रतिबिम्बितपदार्थाः परिलक्ष्यन्ते तथा तस्मिन्नपि सर्वाणि शास्त्राण्यभ्यासवशाल्लोकैः परिलक्ष्यन्ते स्मेति भावः। कलानां नृत्यगीतादिचतुःषष्टिकलाविद्यानां उत्पत्तिः शिक्षादानादुद्भवस्थानं। गुणानां दयादाक्षिण्यादीनां कुलभवनं कुलक्रमागताश्रयस्थानम् तत्रैव तेषां चिरावस्थानादिति भावः। काव्यानां ये अमृतरसाः पीयूषसदृशशृङ्गारादिरसास्तेषां आगम उत्पत्तिस्थानम्। महाकवित्वेनोत्कृष्टकाव्यनिर्म्माणादिति भावः।

अत्र एकस्य राज्ञो विषयभेदेनानेकधोल्लेखादुल्लेखालङ्कारः।

(ण) उदयेति। मित्रमण्डलं सुहृत्समूह एव मित्रमण्डलं सूर्य्यमण्डलं तस्य, उदयशैलः पूर्वपर्वतः

---

প্রবাহিত হইয়াছিল, মহারাজ শূদ্রকও সেইরূপ ভগীরথের আচরিত ধর্ম্মপথে চলিতেন। সূর্য্যের যেমন প্রতিদিন উদয় হয়, শূদ্রকেরও তেমন প্রতিদিন অভ্যুদয় হইত। দেবগণ যেরূপ সুমেরুর নিকটবর্ত্তী অন্যান্য পর্ব্বতের ছায়া আশ্রয় করেন, প্রজাগণ সেইরূপ শূদ্রকের চরণের ছায়া আশ্রয় করিয়াছিল। দিগ্‌হস্তীর শুণ্ড যেমন কপোলনিঃসৃত মদজলে

---

(१)···पजीव्यमानोदयः। (२) सकलभुवनो, सकलभुवनतलो···। (३) बृहस्पतिरिव सकलशास्त्राभिज्ञः इत्यधिकः पाठः क्वचित्।

केतुरहितजनस्य, (त) प्रवर्त्तयिता गोष्ठीबन्धानाम्, आश्रयो रसिकानाम्, (थ) प्रत्यादेशो धनुष्मताम्, (द) धौरेयः साहसिकानाम्, अग्रणीर्विदग्धानाम्, वैनतेय इव विनतानन्दजननः, वैन्य (१) इव चापकोटिसमुत्सारितसकलारातिः-(२) कुलाचलो राजा शूद्रको नाम । (ध)

---

सूर्य्यो यथा पूर्वपर्वते उदयं लभते तथा सुहृत्समूहस्तमाश्रित्य उन्नतिं लभे इति भावः ।

अत्र श्लेषेण सुहृत्समूहे सूर्य्यमण्डलत्वारोपो राजन्युदयपर्वतत्वारोपे निमित्तमिति श्लिष्टपरम्परितरूपकमलङ्कारः ।

(त) उत्पातेति । अहितजनस्य शत्रुलोकस्य, उत्पातकेतुः विनाशसूचको धूमकेतुः । तद्दर्शनादेव तेषां विनाशारम्भादिति भावः ।

अत्र राजनि केवलोत्पातकेतुत्वारोपात् निरङ्गं केवलरूपकमलङ्कारः ।

(थ) प्रवर्त्तयितेति । गोष्ठीबन्धानां सभास्थापनानां प्रवर्त्तयिता निष्पादयिता । स्थाने स्थाने सत्सभास्थापक इत्यर्थः । रसिकानां रसज्ञजनानां आश्रयः अवलम्बनम् ।

(द) प्रत्यादेश इति । धनुष्मतां प्रशस्तधनुर्द्धराणां प्रत्यादेशो निराकृतिः निराकरणकारणमित्यर्थः ।

अत्र प्रत्यादेशरूपकार्य्यस्य तत्कारणेन सहाभेदेनाभिधानात् हेतुर्नामालङ्कारः ।

(ध) धौरेय इति । साहसिकानां समरादौ हठकारिणां धौरेयः धुरन्धरः प्रधानः । विदग्धानां चतुराणां अग्रणीरग्रगण्यः । वैनतेयो गरुड इव विनतानां नम्रीभूतानां जनानां विनतायाश्च आनन्दजननः हर्षवर्द्धनः प्रीतिकरः । वैन्यो वेणराजपुत्रः पृथुरिव चापकोट्या कोटीसंख्यकधनुर्भिः असंख्यधनुर्द्धरसैन्यैरित्यर्थः । अन्यत्र तु कार्म्मुकाग्रभागेन समुत्सारिता उत्सादिताः स्थानान्तरं नीताश्च सकलारातयः समस्तशत्रवः कुलाचलाः महेन्द्रादयः कुलपर्वता इव येन सः ।

अनयोः पूर्णोपमालङ्कारः ।

---

সর্ব্বদা আর্দ্র থাকে, শূদ্রকের হস্তও তেমন সর্ব্বদা দানজলে আর্দ্র থাকিত। তিনি, মহাবিস্ময়কর কার্য্য ও যজ্ঞানুষ্ঠান করিতেন এবং সকল শাস্ত্রের আদর্শ, নৃত্যগীতাদি কলাবিদ্যার শিক্ষাদাতা, সর্ব্বদা দয়াদাক্ষিণ্যপ্রভৃতি গুণের আধার ও অমৃততুল্য কাব্যরসের উৎপত্তিস্থান ছিলেন। উদয়াচল যেমন সূর্য্যের উদয়স্থান, তিনিও তেমন সুহৃদ্গণের উন্নতিস্থান এবং শত্রুদিগের ধূমকেতুস্বরূপ ছিলেন, দেশে ও নগরে সভা স্থাপন করিয়াছিলেন, আর তিনি রসিক লোকের আশ্রয়, ধনুর্দ্ধরদিগের প্রতিরোধক, সাহসিকদিগের মধ্যে প্রধান ও চতুরগণের অগ্রগণ্য ছিলেন এবং গরুড় যেমন নিজমাতা বিনতার আনন্দজনক, তিনিও তেমন বশতাপন্ন লোকের আনন্দজনক ছিলেন। আর রাজা পৃথু, যেমন ধনুর অগ্রভাগদ্বারা মহেন্দ্রপ্রভৃতি কুলপর্ব্বতগণকে অপসারিত করিয়াছিলেন, তিনিও তেমন অসংখ্য ধনুর্দ্ধর সৈন্যদ্বারা সকল শত্রুগণকে উৎসন্ন করিয়াছিলেন।

---

(१) वैन्यः, पृथुः,···। (२) समुत्सारितारातिः···।

নাম্নৈব যো নির্ভিন্নারাতিহৃদয়ো বিরচিতনরসিংহ-(১) রূপাড়ম্বরম্ একবিক্রমাক্রান্তসকলভুবনতলো বিক্রমত্রয়ায়াসিতভুবনত্রয়ং (২) জহাসেব (৩) বাসুদেবম্। (ক)

অতিচিরকাললগ্নমতিক্রান্তকুনৃপতিসহস্রসম্পর্ককলঙ্কমিব ক্ষালয়ন্তী যস্য বিমলে (৪) কৃপাণধারাজলে চিরমুবাস রাজলক্ষ্মীঃ (৫)। (খ)

---

পৃথ্বীসমতলীকরণপ্রবণো রাজা পৃথুর্ধনুরগ্রভাগেন কুলপর্বতানপসারয়ামাসেতি বিষ্ণুপুরাণবার্ত্তা। কুলপর্বতা যথা—

"মহেন্দ্রো মলয়ঃ সহ্যঃ শুক্তিমানৃক্ষপর্বতঃ। বিন্ধ্যশ্চ পারিপাত্রশ্চ সপ্তৈতে কুলপর্বতাঃ॥"

(ক) নাম্নেতি। যঃ শূদ্রকঃ, নাম্নৈব স্বনামাকর্ণনমাত্রেণৈব নির্ভিন্নং ভয়োৎপাদনেন বিদারিতম্ অরাতীনাং হৃদয়ং যেন সঃ। বিরচিতঃ হিরণ্যকশিপুবক্ষোবিদারণায় বিহিতঃ নরসিংহরূপস্য নরসিংহরূপধারণস্য আড়ম্বরো হৃদ্ব্যাপারো যেন তং। একবিক্রমেণ একমাত্রপরাক্রমেণ আক্রান্তং আয়ত্তীকৃতং সকলভুবনতলং যেন সঃ। বিক্রমত্রয়েণ পাদন্যাসত্রয়েণ আয়াসিতং খিন্নং কৃতং ভুবনত্রয়ং যেন তং তাদৃশং বাসুদেবং নারায়ণং জহাসেব উপহসিতবানিব। তথা চ শূদ্রকঃ স্বনামশ্রবণমাত্রদ্বারেণৈব বৈরিণাং হৃদয়ং বিদারিতবান্, নারায়ণস্তু কেবলহিরণ্যকশিপুহৃদয়বিদারণায় নৃসিংহমূর্ত্তিধারণাড়ম্বরং কৃতবান্, তথা শূদ্রকেণ অনায়াসেন একবিক্রমেণৈব চতুর্দশভুবনান্যাক্রান্তানি, নারায়ণেন তু ত্রিভিরেব বিক্রমৈঃ কেবলানি ত্রীণ্যেব ভুবনান্যাক্রান্তানি সুতরাং শূদ্রকস্য নারায়ণোপহাসো যুজ্যত এবেতি ভাবঃ।

অত্রোপমানাদুপমেয়স্যাধিক্যবর্ণনাৎ ব্যতিরেকালঙ্কারঃ, ক্রিয়োৎপ্রেক্ষা চ, অনয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ।

(খ) অতীতি। অতিচিরকালাদবধি লগ্নং আত্মনি সংযুক্তং, অতিক্রান্তম্ অতীতং যৎ কুনৃপতিসহস্রং কদর্য্যরাজসমূহং তস্য সম্পর্কেণ সংসর্গেণ যঃ কলঙ্কো দূষিতচিহ্নং পাপঞ্চ তং, ক্ষালয়ন্তীব প্রক্ষালনেন দূরীকুর্ব্বতীব যস্য শূদ্রকস্য বিমলে নির্ম্মলে, কৃপাণধারা খড়্গস্য নিশিতাগ্রম্ এব জলং তস্মিন্। অপরোঽপি ঈষল্লগ্নং পঙ্কাদিকং জলেন ক্ষালয়তি। অতিবলেনৈব শূদ্রকো রাজলক্ষ্মীমায়ত্তীকৃতবানিতি ভাবঃ।

অত্র ক্ষালয়ন্তীবেতি ক্রিয়োৎপ্রেক্ষা, কৃপাণধারাজল ইতি নিরঙ্গং কেবলরূপকঞ্চ অনয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ।

---

যিনি কেবল নামদ্বারাই, ভয়োৎপাদন পূর্ব্বক শত্রুগণের হৃদয় বিদারণ করিয়া এবং একমাত্র বিক্রমে সমগ্র ভূমণ্ডল আয়ত্ত করিয়া, হিরণ্যকশিপুর হৃদয় বিদারণের জন্য নরসিংহমূর্ত্তি ধারণের আড়ম্বরকারী ও তিন বিক্রমে (পাদক্ষেপে) ত্রিভুবনের আয়াসজনক নারায়ণকে যেন উপহাস করিয়াছিলেন।

পূর্ব্বে যে সকল দুর্বৃত্ত রাজা রাজত্ব করিয়া গিয়াছেন, তাঁহাদের সংসর্গে বহুকাল হইতে আপনাতে যে কলঙ্ক লাগিয়াছিল, রাজলক্ষ্মী যেন সেই কলঙ্ক প্রক্ষালন করিবার জন্য রাজা শূদ্রকের তরবারির ধারা-জলে চিরকাল অবস্থান করিয়াছিলেন।

---

(১) নারসিংহ…। (২) আয়াসিতং আয়াসিতবান্। (৩) হসতি স্ম ইব।

(৪) ক্বচিৎ বিমলে ইতি পাঠো নাস্তি। (৫) লক্ষ্মীঃ।

यस्य मनसि धर्म्मेण, कोपे यमेन, प्रसादे धनदेन, प्रतापे वह्निना, भुजे भुवा, दृशि श्रिया, वाचि सरस्वत्या, मुखे शशिना, बले मरुता, प्रज्ञायां सुरगुरुणा, रूपे मनसिजेन, तेजसि सवित्रा च वसता सर्वदेवमयस्य प्रकटितविश्वरूपाकृतेरनुकरोति भगवतो नारायणस्य। (क)

यस्य च मदकल-करि-कुम्भ-पीठ-पाटनमाचरता (१) लग्न-स्थूल-मुक्ताफलेन दृढ-मुष्टि-निष्पीडन-निष्ठ्यूत-धाराजलबिन्दु-(२) दन्तुरेणेव कृपाणेनाक्रम्यमाणा सुभटोरःकपाट-घटित- (३) कवच-सङ्घातान्धकार-मध्यवर्त्तिनी करि-कर-(४)

---

(क) यस्येति। किञ्चेति चार्थः। यः शूद्रक इति वक्ष्यमाणाया अनुकरोतीति क्रियायाः कर्त्ता। मनसीत्यादीनि सप्तम्यन्तपदानि वसतेत्यस्य अधिकरणवाचकानि। धर्म्मेणेत्यादीनि च करणतृतीयान्तपदानि वसतेत्यस्य कर्त्तृविशेष्याणि। प्रसादे अनुग्रहे धनदेन कुवेरेण। भुवा पृथिव्या। दृशि चक्षुषि श्रिया लक्ष्म्या। मरुता वायुना। प्रज्ञायां बुद्धौ सुरगुरुणा बृहस्पतिना। मनसिजेन कामेन। सवित्रा सूर्य्येण। प्रकटिता प्रकाशिता विश्वरूपाकृतिः "पश्यामि देवांस्तव देव! देहे" इत्यादिगीतोक्ता विश्वरूपमूर्त्तिर्येन तस्य। "कृञः प्रतियत्न इत्यनेन कृञः कर्म्मणि षष्ठीति" भानुचन्द्रः। शेषे षष्ठीति श्रीपतिः। अनुकरोतीति "प्रयोगतत्त्व" अतीते वर्त्तमाना। अत्रार्थीयमुपमालङ्कारः।

(ख) यस्येति। यस्य शूद्रकस्य समीपमित्यन्वयः। मदकलानां मदमत्तानां करिणां हस्तिनां यानि कुम्भपीठानि मस्तककुम्भदेशास्तेषां पाटनं विदारणम् आचरता विदधता, अतएव लग्नानि संसक्तानि स्थूलानि बृहन्ति मुक्ताफलानि मौक्तिकानि यस्मिन् तेन, दृढमुष्टिना यत् निष्पीडनं धारणं तेन निष्ठ्यूता इव निःसृता इव धारा निम्नितास्त एव जलबिन्दवः वारिकणास्तैः दन्तुरेण असमानेन उन्नतावनतेन कृपाणेन असिना, आक्रम्यमाणेव, तथा सुभटानां प्रकृष्टयोद्धॄणां उरांसि वक्षांसि कपाटा इव तेषु घटितानि संयोजितानि कवच-सङ्घातानि लौहवर्म्मसमूहा अन्धकारा इव तेषां मध्यवर्त्तिनी अन्तर्गता, राजलक्ष्मीः विपक्षराजश्रीः, करिणां करटेभ्यः गण्डमूलदेशेभ्यः गलितानि निर्गतानि यानि मदजलानि तेषाम् आसारेण धारासम्पातेन दुर्द्दिनं मेघजनितान्धकारो यासु तासु, गाढान्धकारतासूचनार्थं तदुक्तं, समराः संग्रामा निशा इव तासु, अभिसारिका

---

(क) চিত্তে ধর্ম্ম, ক্রোধে যম, অনুগ্রহে কুবের, প্রতাপে অগ্নি, বাহুতে পৃথিবী, নয়নে লক্ষ্মী, বাক্যে সরস্বতী, মুখে চন্দ্র, বলে বায়ু, বুদ্ধিতে বৃহস্পতি, রূপে কামদেব এবং তেজে সূর্য্য বাস করায়, যে শূদ্রক রাজা সর্ব্বদেবময় বিশ্বরূপধারী ভগবান্ নারায়ণের অনুকরণ করিয়াছিলেন।

(খ) মহারাজ শূদ্রক সমরে উপস্থিত হইয়া তরবারির আঘাতে বিপক্ষদিগের মদমত্ত হস্তিসমূহের কুম্ভ বিদারণ করিতেন, তাহাতে বড় বড় মুক্তা তরবারিতে লাগিয়া থাকিত, তখন দৃঢ়মুষ্টিতে নিষ্পীড়ন করায় যেন ধারারূপ জলবিন্দু নির্গত হইয়া তরবারি খানাকে উঁচু

---

(१) आचरतः, विदधतः। (२) निर्गलनात् निष्ठ्यूतजलः...। (३)...विघटित...। (४) करट।

तट-गलित-मदजलासार-दुर्दिनास्वभिसारिकेव समरनिशासु समीपमसकृदाजगाम (१) राजलक्ष्मीः। (ब)

यस्य च हृदयस्थितानपि पतीन् दिधक्षुरिव (२) प्रतापानलो वियोगिनीनामपि रिपुसुन्दरीणामन्तर्जनितदाहो (३) दिवानिशं जज्वाल। (भ)

यस्मिंश्च राजनि जितजगति परिपालयति (४) महीं चित्रकर्मसु वर्णसङ्कराः, रतेषु केशग्रहाः, काव्येषु दृढबन्धाः, शास्त्रेषु चिन्ताः, स्वप्नेषु विप्र-

---

वलम्बिता नायिकेव यस्य शूद्रकस्य समीपम् असकृत् पुनः पुनः बहुत्वात् वारंवारम् आजगाम वशवर्त्तिनी बभूवेत्यर्थः।

अत आकृष्यमाणेवेति क्रियोत्प्रेक्षा, उरःकपाटेति अवयवसमस्तरूपकमिति च सुमीपमत्रैव अभिसारिकेवेत्युपमा च, एतेषामङ्गाङ्गिभावेन सङ्करः।

"अभिसारयते कान्तं या मन्मथवशंवदा। स्वयं वाभिसरत्येषा धीरैरुक्ताभिसारिका।" इति साहित्यदर्पणः। "दुर्दिनं जलदध्वान्त" मिति रत्नकोषः।

(भ) यस्येति। यस्य च शूद्रकस्य, प्रतापः कोषदण्डजं तेज एव अनलो वह्निः, वियोगिनीनामपि समरे एवमेव पतिव्यापादनात् विरहिणीनामपि पतिविनाशशङ्कया संयोगिनीनां का कथेति भावः, रिपुसुन्दरीणां वैरिवधूनाम् अन्तर्जनितः मनस्युत्पादितो दाहो येन सः, हृदयस्थितानपि अधीनानां रिपुसुन्दरीणां सतत-भावनया चित्तगतानपि पतीन् दिधक्षुरिव दग्धुमिच्छुरिव सन्। एतेन महाप्रतापशालित्वं सूचितम्।

अत्र प्रतापानल इति निरङ्गं केवलरूपकं दिधक्षुरिवेति क्रियोत्प्रेक्षा च अनयोरङ्गाङ्गिभावेन सङ्करः।

(म) यस्मिन्निति। चित्रकर्मसु आलेख्यनिर्म्माणेषु वर्णानां नीलपीतादीनां सङ्कराः मिश्रणानि, न तु प्रजासु अन्यजातिभ्यः अन्यजातीनामुत्पत्तिरूपा वर्णसङ्कराः, व्यभिचाराभावात्। प्रजानामाश्रमिति वक्ष्यमाणेन कर्त्तव्यः। रतेषु मैथुनेषु केशग्रहाः सुविधाविधानाय केशाकर्षणानि, न तु समरेषु, तदभावात्। काव्येषु दृढबन्धाः समासबाहुल्यादिना शब्दानां प्रगाढयोजनानि, न तु कारागारेषु दृढबन्धाः, अपराधाभावात्। शास्त्रेषु चिन्ताः, न तु उदरान्नादिषु, समृद्धिपूर्णत्वात्। स्वप्नेषु विप्रलम्भाः दृष्टपदार्थानां सहसान्तर्धानात् प्रतारणाः, न तु अन्यसमयेषु, सर्वत्र वास्तविकव्यवहारात्। छत्रेषु आतपत्रेषु कनकदण्डाः स्वर्णयष्टयः, न तु

---

নীচু করিয়াছে বলিয়া বোধ হইত; এদিকে মহাযোদ্ধাদিগের কপাটের ন্যায় বিস্তীর্ণ বক্ষঃস্থলে লৌহবর্ম্মগুলি অন্ধকারের ন্যায় প্রতীতি হইত, আর হস্তিগণের শুণ্ড হইতে নির্গত মদজলবৃষ্টিতে গাঢ় অন্ধকার হইত, তাহাতে সমরাঙ্গন রাত্রির ন্যায় হইয়া পড়িত, তখন অভিসারিকা নায়িকার মত বিপক্ষের রাজলক্ষ্মী, যেন সেই তরবারিকর্তৃক আকৃষ্ট হইয়া রাজা শূদ্রকের নিকট বার বার উপস্থিত হইতেন।

(ভ) যে রাজা শূদ্রকের প্রতাপানল, বিরহিণী শত্রুবনিতাদিগেরও হৃদয়ে সন্তাপ জন্মাইয়া তাহাদের হৃদয়স্থিত পতিদিগকেও যেন দগ্ধ করিতে ইচ্ছা করিয়া দিবারাত্রি জ্বলিতে থাকিত।

---

(१) असकृदागमत्। (२) दग्धुमिव। (३) दाहो। (४) पालयति।

লম্ভাঃ, ছত্রেষু কনকদণ্ডাঃ, ধ্বজেষু প্রকম্পাঃ, গীতেষু রাগবিলসিতানি, করিষু মদবিকারাঃ, চাপেষু গুণচ্ছেদাঃ, গবাক্ষেষু জালমার্গাঃ, শশিকৃপাণ-কবচেষু কলঙ্কাঃ, রতিকলহেষু দূতসম্প্রেষণানি, (১) সার্য্যক্ষেষু শূন্যগৃহাঃ প্রজানামাসন্। (ম)

---

ছত্রেষু কনকদণ্ডা নার্থদণ্ডাঃ, অপরাধাভাবাৎ। ধ্বজেষু পতাকাসু প্রকম্পাঃ চাঞ্চল্যানি, ন তু লোকচিত্তেষু ভয়াভাবাৎ। "ধ্বজং চিহ্নে পতাকায়াং ধ্বজঃ শৌণ্ডিকশেফসোঃ। খট্বাঙ্গে চ…" ইতি বিশ্বঃ। গীতেষু রাগবিলসিতানি বসন্তাদিরাগব্যবহারাঃ, ন তু লোকেষু রাগবিলসিতানি, মাৎসর্য্যাচরণানি, সর্ব্বেষামেব নিতান্তসন্ধিমত্ত্বাৎ। "রাগঃ ক্লেশাদিকে রক্তে মাৎসর্য্যে লোহিতাদিষু।" ইতি ত্রিকাণ্ডশেষঃ। করিষু হস্তিষু মদবিকারাঃ দানজনিতবিকৃতয়ঃ, ন তু জনেষু মদবিকারা অহঙ্কারজনিতস্বভাববৈষম্যাদি, তদভাবাৎ। চাপেষু গুণচ্ছেদাঃ ধনুঃষু মৌর্ব্বীকর্ত্তনানি, ন তু লোকেষু গুণচ্ছেদা দয়াবিনয়াদিগুণবিলোপাঃ, তাদৃশগুণানাং সর্ব্বদা সদ্ভাবাৎ। গবাক্ষেষু বাতায়নেষু জালমার্গাঃ বায়ুপ্রবেশায় ক্ষুদ্র-ক্ষুদ্র-পথাঃ, ন তু লোকেষু জালমার্গাঃ কূটকল্পনাপদ্ধতয়ঃ, সর্ব্বেষামেব সরলস্বভাবত্বাৎ। শশিনি কলঙ্কঃ স্বাভাবিকঃ, কৃপাণকবচয়োস্তু বহুকাল-ব্যবহারাভাবে মালিন্যরূপো কলঙ্কো, ন তু লোকচরিত্রেষু কলঙ্কা অপবাদাঃ, সচ্চরিত্রত্বাৎ। রতিকলহেষু দম্পতিবিষয়কবিবাদেষু দূতসম্প্রেষণানি, ন তু সমরেষু, তদভাবাৎ। সার্য্যক্ষেষু গুটিকাক্ষেত্রেষু শূন্যগৃহা গুটিকাশূন্যকোষ্ঠানি, ন তু গ্রামেষু জনশূন্যগৃহাঃ, সর্ব্ববিধোৎপীড়নাভাবাদিতি ভাবঃ।

অত্র চতুর্দ্দশানাং শ্লেষানুপ্রাণিতানাং পরিসংখ্যালঙ্কারাণাং পরস্পরনিরপেক্ষত্বাৎ সংসৃষ্টিঃ।

---

(ম) যে রাজা ভূমণ্ডল জয় করিয়া পরিপালন করিতে লাগিলে প্রজাদিগের চিত্রকার্য্যেই বর্ণসঙ্কর (নীলপীতাদিবর্ণের সংমিশ্রণ) ছিল, কিন্তু সমাজে বর্ণসঙ্কর ছিল না; সম্ভোগের বেলায়ই কেশধারণ ছিল, কিন্তু যুদ্ধে কেশাকর্ষণ ছিল না; কাব্যেতেই দৃঢ় বন্ধন (প্রগাঢ় রচনা) ছিল, কিন্তু কারাগারে দৃঢ় বন্ধন ছিল না; শাস্ত্রেই চিন্তা ছিল, কিন্তু উদরান্নপ্রভৃতির চিন্তা ছিল না; স্বপ্নের বেলায়ই প্রতারণা হইত, কিন্তু অন্য সময়ে নহে; ছত্রেই স্বর্ণদণ্ড ছিল, কিন্তু কাহারও অর্থ-দণ্ড ছিল না, পতাকা কম্পিত হইত, কিন্তু লোকের মন কম্পিত হইত না; গানেই বসন্ত প্রভৃতি রাগ ব্যবহার হইত, কিন্তু কাহারও প্রতি কেহ রাগ (বিদ্বেষাচরণ) করিত না; হস্তীতেই মদ-বিকার ছিল, কিন্তু কাহারও চিত্তে ছিল না; ধনুতেই গুণচ্ছেদ হইত, কিন্তু লোকের দয়া-দাক্ষিণ্য প্রভৃতি গুণের লোপ হইত না; বাতায়নেই জালরন্ধ্র ছিল, কিন্তু অন্যত্র জালরন্ধ্র (প্রতারণা-পদ্ধতি) ছিল না; চন্দ্র, তরবারি ও লৌহবর্ম্মেই কলঙ্ক ছিল, কিন্তু কাহারও চরিত্রে কলঙ্ক ছিল না, দম্পতীর প্রণয়-কলহেই দূত পাঠান হইত, কিন্তু যুদ্ধের জন্য দূত পাঠান হইত না; আর দাবা পাশা প্রভৃতির কোঠেই শূন্যগৃহ থাকিত, কিন্তু গ্রামে শূন্যগৃহ থাকিত না।

---

(১) দূতপ্রেষণানি।

মাতঙ্গকুলাম্, (ল) মধুমাস-কুসুম-সমৃদ্ধিমিব অজাতিম্ (১) (ব) অনঙ্গ-কুসুম-চাপলেখামিব মুষ্টিগ্রাহ্যমধ্যাম্, (শ) যক্ষাধিপলক্ষ্মীমিবালকোদ্ভাসিনীম্, (ষ) অচিরোপরূঢ়-(২)-যৌবনাম্, অতিশয়রূপাকৃতিম্, অনিমিষ-(৩) লোচনো দদর্শ। (স)

দৃষ্ট্বা চ তাং (৪) সমুপজাত-(৫) বিস্ময়স্যাভূন্মনসি মহীপতেঃ—'অহো! বিধাতুরস্থানে রূপ-(৬) নিষ্পাদনপ্রযত্নঃ। তথাহি, যদি নামেয়মাত্মরূপোপ-

---

মধ্বিতি। মধুমাসস্য চৈত্রমাসস্য কুসুমসমৃদ্ধিং পুষ্পসম্পদমিব, অজাতিং মন্বাদিপরিগণিত-ব্রাহ্মণত্বাদি-জাতিরহিতাম্, অন্যত্র জাতীকুসুমরহিতাম্, "ব্রাহ্মণঃ ক্ষত্রিয়ো বৈশ্যস্ত্রয়ো বর্ণা দ্বিজাতয়ঃ। চতুর্থ একজাতিস্তু শূদ্রো নাস্তি তু পঞ্চমঃ।" ইতি মনুনা চণ্ডালাদীনাং জাতিহীনত্বোক্তেঃ "ন স্যাজ্জাতী বসন্তে ..." ইতি সাহিত্যদর্পণে কবিসময়প্রসিদ্ধেশ্চেতি ভাবঃ।

(ব) অনঙ্গেতি। অনঙ্গস্য মদনস্য কুসুমচাপলেখাং পুষ্পধনুর্লতামিব, মুষ্টিনা গ্রাহ্যো গ্রহীতুং শক্যো মধ্যঃ কটিদেশো মধ্যভাগশ্চ যস্যাস্তাম্। এতেন কটিদেশস্য নিতান্তকৃশত্বমতিকোমলত্বঞ্চ ব্যজ্যতে।

(শ) যক্ষেতি। যক্ষাধিপস্য কুবেরস্য লক্ষ্মীং সম্পদমিব, অলকৈশ্চূর্ণকুন্তলৈঃ উদ্ভাসতে শোভতে, অলকায়াং তদাখ্যায়াং নগর্য্যাঞ্চ উদ্ভাসতে যা তাম্।

(ষ) অচিরেতি। অচিরম্ উপরূঢ়ং জাতং যৌবনং যস্যাস্তাম্। অতিশয়েন বাহুল্যেন রূপং সৌন্দর্য্যং যস্যাঃ সা তাদৃশী আকৃতির্যস্যাস্তাম্।

অহো পরমচমৎকারিণ্যপি বর্ণনেয়মনুপযোগিতয়া খল্বিয়ং চণ্ডালকন্যৈব বিরক্তিমাবহতীতি রসিকৈরালোচনীয়ম্।

(স) দৃষ্ট্বেতি। মনসি স্থিতিরভূদিত্যর্থঃ। তামেব মনোবৃত্তিমাহ অহো ইতি। অস্থানে অপাত্রে। আত্মরূপেণ স্বকীয়সৌন্দর্য্যেণ উপহসিতা তিরস্কৃতা অশেষা সমস্তা রূপসম্পৎ সৌন্দর্য্যসমৃদ্ধির্যয়া সা তথোক্তা, ইয়ং কন্যা। অপগতে দূরীভূতে স্পর্শসম্ভোগসুখে যস্মাৎ তাদৃশে কুলে চণ্ডালবংশে জন্ম জাতং

---

জন্ম ছিল; চৈত্রমাসজাত কুসুম-সমূহের মধ্যে যেমন জাতীকুসুম থাকে না, তাঁহাতেও তেমন কোন জাতি ছিল না; কামদেবের পুষ্পময় ধনুর ন্যায় তাহারও মধ্যদেশ মুষ্টিতে গ্রহণ করা যাইত; কুবেরের সম্পত্তি যেমন অলকানগরীতে শোভিত, সেও তেমন কুন্তলকলাপে শোভিত ছিল; এবং সে নবযুবতী ও পরমরূপবতী ছিল। (ল—ষ)

(স) তাহাকে দেখিয়া রাজার বিস্ময় জন্মিল, এবং তিনি মনে মনে ভাবিতে লাগিলেন;—'কি আশ্চর্য্য! বিধাতা অপাত্রে সৌন্দর্য্য নির্ম্মাণের যত্ন করিয়াছেন; কারণ, ইঁহার রূপের

---

(১) বিজাতিম্। (২) উপারূঢ়...। (৩) অনিমেষ...। (৪) 'দৃষ্ট্বা চ তাম্' ইতি পাঠঃ ক্বচিন্নাস্তি। (৫) জাত...। (৬) সৌন্দর্য্য...।

হসিতাশেষরূপসম্পদুৎপাদিতা, কিমর্থমপগত-স্পর্শ-সম্ভোগ-সুখে কৃতং কুলে জন্ম (১)। (ম)

মন্যে চ ‘মাতঙ্গ-জাতি-স্পর্শদোষ-ভয়াদস্পৃশতৈয়মুৎপাদিতা (২) প্রজাপতিনা, অন্যথা কথমিয়মক্লিষ্টতা লাবণ্যস্য। নহি (৩) করতল-স্পর্শ-ক্লেশিতানামবয়বানামীদৃশী ভবতি কান্তিঃ। (য)

সর্বথা ধিগ্বিধাতারম্ (৪) অসদৃশসংযোগকারিণম্। অতিমনোহরাকৃতি-(৫)রপি ক্রূরজাতিতয়া (৬) যেনেয়মসুরশ্রীরিব সতত-নিন্দিত-সুরতা রমণীয়াঽপ্যুদ্বেজয়তি’ ইতি। (র)

---

অস্যা উৎপত্তির্বিহিতা। তথা চ যথা পরমরূপসম্পদ্বিহিতা তথা উচ্চবংশে জন্মবিধানমপ্যুচিতমাসীদিতি ভাবঃ।

(য) মন্য ইতি। অস্পৃশতা অস্যা দেহস্পর্শমকুর্বতা প্রজাপতিনা বিধাত্রা, ইয়ং চণ্ডালকন্যা, উৎপাদিতা মরীচ্যাদিঋষিবৎ কেবলমনঃসঙ্কল্পেন নির্ম্মিতা, ইত্যহং মন্যে ইত্যর্থঃ। অত্র ক্রিয়োৎপ্রেক্ষালঙ্কারঃ মন্য ইতি চ তদ্বাচকম্। অন্যথাস্পর্শে, ইয়মীদৃশী, লাবণ্যস্য সৌন্দর্য্যস্য, অক্লিষ্টতা অম্লানতা কথং স্যাৎ কথমপি নেত্যর্থঃ। তদেব প্রতিপাদয়তি নহীতি। কান্তিঃ কমনীয়তা নহি ভবতি, আমর্দ্দন-ঘাতাদাবিব ম্লানতা স্যাদিতি ভাবঃ।

(র) সর্বথেতি। অসদৃশয়োর্ভিন্নাধিকরণত্বেন পরস্পরবিরুদ্ধয়োশ্চণ্ডালত্ব-পরমসৌন্দর্য্যয়োঃ সংযোগম্ একত্র সমাবেশং কর্তুং শীলং যস্য তং বিধাতারম্ অস্যা সৃষ্টিকর্তারং ধিক্ নিন্দামি। যেন অসদৃশ-সংযোগকরণেন হেতুনা। অসুরশ্রীরিব দৈত্যলক্ষ্মীরিব, সততং নিন্দিতং শাস্ত্রকৃদ্ভির্বিগর্হিতং সুরতম্ আর্য্যাণাং রমণং যস্যাঃ সা, অসুরশ্রীপক্ষে তু সততং নিন্দিতা তিরস্কৃতা সুরতা সুরসমূহো দেবগণো যয়া সা। ইয়ং চণ্ডাল-দারিকা, রমণীয়া কোমলাপি ক্রূরজাতিতয়া নীচচণ্ডালজাতিত্বেন উদ্বেজয়তি বৈধিব্যং জনয়তি। ইতি মহীপতের্মনস্যভূদিত্যন্বয়ঃ। অত্র পূর্ণোপমালঙ্কারঃ।

---

নিকট জগতের সমস্ত রূপসম্পদ্ তিরস্কৃত হইতেছে, সুতরাং বিধাতা যদি ইহাকে এইরূপ করিয়াই সৃষ্টি করিলেন, তবে স্পর্শ ও সম্ভোগ-সুখবর্জ্জিত চণ্ডালবংশে সৃষ্টি করিলেন কেন?

(য) আমি মনে করি—বিধাতা চণ্ডালজাতির স্পর্শদোষের ভয়ে স্পর্শ না করিয়াই ইহাকে সৃষ্টি করিয়াছেন; না হইলে ইহার লাবণ্যের এইরূপ অক্ষুণ্ণতা থাকিবে কেন? কারণ, করস্পর্শ-পীড়িত অঙ্গসমূহের এই জাতীয় কমনীয়তা হয় না।

(র) আর, চণ্ডালজাতি ও পরমসৌন্দর্য্য—এই বিসদৃশ পদার্থদ্বয়ের একত্র সমাবেশকারী বিধাতাকে আমি সর্ব্বপ্রকারে নিন্দা করি; যেহেতু, সর্ব্বদা দেবগণের নিন্দাকারিণী অসুর-লক্ষ্মীর ন্যায় এই চণ্ডালকন্যা পরমসুন্দরী ও নিতান্ত কোমলাঙ্গী হইলেও চণ্ডালজাতি বলিয়া এবং ইহার সম্ভোগ সর্ব্বদা বিগর্হিত বলিয়া উদ্বেগ জন্মাইতেছে।

---

(১) অস্যা জন্ম। (২) মন্যে নোৎপাদিতা। (৩) নহ্যপি। (৪) ধিগ্ ধিগ্বিধাতারম্। (৫) মনোহরা—। (৬) ক্রূরজাতিজা।

एवमादि चिन्तयन्तमेव राजानमीषदवगलित-कर्णपल्लवावतंसा प्रगल्भवनितेव कन्यका प्रणनाम। (ल)

कृतप्रणामायाश्च तस्यां मणिकुट्टिमोपविष्टायाम्, स पुरुषस्तं विहङ्गममादाय (१) पञ्जरगतमेव किञ्चिदुपसृत्य राज्ञे न्यवेदयदब्रवीच्च—(व)

—"देव! विदितसकलशास्त्रार्थः, राजनीतिप्रयोगकुशलः, पुराणेतिहास-कथालापनिपुणः, वेदिता गीतश्रुतीनाम्, काव्य-नाटकाख्यानक (२)- प्रभृतीनाम-परिमितानां सुभाषितानामध्येता स्वयञ्च कर्त्ता, परिहासालापपेशलः, वीणा-वेणु-मुरजप्रभृतीनां वाद्यविशेषाणामसमः श्रोता, नृत्यप्रयोगदर्शननिपुणः, चित्र-

---

"चाण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च। पतत्यज्ञानतो विप्रो ज्ञानात् साम्यन्तु गच्छति।" इति मनुवचनात् चण्डालीगमनं नितान्तनिन्दितमिति बोध्यम्।

(ल) एवमिति। ईषदल्पम् अवगलितौ अधोलम्बितौ कर्णयोः पल्लवावतंसौ किसलयालङ्कारौ यस्याः सा, कन्यका चण्डालकुमारी प्रगल्भवनितेव धृष्टा नारीव तादृशसभायामपि लज्जासङ्कोचाभावादिति भावः। एवमादि पूर्वोक्तप्रकारादिकम् चिन्तयन्तमेव राजानं प्रणनाम।

(व) कृतेति। तस्यां चण्डालदारिकायाम्। सः अग्रगामी वृद्धः पुरुषः। पञ्जरगतमेव तं विहङ्गमं शुकम्। न्यवेदयदुपहृतवान्।

[श] देवेति। देव! देवतासमानप्रभाव! राजन्! विदितसकलशास्त्रार्थ इत्यादीनि प्रथमान्तानि शुकस्य विशेषणानि। पुराणेतिहासकथानामालापेषु सम्यग्भाषणेषु निपुणो दक्षः। गीतं गानं श्रुतयः स्वरारम्भकावयवीभूताः शब्दविशेषा द्वाविंशतिप्रकाराः, तासां वेदिता ज्ञाता। तथा च सङ्गीतदामोदरे "नान्दी चालनिका रसा च सुमुखी चित्रा विचित्रा घना मातङ्गी सरसामृता मधुकरी मैत्री शिवा माधवी। बाला शार्ङ्गरवी कला कलरवा माला विशाला जया मातेति श्रुतयः पुराणकविभिर्द्वाविंशतिः कीर्त्तिताः॥"

---

(ল) রাজা এই জাতীয় নানাপ্রকার চিন্তা করিতে লাগিলে নির্লজ্জ রমণীর ন্যায় চণ্ডালকন্যা আসিয়া তাঁহাকে প্রণাম করিল, তখন তাহার কাণের পল্লব দু'টি নীচের দিকে কিছু ঝুলিয়া পড়িয়াছিল।

(ব) সে প্রণাম করিয়া মণিময় ভূমিতে উপবেশন করিলে, সেই প্রাচীন পুরুষ পঞ্জরস্থিত সেই শুকপক্ষীটিকে নিয়া কিছু অগ্রসর হইয়া রাজাকে উপহার দিল এবং বলিল—

(শ) "মহারাজ! এই শুকপক্ষীটি সমগ্র পৃথিবীর মধ্যে রত্নস্বরূপ; ইহার নাম বৈশম্পায়ন। এই শুক সমস্ত শাস্ত্রের প্রতিপাদ্য বিষয় অবগত আছে; রাজনীতি-প্রয়োগে দক্ষ, পুরাণ ও ইতিহাসের কথা বলিতে নিপুণ, গান ও শ্রুতি (শোরং) জানে, কাব্য, নাটক ও আখ্যায়িকা প্রভৃতি অপরিমিত মধুরভাষা পাঠ করিয়াছে, নিজেও সেই কাব্য প্রভৃতি

---

(१) विहङ्गमादाय, विहङ्गमं शुकमादाय। (२)···नाटकाख्यायिकाख्यानक···।

कर्म्मणि प्रवीणः, द्यूतव्यापारे प्रगल्भः, प्रणयकलह-कुपित-कामिनी-प्रसादनोपाय-चतुरः, गज-तुरग-पुरुष-स्त्री-लक्षणाभिज्ञः, सकलभूतल-रत्नभूतोयं वैशम्पायनो नाम शुकः। सर्वरत्नानाञ्च (१) उदधिरिव देवो भाजनमिति कृत्वैनमादायास्मत्-स्वामिदुहिता देवपादमूलमायाता ; तदयमात्मीयः (२) क्रियता" मित्युक्त्वा नर-पतेः पुरो निधाय पञ्जरमसावपससार। (ग)

अपसृते च तस्मिन् स विहङ्गराजो (३) राजाभिमुखो भूत्वा समुन्नमय्य (४) दक्षिणं चरणमतिस्पष्ट-वर्ण-स्वर-संस्कारया (५) गिरा कृतजयशब्दो राजानमुद्दिश्यार्य्यामिमां पपाठ—(घ)

---

अपरिमितानामसंख्यानां सुभाषितानां मधुरवाक्यानाम्, अध्येता पठिता, कर्त्ता रचयिता। परिहासा-लापेषु पेशलो निपुणः। असमः निरुपमः अद्वितीयः, श्रोता श्रवणेन तारतम्य-गुण-दोषाणां निर्वाचक इत्यर्थः। नृत्यप्रयोगस्य दर्शने निपुणो दक्षः दर्शनेनोत्कर्षापकर्षविवेचकः। चित्रकर्म्मणि आलेख्यकार्य्ये प्रवीणः अभिज्ञः। प्रगल्भश्चतुरः। प्रणयकलहैः प्रेमविषयकविवादैः कुपितानां कामिनीनां प्रसादनोपायेषु सान्त्वनाद्दिभूतव्यापारेषु चतुरो निपुणः। उदधिः समुद्र इव देवो भवान् भाजनं पात्रमाधारः, इति कृत्वा एतन्मनसि विचिन्त्य, अस्माकं स्वामिनो वक्ष्यमाणस्य भर्त्तुः दुहिता एषा कन्या, एनं शुकमादाय देवपादमूलं भवच्चरणसमीपम्। तत्तस्मात् अयं शुकः आत्मीयो ग्रहणेन स्वस्वत्वास्पदीभूतः।

(घ) अपेति। तस्मिन् पुरुषे। समुन्नमय्य उत्तोल्य। प्राक्तन-ब्राह्मणपुण्डरीकजन्मीयसंस्कारानुवृत्तेः शुकस्यापि जयशब्दोच्चारणं दक्षिणचरणोत्तोलनं ब्राह्मणानामाशीर्वादादौ दक्षिणहस्तोत्तोलनदर्शनादिति बोध्यम्। पक्षिणाम् एकस्यैवाङ्गस्य करचरणोभयरूपत्वाच्चरणशब्दोऽत्रिय सङ्गच्छते। भानुचन्द्रस्तु "शुकादीनां शब्दोच्चारणे

---

রচনা করিতে পারে, পরিহাসবাক্যে চতুর ; বীণা, বংশী ও মৃদঙ্গ প্রভৃতি বাদ্যবিশেষ শুনিয়া তাহার গুণ, দোষ ও তারতম্য নির্বাচন করিতে অদ্বিতীয় ; নৃত্য দর্শন করিয়া তাহার ভাল মন্দ বলিতে পারে ; চিত্র করিতে সুনিপুণ ; দ্যূতক্রীড়ায় সুচতুর, প্রণয়বিবাদে কুপিত রমণীর সান্ত্বনার উপায় বেশ জানে এবং হস্তী, অশ্ব, পুরুষ ও স্ত্রীজাতির সমস্ত লক্ষণে অভিজ্ঞ। সমুদ্রের ন্যায় আপনিও সকল রত্নের আশ্রয়, এইরূপ মনে করিয়া আমাদের প্রভুকন্যা ইহাকে নিয়া আপনার চরণ-সমীপে আসিয়াছেন, সুতরাং আপনি ইহাকে গ্রহণ করুন।" এই কথা বলিয়া সেই প্রাচীন পুরুষ পিঞ্জরখানি রাজার সম্মুখে রাখিয়া সরিয়া গেল।

(ঘ) সে সরিয়া গেলে সেই পক্ষিশ্রেষ্ঠ শুক, রাজার অভিমুখ হইয়া দক্ষিণ চরণ উত্তোলনপূর্ব্বক সুস্পষ্ট বর্ণ ও স্বরসংযুক্ত এবং ব্যাকরণ-শুদ্ধ ভাষাতে জয়শব্দ উচ্চারণ করিয়া রাজার উদ্দেশে এই আর্য্যাটি পাঠ করিল—

---

(१) सर्वरत्नानामुदधिरिव। (२) आत्मायत्तः। (३) तस्मिन् विहङ्गमराजः। (४) उन्नमय्य। (५)…वर्णसंस्कारया।

"स्तनयुगमश्रुस्नातं समीपतरवर्त्ति हृदयशोकाग्नेः ।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम् ॥" (ग)

राजा तु तां श्रुत्वा (१) सञ्जात-(२) विस्मयः सहर्षमासन्नवर्त्तिनम् अतिमहार्घ-हेमासनोपविष्टम् (३) अमरगुरुमिवाशेषनीतिशास्त्रपारगम् अतिवयस-(४) मग्रज-न्मानमखिलमन्त्रिमण्डलप्रधान-(५) ममात्यं कुमारपालितनामानमब्रवीत् । (घ)

तादृशोऽयं जातिस्वभाव" इत्युक्तवान् । परिस्फुटा सुव्यक्ताः, वर्णा अक्षराणि, स्वर उदात्तादिः, संस्कारो व्याकरणशुद्धिश्च यस्यां तया, गिरा वाचा । आर्य्याम् आर्य्यानामकच्छन्दोबद्धं वाक्यम् ।

(ग) स्तनेति । अश्रुभिर्नयनजलैः स्नातं विहितस्नानं, हृदये पतिविनाशजनितः शोक एव अग्निः तापक-त्वात् तस्य समीपतरवर्त्ति नितान्तनिकटस्थायि तथा विमुक्तः परित्यक्तः आहारो भोजनं येन तत् नियतोपवासीत्यर्थः, अथ च विगतो वैधव्यात् दूरं गतो मुक्ताहारो मौक्तिकमाला यस्मात् तत्, भवतो रिपुस्त्रीणां वैरिवनितानां स्तनयुगं कुचयुगलं कर्त्तृ, व्रतं चरतीव कमपि शास्त्रविहितं नियममनुतिष्ठतीव । अन्योऽपि व्रती विमृश्य स्नाति, होमाग्निसन्निधाने तिष्ठति, यथाविधानमुपवासञ्च करोति ।

अत्र हृदयशोकाग्निरिति निरङ्गं केवलरूपकं, वाच्या भावाभिमानिनी क्रियोत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः, किञ्च विमुक्ताहारमिति सभङ्गश्लेषश्चेति समुदाये संसृष्टिः ।

"व्रतं शास्त्रविहितो नियम" इति दुर्गः । "सङ्कल्पविषयो व्रत" मिति आर्त्तः ।

इयमार्य्या जातिः । यथा श्रुतबोधे—

"यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि ।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्य्या ॥"

(घ) राजेति । अतिमहार्घम् अतिमहामूल्यं यत् हेमासनं सुवर्णपीठं तत्रोपविष्टम् आसीनम् । अमर-गुरुमिव बृहस्पतिमिव । अत्रोपमालङ्कारः । अतिरिक्तं वयो यस्य तम् अतिवयसं वृद्धम् अग्रजन्मानं ब्राह्मणम् ।

(গ) "আপনার শত্রুস্ত্রীদিগের স্তনযুগল নয়নজলে স্নান করিয়া, হৃদয়স্থিত শোকাগ্নির অত্যন্ত নিকটে থাকিয়া এবং আহার (পক্ষান্তরে মুক্তার মালা) পরিত্যাগ করিয়া যেন কোন ব্রত আচরণ করিতেছে।"

(ঘ) সেই আর্যাটি শুনিয়া রাজার বিস্ময় জন্মিল এবং তিনি নিকটবর্ত্তী, অতিমহামূল্য সুবর্ণময় আসনে উপবিষ্ট, বৃহস্পতির ন্যায় সমস্ত নীতিশাস্ত্র-পারদর্শী, বৃদ্ধ, ব্রাহ্মণ ও সকল মন্ত্রিগণের মধ্যে প্রধান কুমারপালিতনামক মন্ত্রীকে বলিলেন—

(१) तामार्य्यां श्रुत्वा । (२) जात… । (३) महार्हासनोपविष्टं, अतिमहार्हहेमासनोपविष्टं ।
(४) अतिपरिणतवयसम् । (५) अखिलमन्त्रिमण्डली प्रधानम् ।

"श्रुता भवद्भिरस्य विहङ्गमस्य स्पष्टता वर्णोच्चारणे, स्वरे च मधुरता ?। प्रथमं तावदिदमेव महद्-(१) आश्चर्य्यम्, यदयमसङ्कीर्णवर्ण-प्रविभागामभिव्यक्त-मात्रानुस्वार-स्वर-संस्कारयोगां विशेष-युक्ताम् (२) अतिपरिस्फुटाक्षरां (३) गिर-मुदीरयति। तत्र पुनरपरम् (४) अभिमतविषये तिरश्चोऽपि मनुजस्येव संस्कार-वती (५) बुद्धिपूर्वा प्रवृत्तिः। तथाहि, अनेन समुत्क्षिप्तदक्षिणचरणेनोच्चार्य्य जयशब्दमियमार्य्या मामुद्दिश्य परिस्फुटाक्षरं (६) गीता। प्रायेण हि पक्षिणः पशवश्च भयाहार-मैथुन-निद्रा-संज्ञामात्र-[७] वेदिनो भवन्ति। इदन्तु महच्चित्रम्।" [क]

(क) श्रुतेति। श्रुतेति काकुः श्रुता किमित्यर्थः। विहङ्गमस्य पक्षिणः। अयं शुकः, असङ्कीर्णः परस्परं सम्बन्धेन अश्रूयमाणः, वर्णानामक्षराणां प्रविभागः पार्थक्यं यस्यां ताम्। अभिव्यक्ताः स्पष्टं प्रतीयमानाः मात्रा ह्रस्व-दीर्घप्लुतरूपाः, अनुस्वारः प्रसिद्धः, स्वरः कण्ठध्वनिः, संस्कारो व्याकरणशुद्धिश्च एतेषां योगः सम्बन्धो यस्यां ताम्। विशेषेण साधारणतः केनचिदतिरिक्तेन वस्तुना श्लेषालङ्कारेणेत्यर्थः युक्तां सम्पन्नाम्, अतिपरि-स्फुटाक्षरां नितान्तविस्पष्टवर्णां गिरं वाक्यम् उदीरयति उच्चारयति। अत्र असङ्कीर्णवर्णप्रविभागामित्यनेन तालव्यशकार-दन्त्य-सकारादीनाम् उच्चारणवैषम्यमभिहितम्, अतिपरिस्फुटाक्षरामित्यनेन तु सर्वविधवर्णानामेव स्पष्टोच्चारणं प्रतिपादितमिति न पुनरुक्ततादोषः। तत्रोच्चारणविषये अपरम् अन्यदाश्चर्य्यमित्यर्थः। किन्तदित्याह अभीति। अभिमतविषये अभिप्रेतविषये तिरश्चोऽपि तिर्य्यग्जातेः पक्षिणोऽपि मनुजस्येव मनुष्यस्येव, संस्का-रवती तत्तद्विषयानुभवजनितो भावनाख्यः संस्कारः तद्वती, बुद्धिपूर्वा बुद्धिप्रयुक्ता विवेचनपूर्विकेत्यर्थः प्रवृत्तिः व्यवहारः। ननु भवता कथमित्थं ज्ञायत इत्याह तथाहीति। अनेन शुकेन। परिस्फुटाक्षरं यथा स्यात्तथा गीता उच्चारिता। तथा च आशीर्वादकाले ब्राह्मणानां दक्षिणहस्तोत्तोलनदर्शनात्तस्य भावनाख्यसंस्कारवशादनेनापि जयशब्दोच्चारणसमये दक्षिणचरणमुत्तोलितम्, तथा 'राज्ञः स्तुतिवाद एव प्रथमं कार्य्यं' इति बुद्धिप्रयुक्ता च इयमार्य्या समुच्चारितेति महदाश्चर्य्यमेवेति भावः। भयं भीतिः आहारो भोजनं, मैथुनं स्त्रीसंसर्गः, निद्रा, प्रमीला, संज्ञा प्रवेशनिर्गमादौ सङ्केतः, तान् वा एतन्मात्रवेदिनः, केवलं तदवगन्तारः। इदन्तु तद्विलक्षणवेदित्वं महच्चित्रम् अतीवाश्चर्य्यम्।

(ক) "আপনারা এই শুকপক্ষীর স্পষ্টরূপে বর্ণোচ্চারণ ও স্বরের মাধুর্য্য শুনিলেন কি ? প্রথমে ইহাই মহাশ্চর্য্য যে, এই পক্ষী সুস্পষ্ট অক্ষরে বাক্য উচ্চারণ করিয়াছে, তাহাতে তালব্য শকার ও দন্ত্য সকারপ্রভৃতি বিজাতীয় বর্ণের উচ্চারণ-বৈষম্য হইয়াছে এবং হ্রস্ব, দীর্ঘ ও প্লুতের বৈষম্য, অনুস্বার, স্বর ও ব্যাকরণশুদ্ধি সুস্পষ্ট লক্ষিত হইয়াছে। তাহাতে অপর আশ্চর্য্য এই যে, মনুষ্যের ন্যায় তির্য্যগ্জাতীয় পক্ষীরও অভিলষিত বিষয়ে মনের সংস্কার ও বিবেচনাপূর্ব্বক বলিতে আরম্ভ করা ; তাহার প্রমাণ, এই পক্ষী

(१) महत्तरमाश्चर्य्यं, महाश्चर्य्यं। (२)···स्वरसंयोगविशेषयुक्तां, स्वरसंयोगाम्। (३) एष पाठः क्वचि-न्नास्ति। (४) पुनरपरमिव। (५) संस्कारवतः। (६) परिस्फुटाक्षराम्। (७)···निद्रामात्र।

इत्युक्तवति भूभुजि कुमारपालितः किञ्चित्स्मितवदनो नृपमवादीत्— "देव! किमत्र चित्रम् [१]। एते हि शुकशारिकाप्रभृतयो विहङ्ग [२] विशेषा यथाश्रुतां [३] वाचमुच्चारयन्तीत्यधिगतमेव देवेन। तत्राप्यन्यजन्मोपात्त-[४] संस्कारानुबन्धेन वा पुरुषप्रयत्नेन वा संस्कारातिशय उपजायत इति नातिचित्रम्। अन्यच्च, [५] एतेषामपि पुरा पुरुषाणामिवातिपरिस्फुटाक्षरा [६] वागासीत्, अग्निशापात्त्वस्फुटालापता [७] शुकानामुपजाता, करिणाञ्च [८] जिह्वापरिवृत्तिः।" [क]

(क) इतीति। भूभुजि राजनि। किञ्चिदीषत् स्मितं हास्यं यत्र तादृशं वदनं मुखं यस्य सः। अधिगतमेव ज्ञातमेव। अन्यजन्मनि पूर्व्वजन्मनि उपात्तस्य गृहीतस्य प्राप्तस्य संस्कारस्य भावनाख्यस्य अनुबन्धेन इह जन्मनि अनुवृत्त्या। पुरुषाणां परिपालकजनानां प्रयत्नेन पाठनादिना उद्योगेन संस्कारातिशयः शुकशारी-प्रभृतीनां भावनाख्यसंस्कारातिरेकः, उपजायते उत्पद्यते, इति हेतोः, नातिचित्रम् अस्य तादृगुच्चारणं न अत्याश्चर्य्यम्। अस्यापि पूर्वजन्मोपात्तसंस्कारानुवृत्तिसम्भवात् एतेषामुद्योगेन तादृशशिक्षालाभसम्भवाच्चेति भावः। अन्यच्च नातिचित्रत्वे कारणान्तरञ्च, एतेषामपि शुकादीनाम्। अतिपरिस्फुटानि नितान्तस्पष्टानि अक्षराणि वर्णा यस्यां सा तादृशी वाक् वाक्यं, तु किन्तु। अस्फुटालापता अस्पष्टवाक्यता। करिणां हस्ति-नाञ्च जिह्वाया रसनायाः परिवृत्तिः विपरीतभावेनावस्थितिः उपजातेत्यन्वयः। सुतरामस्य भाग्यवशात्तच्छाप-विषयतातिक्रमेण परिस्फुटालापता सम्भवत्येवेति नातिचित्रमिति भावः।

पुरा तारकासुरपीड़िता देवा ब्रह्माणं शरणं गताः। ब्रह्मा तु तानाह स्म, कार्त्तिकेयो नामाग्नेः पुत्रो भविता, स तारकासुरं हनिष्यति, अतस्तमग्निमन्विष्य तत्पुत्रं याचध्वमिति। देवास्तु अग्निमन्विष्यन्तः क्वाप्यप्राप्नुवन्तो महान्तं करिणमेकं दृष्ट्वा पप्रच्छुः क्वाग्निरिति। स करी 'अश्वत्थतरौ विलीनोऽग्नि'रित्युवाच। अथाग्निर्निष्क्रम्य "तव जिह्वा प्रतीपा भविष्यती"ति तं करिणमभिशप्य पुनः शमीमध्ये निलीनः, तदा

দক্ষিণ চরণ উত্তোলনপূর্ব্বক জয়শব্দ উচ্চারণ করিয়া আমার উদ্দেশে এই আর্য্যাটি অতিস্পষ্টা-ক্ষরে পাঠ করিয়াছে। প্রায়শই পক্ষী ও পশুগণ ভয়, আহার, স্ত্রীসংসর্গ, নিদ্রা ও পিঞ্জরপ্রভৃতি হইতে নির্গম ও প্রবেশাদির সঙ্কেত মাত্র জানে। কিন্তু ইহার ঈদৃশ বাক্য উচ্চারণ অতীব আশ্চর্য্য।

রাজা এই কথা বলিলে, কুমারপালিত ঈষৎ হাস্য করিয়া রাজাকে বলিলেন "মহারাজ! এ বিষয়ে আশ্চর্য্য কি আছে? কারণ, এই সকল শুকশারিকাপ্রভৃতি পক্ষিবিশেষ যেমন শোনে, তেমন বাক্যই উচ্চারণ করিয়া থাকে, ইহা আপনি অবগতই আছেন। তাহাতেও আবার পূর্ব্বজন্মের সংস্কার অনুসারে কিংবা প্রতিপালকের চেষ্টায় ইহাদের সাতিশয় সংস্কার

(१) देव! किमत्र हासमात्रः पाठः क्वचित्। (२) विहङ्गम। (३) यथाश्रुतम्।
(४) तत्राप्यत्रान्यजन्म। (५) अन्यत्। (६) अतिपरिस्फुटाभिधाना। (७) अग्निशापादवधि।
(८) शारिकानाञ्च।

ইত্যেবমুচ্চারয়ত্যেব তস্মিন্নশিশিরকিরণমম্বরতলস্য মধ্যমারূঢ়মাবেদয়ন্, নাড়িকাচ্ছেদ-প্রহত-পটু-পটহ-নাদানুসারী মধ্যাহ্নশঙ্খধ্বনিরুদতিষ্ঠত্। তমাকর্ণ্য চ সমাসন্নস্নানসময়ো বিসর্জিতরাজলোকঃ ক্ষিতিপতিরাস্থানমণ্ডপাদুদতিষ্ঠত্। [খ]

অথ চলতি মহীপতাবন্যোন্যমতিরভস-সঞ্চলন-চালিতাঙ্গদ-পত্রভঙ্গ-মকর-কোটি-পাটিতানেকপটানাম্, [১] আক্ষিপ্তদোলায়মান-কণ্ঠদাম্নাম্, [২] অংস-

---

চ ইতি: পৃষ্টঃ শুকঃ 'ময়ীগর্ভে নিলীনো বহ্নি'রিত্যভিদধে। ততস্তেনাऽপি বহ্নিনা 'ত্বং বাগ্বিহীনো ভবিষ্যসি' ইতি শুকঃ শশাপ। ইতি মহাভারতীয়া বার্তাऽনুসন্ধেয়া।

(খ) ইত্যেবমিতি। তস্মিন্ কুমারপালিতে। অশিশিরকিরণম্ উষ্ণরশ্মিং সূর্য্যম্ অম্বরতলস্য আকাশস্য মধ্যমারূঢ়ং মধ্যস্থানগতম্ আবেদয়ন্ বিজ্ঞাপয়ন্, তথা নাড়িকাচ্ছেদে সভাভঙ্গমুহূর্ত্তসমাপ্তৌ তৎকাল সমুত্থঃ প্রহতানাং করতলাদিনা তাড়িতানাং নানাবিধযন্ত্রাণামিত্যর্থঃ যঃ পটুঃ স্পষ্টঃ পটহঃ বাদ্যারম্ভঃ তস্য নাদানুসারী শব্দানুগামী, মধ্যাহ্নসূচকঃ শঙ্খধ্বনিঃ মধ্যাহ্নশঙ্খধ্বনিঃ। প্রতিদিনমেব তত্তৎসময়ে তাদৃশধ্বনিরভবদিতি বোধ্যম্। ক্ষিতিপতিঃ শূদ্রকঃ, আস্থানমণ্ডপাৎ সভাগৃহাৎ।

"অথ পটু...স্ফুটে রোগবিহীনে চ।" "পটহো বাদ্য আরম্ভে" ইতি চ হৈমঃ।

(গ) অথেতি। মহীপতৌ রাজনি শূদ্রকে চলতি সভামণ্ডপাৎ গন্তুমারভমাণে সতি উত্তিষ্ঠতাং মহীপতীনাং সামন্তনরপতীনাম্ অন্যোন্যং পরস্পরম্ অতিমহান্ সম্ভ্রমঃ সম্মর্দ্দ আসীদিত্যন্বয়ঃ। সর্ব্বাণি ষষ্ঠ্যন্তানি সামন্তমহীপতীনাং বিশেষণানি। অতিরভসেন নিতান্তবেগেন যৎ সঞ্চলনং গমনং তেন চালিতানাম্ আন্দোলিতানাং

---

জন্মে, অতএব ইহাতে অত্যন্ত আশ্চর্য্যের বিষয় নাই। আরও দেখুন, পূর্ব্বকালে ইহাদেরও মনুষ্যের ন্যায় স্পষ্টাক্ষর বাক্য ছিল, কিন্তু অগ্নির অভিশাপে শুকপক্ষিগণের অস্পষ্টভাষিতা এবং হস্তিগণের জিহ্বার পরিবর্ত্তন হইয়াছে।

(খ) কুমারপালিত এইরূপ বলিবামাত্রই, 'সূর্য্য আকাশের মধ্যস্থানে উঠিয়াছেন,' ইহা সাধারণকে জানাইয়া, সভাভঙ্গসময়ে বাদিত নানাবিধ বাদ্যযন্ত্রের সুস্পষ্ট বাদ্যারম্ভের সঙ্গে সঙ্গে (নহবৎ বাজনার সহিত) মধ্যাহ্নকালের শঙ্খধ্বনি উঠিল। তাহা শুনিয়া মহারাজ শূদ্রক, স্নানের সময় উপস্থিত হইয়াছে জানিয়া, সামন্তরাজগণকে বিদায় দিয়া সভামণ্ডপ হইতে উঠিলেন।

(গ) তদনন্তর মহারাজ শূদ্রক সভামণ্ডপ পরিত্যাগ করিয়া চলিলে, সামন্ত-রাজগণের উত্থানসময়ে পরস্পর অত্যন্ত সংঘর্ষ হইয়াছিল; অতিবেগে গমন করায় সঞ্চলিত কেয়ূর,

---

(১) পাটিতাম্বরপটানাং পাটিতাংশুকানাম্। (২) মালতীকণ্ঠদাম্নাম্।

স্থলোল্লসিত-(১) কুঙ্কুম-পটবাস-ধূলি-পিঞ্জরিত-দিশাম্, (২) আলোল-মালতী-কুসুম-(৩) শেখরোৎপতদলি-কদম্বকানাম্, অর্দ্ধাবলম্বিভিঃ কর্ণোৎপলৈঃ চুম্ব্যমান-গণ্ডস্থলানাম্, গমন-প্রণাম-লালসানাম্, (৪) অহমহমিকয়া বক্ষঃস্থল-প্রেঙ্খোলিত-হারলতানাম্, উত্তিষ্ঠতামাসীদতিমহান্ (৫) সম্ভ্রমো মহীপতীনাম্। (গ)

ইতশ্চেতশ্চ নিষ্পতন্তীনাং স্কন্ধাবসক্ত-(৬) চামরাণাং চামরগ্রাহিণীনাং কমল-মধু-পান-মত্ত-(৭) জরৎ-কলহংস-নাদ-জর্জ্জরেণ (৮) পদে পদে রণিত-

---

অঙ্গদানাং কেয়ূরাণাং পত্রভঙ্গানাম্ আভরণবিশেষাণাং মকরাণাং মকরাকৃতকর্ণালঙ্কারাণাং কোটিভিঃ অগ্রভাগৈঃ পাটিতাশ্ছিন্নাঃ অনেকে পটা বসনানি যেষাং তেষাম্। আক্ষেপেণ সহসা দেহসঞ্চালনেন দোলায়মানানি প্রচলিতানি কণ্ঠদামানি কণ্ঠহারা যেষাং তেষাম্। অংসস্থলেভ্যঃ স্কন্ধদেশেভ্যঃ উল্লসিতাভিরুত্থিতাভিঃ কুঙ্কুমানাং পটবাসানাং সুগন্ধচূর্ণবিশেষাণাঞ্চ ধূলিভিঃ রেণুভিঃ পিঞ্জরিতাঃ পিঙ্গলবর্ণীকৃতা দিশো যৈঃ তেষাম্। আলোলেভ্যো নিতান্তচলিতেভ্যঃ মালতীকুসুমানাং শেখরেভ্যঃ শিরোভূষণেভ্যঃ, উৎপতন্তি উড্ডীয়মানানি অলিকদম্বকানি ভ্রমরসমূহা যেষাং তেষাম্। অর্দ্ধাবলম্বিভিঃ কিঞ্চিদ্বলিতৈরিত্যর্থঃ কর্ণোৎপলৈঃ চুম্ব্যমানানি শিরোনমনাৎ স্পৃশ্যমানানি গণ্ডস্থলানি যেষাং তেষাম্। গমনে রাজ্ঞঃ প্রস্থানকালে প্রণামায় নমস্কারায় লালসানাং নিতান্তাভিলাষুকাণাম্ অহমগ্রে অহমগ্রে ইত্যহমহমিকা। ময়ূরব্যংসকাদিত্বাৎ সাধুঃ তয়া, বক্ষঃস্থলেষু প্রেঙ্খোলিতা আন্দোলিতা হারলতা যেষাং তেষাম্। "অহমহমিকা তু সা স্যাৎ যঃ পরস্পরং ভবত্যহঙ্কারঃ" ইত্যমরঃ।

(ঘ) ইতশ্চেতি। তদাস্থানভবনং রাজ্ঞঃ সভাগৃহং সর্ব্বতঃ ক্ষুভিতমিব উদ্বেলিতমিব অভবদিতি বক্ষ্যমাণক্রিয়য়ান্বয়ঃ, তত্র তৃতীয়ান্তানি পদানি ক্ষুভিতমিত্যস্য করণানি, ষষ্ঠ্যন্তানি চ তত্তৎকরণসম্বন্ধিবোধকানি ইতশ্চেতশ্চ সর্ব্বাসু দিক্ষু নিষ্পতন্তীনাং প্রচলন্তীনাং, স্কন্ধেষু অবসক্তানি স্থিতানি চামরাণি যাসাং তাসাং

---

বক্রপত্রাকৃতি আভরণ ( বাজু, বিজাটা ) ও মকরাকৃতি কর্ণকুণ্ডলের অগ্রভাগে সংলগ্ন হইয়া অনেক বসন ছিন্ন হইয়াছিল; সহসা দেহ সঞ্চালন করায় অনেকের কণ্ঠমালা আন্দোলিত হইতেছিল; স্কন্ধ হইতে উত্থিত কুঙ্কুম ও সুগন্ধ চূর্ণদ্রব্যের রেণুতে দিক্‌সকল পিঙ্গলবর্ণ করিয়াছিল; মস্তকস্থিত কম্পিত মালতীকুসুমের মালা হইতে ভ্রমরগণ উড়িতেছিল; কর্ণের উৎপল ঈষৎ আন্দোলিত হইয়া গণ্ডস্থলে সংলগ্ন হইতেছিল; গমনসময়ে মহারাজকে নমস্কার করিতে অভিলাষী রাজগণের 'আমি অগ্রে আমি অগ্রে' এইরূপ ত্বরাবশতঃ হারসমূহ বক্ষঃস্থলে আন্দোলিত হইতেছিল।

(ঘ) চামরধারিণী রমণীগণ, স্কন্ধে চামর স্থাপন করিয়া ইতস্ততঃ যাইতে লাগিল, তাহা-

---

(১) স্থলোল্লাসিত। (২) ধূলিপটলপিঞ্জরিতাদিশা। (৩) মালতীপুষ্প। (৪) প্রথমপ্রণামলালসানাম্ (৫) আসীৎ সম্ভ্রমঃ। (৬) স্কন্ধদেশাবসক্ত...। (৭)...মদমত্ত...। (৮) জর্জ্জরিতেন।

মণীনাং মণিনূপুরাণাং নিনাদেন, (ঙ) বারবিলাসিনীজনস্য সঞ্চরতো জঘনস্থলাস্ফালন-(১) রসিত-রত্নমালিকানাং মেখলানাং (২) মনোহারিণা ঝঙ্কারেণ (চ) নূপুররবাকৃষ্টানাঞ্চ ধবলিতাস্থানমণ্ডপ-সোপানফলকানাং ভবনদীর্ঘিকাকলহংসকানাং কোলাহলেন, (ছ) রসনারসিতোৎসুকানাঞ্চ (৩) তারতর-বিরাববিমুক্তোল্লিখ্যমান-কাংস্য-(৪) ক্রেঙ্কার-দীর্ঘেণ গৃহসারসানাং কূজিতেন, (জ) সরভসপ্রচলিত-সামন্তশত-চরণতলাভিহতস্য চাস্থানমণ্ডপস্য নির্ঘোষগম্ভীরেণ (৫) কম্পয়তেব

---

চারযায়িণীনাং স্ত্রীণাম্, কমলমধুপানেন পদ্মমধুপানেন মত্তাঃ জরন্তো বৃদ্ধা যে কলহংসাস্তেষাং নাদবৎ কলধ্বনিবৎ অন্তরেণ অসংসর্গেণ সর্বদা পৃথক্ পৃথক্ শ্রূয়মাণেন। অত্র লুপ্তোপমালঙ্কারঃ। পদে পদে প্রতিপদক্ষেপে রণিতাঃ শব্দিতাঃ মণয়ো যেষু তাদৃশানাং মণিনূপুরাণাং নিনাদেন শিঞ্জিতেন।

(ঙ) বারেতি। সঞ্চরতঃ ভ্রমতঃ বারবিলাসিনীজনস্য বেশ্যাজনস্য, জঘনস্থলানাং নিতম্বানাম্ আস্ফালনেন আঘাতেন রসিতা শব্দিতা রত্নমালিকা রত্নশ্রেণী যাসাং তাদৃশীনাং মেখলানাং কাঞ্চীনাং মনোহারিণা ঝঙ্কারেণ ঝন ঝন শব্দেন।

(চ) নূপুরেতি। নূপুররবৈরাকৃষ্টানাং সমানীতানাং, ধবলিতানি স্বস্বশরীরকান্তিভিঃ শুভ্রবর্ণীকৃতানি আস্থানমণ্ডপস্য সভাগৃহস্য সোপানফলকানি সোপানাবলয়ো যৈস্তেষাং ভবনদীর্ঘিকাকলহংসকানাং গৃহসরসীস্থকাদম্বানাং কোলাহলেন কলকলেন।

(ছ) রসনেতি। রসনানাং কাঞ্চীনাং রসিতৈঃ শব্দিতৈঃ রবৈরুৎসুকানাম্ উৎকণ্ঠিতানাম্, তারতরম্ অত্যুচ্চৈঃ বিরুবন্তি শব্দায়ন্তে যে তেষাম্, উল্লিখ্যমানস্য ঘৃষ্যমাণস্য কাংস্যস্য তৈজসবিশেষস্য ক্রেঙ্কারবৎ 'ক্রেঁ ক্রেঁ' ইত্যব্যক্তশব্দবৎ দীর্ঘেণ মহতা, গৃহসারসানাং ভবনস্থসারসপক্ষিণাম্, কূজিতেন অব্যক্তশব্দেন। লুপ্তোপমা।

(জ) সরভসেতি। সরভসং সবেগং প্রচলিতস্য গন্তুং প্রবৃত্তস্য সামন্তশতস্য বহুসংখ্যকাধিকৃতনৃপতীনাং

---

দের প্রত্যেক পদক্ষেপে মণিময় নূপুরের শব্দ হইতেছিল; সেই শব্দসমূহ, পদ্মমধুপানে মত্ত বৃদ্ধ কলহংসগণের ধ্বনির ন্যায় পৃথক পৃথক ভাবে কর্ণগোচর হইতেছিল। (ঙ) গমনকালীন বেশ্যাগণের নিতম্বস্থলের আস্ফালনে শব্দায়মান রত্নময় কাঞ্চীর মনোহর 'ঝন ঝন' শব্দ হইতে লাগিল। (চ) রাজবাটীর সরোবরস্থ কলহংসগণ নূপুরের রবে আকৃষ্ট হইয়া সভাগৃহের সোপানশ্রেণী শ্বেতবর্ণ করিয়া কোলাহল করিতেছিল। (ছ) স্বভাবতঃ উচ্চশব্দকারী রাজবাটীর সারসপক্ষিগণ মেখলার শব্দে উৎকণ্ঠিত হইয়া, ঘর্ষণকালীন কাঁসার শব্দের ন্যায় উচ্চস্বরে শব্দ করিতে লাগিল। (জ) বেগগামী সামন্তরাজগণের চরণের আঘাতে সভামণ্ডপ হইতে

---

(১) জঘনস্থলস্থলাস্ফালন…। (২) মণিমেখলানাং। (৩) উৎসুকানাঞ্চ। (৪)…কাঞ্চী।
(৫) নির্ঘাতগম্ভীরেণ, নির্ঘাতনির্ঘোষগম্ভীরেণ।

বসুমতীং ধ্বনিনা, (১) (জ) প্রতীহারিণাঞ্চ পুরঃ সসম্ভ্রমমুৎসারিতজনানাং (২) দণ্ডিনাং সমারব্ধহেলমুচ্চৈঃ কথয়তামালোকয়তালোকয়তেতি (৩) তারতর-দীর্ঘেণ (৪) ভবন-প্রাসাদ-কুঞ্জেষূচ্চরিত-প্রতিশব্দতয়া (৫) দীর্ঘতরতা-(৬) মুপগতেনা-লোকশব্দেন, (ঝ) রাজ্ঞাঞ্চ সসম্ভ্রমাবর্জিত-মৌলি-লোল-চূড়ামণীনাং প্রণম-তামমল-মণিশলাকা-দন্তুরাভিঃ কিরীট-কোটিভিরুল্লিখ্যমানস্য মণিকুট্টিমস্য

---

চরণতলৈঃ অভিহন্যমানস্য তাড়িতস্য, আস্থানমণ্ডপস্য সভাগৃহস্য, নির্ঘোষেণ মেঘধ্বনিবৎ গম্ভীরেণ বসুমতীং পৃথিবীং কম্পয়তেব ধ্বনিনা শব্দেন। অত্র বাচ্যক্রিয়োৎপ্রেক্ষয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ।

(জ) প্রতীতি। দণ্ডিনাং যষ্টিধারিণাং, পুরঃ রাজ্ঞোঽগ্রতঃ, সসম্ভ্রমং সত্বরং সমুৎসারিতা দূরীকৃতা জনা লোকা যৈস্তেষাং, সমারব্ধঃ প্রবর্ত্তিতা হেলা অবজ্ঞা যস্মিন্ কর্ম্মণি তদ্‌যথা তথা "হেলাবজ্ঞা-বিলাসয়ো"-রিতি ত্রিকাণ্ডশেষঃ, রাজসম্মুখপথরোধিনামনবধানত্বাদবজ্ঞেতি ভাবঃ। আলোকয়তালোকয়ত ভূমণ্ডলেশ্বরো গচ্ছতীতি পশ্যত পশ্যত ইতি উচ্চৈঃ কথয়তাং ব্রুবতাং মার্গাবরোধিনাং সাবধানতাজননার্থমিদমুচ্চৈঃ কথনমিতি ভাবঃ। প্রতীহারিণাং দ্বারপালানাঞ্চ তারতরদীর্ঘেণ অতীবায়তেন, ভবনস্য রাজবাটস্য প্রাসাদানাং দেবগৃহাণাং রাজগৃহাণাঞ্চ কুঞ্জেষু লতাদ্যাচ্ছাদিতস্থানেষু উচ্চরিত উদ্‌গতঃ প্রতিশব্দো যস্য স তথোক্তঃ তস্য ভাবস্তত্তা তয়া, দীর্ঘতরতাং অতীবায়তত্বম্ উপগতেন প্রাপ্তেন, আলোকস্য দর্শনবাচকপদস্য আলোকয়তালোকয়তেত্যেবংরূপস্য শব্দেন উচ্চৈর্ধ্বনিনা।

(ঝ) রাজ্ঞামিতি। সসম্ভ্রমং সত্বরম্ আবর্জিতেষু প্রণামায়াবনমিতেষু মৌলিষু মূর্দ্ধসু লোলা মৌলিকম্পনেন কম্পিতাঃ চূড়ামণয়ঃ শিরোমণয়ো যেষাং তেষাম্ "মৌলিঃ কিরীটে ধম্মিল্লে চূড়াকঙ্কেলিমূর্দ্ধসু।" ইতি হৈমঃ। প্রণমতাং শূদ্রকায় নমস্কুর্ব্বতাং রাজ্ঞাঞ্চ, অমলা স্বচ্ছা যা মণিশলাকা রত্ননির্ম্মিতশলাকাস্তাভিঃ দন্তুরা বিষমাস্তাভিঃ, কিরীটকোটিভিঃ মুকুটাগ্রভাগৈঃ উল্লিখ্যমানস্য ঘৃষ্যমাণস্য মণিকুট্টিমস্য মণিময়বদ্ধভূমেঃ নিস্বনেন শব্দেন।

---

মেঘগর্জ্জনের ন্যায় গম্ভীর শব্দ উত্থিত হইয়া পৃথিবীকে যেন কম্পিত করিতেছিল। (জ) যষ্টিধারী দৌবারিকগণ, রাজার সম্মুখ হইতে লোকদিগকে সত্বর অপসারিত করিতেছিল এবং অবজ্ঞার সহিত উচ্চৈঃস্বরে 'দেখ দেখ' এইরূপ বলিতেছিল, তাহাদের সেই উচ্চ কণ্ঠধ্বনি, রাজবাটীর প্রাসাদসমূহের নিভৃতস্থানে উত্থিত প্রতিশব্দদ্বারা অত্যন্ত দীর্ঘরূপে পরিণত হইতেছিল। (ঝ) সামন্তরাজগণ, সম্ভ্রমের সহিত মস্তক অবনত করিয়া সম্রাট শূদ্রককে নমস্কার করিতেছিলেন, তখন তাঁহাদের চূড়ামণিসমূহ কম্পিত হইতেছিল এবং নির্ম্মল মণিময় শলা-

---

(১) ক্বচিৎ 'ধ্বনিনা' ইতি পাঠো নাস্তি। (২) প্রতিহারাণাং, সসম্ভ্রমজনানাং,...জনপদানাম্।
(৩) আলোকয়ন্নিতি। (৪) তারদীর্ঘেণ। (৫)...প্রতিচ্ছন্দতয়া। (৬) দীর্ঘতাম্।

নিস্বনেন, (১) (ঞ) প্রণামপর্য্যস্তানামতিকঠিন-মণিকুট্টিম-নিপতন-(২)-রণ-রণায়িতানাঞ্চ মণিকর্ণপূরাণাং নিনাদেন, (ট) মঙ্গলপাঠকানাঞ্চ পুরোযায়িনাং জয়-জীবেতি মঙ্গলমধুরবচনানুযাতেন (৩) পঠতাং দিগন্তব্যাপিনা কলকলেন, (ঠ) প্রচলিত-জন-চরণশত-সংক্ষোভ-ভয়াদপহায় (৪) কুসুমপ্রকরমুৎপততাঞ্চ মধুলিহাং হুঙ্কৃতেন, (ড) সংক্ষোভাদতিত্বরিতপদপ্রবৃত্ত-(৫) বনিপতিভিঃ কেয়ূর-কোটিতাড়িতানাং ক্বণিত-মুখর-রত্নদাম্নাঞ্চ মণিস্তম্ভানাং রণিতেন সর্বতঃ ক্ষুভিতমিব তদাস্থানভবনমভবৎ। (ঢ)

অথ বিসর্জিতমজলোকো "বিশ্রম্যতা"মিতি স্বয়মেবাভিধায় তাং চাণ্ডাল-(৬)

(ঞ) প্রণামেতি। প্রণামে নমস্কারকালে পর্য্যস্তানাং পতিতানাং ভূতললগ্নানাম অতিকঠিনে মণিকুট্টিমে নিপতনেন রণরণায়িতানাং 'রণ রণ' ইতি শব্দং কুর্বতাং মণিকর্ণপূরাণাং তেষাং রাজ্ঞামেব রত্নময়কর্ণাভরণানাং নিনাদেন শব্দেন।

(ট) মঙ্গলেতি। পুরোযায়িনামগ্রগামিনাং পঠতাং কীর্ত্তিগাথামুচ্চারয়তাং মঙ্গলপাঠকানাং বন্দিনাঞ্চ জয়-জীবেতি মঙ্গলমধুরবচনেন অনুযাতঃ অনুসৃতস্তেন, দিগন্তব্যাপিনা দূরপ্রসারিণীত্যর্থঃ কলকলেন কোলাহলেন।

(ঠ) প্রচলিতেতি। প্রচলিতানাং গমনারম্ভমাণানাং জনানাং চরণশতস্য বহুতরচরণানামিত্যর্থঃ সংক্ষোভভয়াৎ দলনভয়াৎ কুসুমপ্রকরং পুষ্পসমূহং বিহায় উৎপততাম উড্ডীনং কুর্বতাং মধুলিহাং ভ্রমরাণাং হুঙ্কৃতেন শব্দেন।

(ড) সংক্ষোভাদিতি। সংক্ষোভাৎ সার্বভৌমস্যাভিবাদনায় ব্যস্ততাবশাৎ অতিত্বরিতপদেষু নিতান্তসত্বরপদক্ষেপেষু প্রবৃত্তৈঃ কৃতারম্ভৈঃ অবনিপতিভিঃ সামন্তৈঃ কর্তৃভিঃ কেয়ূরাণামঙ্গদানাং কোটিভিরগ্রভাগৈঃ করণৈঃ তাড়িতানামাহতানাম্, ক্বণিতেন তত্তাড়নশব্দেন মুখরাণি শব্দায়মানানি রত্নদামানি রত্ননির্ম্মিতবেষ্টনশৃঙ্খলা যেষু তেষাং মণিস্তম্ভানাং মণিময়স্থূণানাং রণিতেন শব্দেন চ, তদাস্থানভবনং সভাগৃহং সর্বতঃ ক্ষুভিতমুদ্বেলিতমিব অভবদিত্যন্বয়ঃ পূর্বমপ্যুক্তঃ।

(ঢ) অথেতি। বিসর্জিতা মধুরবচনেনাভাষ্য পরিত্যক্তা রাজলোকাঃ সামন্তা যেন স তথোক্তো নরপতিঃ

কাতে বিষমীকৃত মুকুটাগ্রদেশের ঘর্ষণে মণিময় ভবনাঙ্গন হইতে শব্দ উত্থিত হইতেছিল। (ট) নমস্কারের সময় অত্যন্ত কঠিন মণিময় ভবনাঙ্গনে নিপতিত হইয়া সামন্তরাজগণের রত্নময় কর্ণাভরণ 'রণ রণ' শব্দ করিতেছিল। (ঠ) অগ্রগামী স্তুতিপাঠকগণ, রাজার কীর্ত্তিকলাপ উচ্চারণ করিয়া 'জয় হউক, দীর্ঘজীবী হউন' এইরূপ মঙ্গলকর মধুর বাক্যের সহিত দূরগামী কোলাহল করিতেছিল। (ড) স্ব স্ব গন্তব্যস্থানগামী জন-সমূহের চরণাঘাতের ভয়ে ভ্রমরগণ, কুসুমসমূহ পরিত্যাগপূর্ব্বক উড্ডীন হইয়া 'ভন ভন' শব্দ করিতেছিল। (ঢ) আর ব্যস্ততাবশতঃ দ্রুতগামী সামন্ত-রাজগণের কেয়ূরাগ্রের তাড়নে শব্দায়মান রত্নশৃঙ্খলা-বেষ্টিত মণিময় স্তম্ভসমূহের শব্দ হইতেছিল। নানাজাতীয় এই সকল শব্দে সেই সভামণ্ডপ যেন সর্ব্বতোভাবে উদ্বেলিত হইয়াছিল।

(ণ) তদনন্তর মহারাজ শূদ্রক, উপস্থিত সামন্তরাজগণকে মধুরালাপে বিদায় করিয়া

(১) স্বনেন, নিঃস্বনেন। (২) নিপতিত··· (৩) মধুরবচনানুযাতেন। [৪] সংক্ষোভাদিহায়। [৫] ত্বরিতপদং প্রবৃত্তৈঃ, ত্বরিতপদং প্রবৃত্তৈঃ। (৬) চণ্ডাল---।

कन्यकाम्, "वैशम्पायनः प्रवेश्यतामभ्यन्तरम्" (१) इति ताम्बूलकरङ्कवाहिनी-मादिश्य कतिपयाप्तराजपुत्रपरिवृतो नरपतिरभ्यन्तरं प्राविशत्। [ण]

अपनीताशेष-भूषणश्च दिवसकर इव विगलितकिरणजालः चन्द्रतारकाशून्य इव गगनाभोगः समुपाहृत-समुचित-व्यायामोपकरणां व्यायामभूमिमयासीत्।[त]

स तस्यां च समानवयोभिः सह राजपुत्रैः कृतमधुरव्यायामः, श्रमवशादुन्मि-षन्तीभिः कपोलयोरीषदवदलित-सिन्धुवार-[२] कुसुम-मञ्जरी-विभ्रमाभिः,

---

शूद्रकः, स्वयमेव तां चाण्डालकन्यकां विश्रम्यतां विश्रामः क्रियतामित्यभिधाय उक्त्वा, वैशम्पायनः स शुकः अभ्यन्तरं गृहमध्यं प्रवेश्यतां नीयतामिति ताम्बूलकरङ्कवाहिनीं पर्णवीटिकाधारिणीं स्त्रियम् आदिश्य, कतिपयैः स्वल्प-संख्यकैः, आप्तैः विश्वस्तैः राजपुत्रैः परिवृतः परिवेष्टितः सन् अभ्यन्तरं भवनमध्यम्।

(त) अपेति। अपनीतानि देहात् विमुक्तानि अशेषाणि सकलानि भूषणानि आभरणानि येन सः, अतएव विगलितकिरणजालः सन्ध्याकाले विलुप्तरश्मिसमूहः दिवसकरः सूर्य्य इव, स्वतस्तेजस्वित्वादिति भावः। तथा चन्द्रतारकाशून्यः गगनाभोगः नभोविस्तारः विस्तृताकाश इव विशालदेहत्वादिति भावः। समुपाहृतानि किङ्करैर्नीतानि समुचितानि योग्यानि व्यायामोपकरणानि परिश्रमकरणोपयोगिद्रव्याणि लौह-मुद्गरादीनि यस्यां ताम्। अत्रोपमालङ्कारयोर्मिथोनिरपेक्षतया संसृष्टिः।

नायं खल्विदानीन्तनो धनियुवेव केवलविलासपेशल आसीत्, येन प्रचुरतरमाहार्य्यमभ्यवहार्य्य-वातपीवर-शरीरो रात्रिन्दिवं निद्रामुपेयादिति।

(थ) स इति। तस्यां व्यायामभूमौ समानवयोभिः राजपुत्रैः सह कृतमधुरव्यायामः विहितसुदृश्य-परिश्रमः स राजा स्नानभूमिमगच्छदिति परेणान्वयः। अत्र [illegible] विशेषणस्य 'स्वेदजल-कणिकासन्ततिभि'रिति कर्त्तृपदम्, अन्यानि तृतीयान्तपदानि च तस्योपमानवाचकानि। श्रमवशात् कपोलयो-र्गण्डयोः उन्मिषन्तीभिराविर्भवन्तीभिः। ईषदवदलितं किञ्चिद्दलितं प्रकाशितं यत् सिन्धुवारकुसुमं तस्य

---

নিজেই সেই চণ্ডালকন্যাকে বলিলেন, "তুমি এখন বিশ্রাম কর" এবং তাম্বূলকরঙ্কবাহিনীকে আদেশ করিলেন, "বৈশম্পায়নকে বাটীর মধ্যে লইয়া যাও"—তাহার পর স্বয়ং বাটীর মধ্যে প্রবেশ করিলেন।

(ত) প্রবেশপূর্ব্বক দেহ হইতে সমস্ত আভরণ উন্মোচন করিয়া সন্ধ্যাকালীন কিরণ-জালবিহীন সূর্য্যের ন্যায় এবং চন্দ্র ও নক্ষত্রশূন্য আকাশের ন্যায় শূন্যদেহে ব্যায়ামস্থানে গমন করিলেন, সে স্থানে পরিচারকগণ পূর্ব্বেই ব্যায়ামোপযোগী লৌহমুদ্গর প্রভৃতি আনিয়া রাখিয়াছিল।

(থ) মহারাজ শূদ্রক সেই ব্যায়ামভূমিতে সমবয়স্ক রাজপুত্রগণের সহিত সুদৃশ্য ব্যায়াম করিলেন, সেই পরিশ্রমে তাঁহার কপোলযুগলে ঘর্ম্মবিন্দু নির্গত হইয়া ঈষৎ প্রস্ফুটিত সিন্ধু-

---

(१) अभ्यन्तरं स्नानपानाशनादिना च सुस्थिरं [illegible] क्रियतामिति, अभ्यन्तरमशनादिना चोपचर्य्यताम्।

(२)···अवदलित-सितसिन्धुवार···।

উরসি নির্দ্দয়শ্রম-[১] ছিন্ন-হার-বিগলিত-মুক্তাফল-প্রকরানুকারিণীভিঃ, ললাটপট্টেঽষ্টমী-চন্দ্র-শকল-তলোল্লসদমৃতবিন্দু-বিড়ম্বিনীভিঃ স্বেদজলকণিকা-সন্ততিভিরলঙ্ক্রিয়মাণমূর্ত্তিঃ, [ধ] ইতস্ততঃ স্নানোপকরণ-সম্পাদনসত্বরেণ পুরঃপ্রধাবতা [২] পরিজনেন [৩] তৎকালং বিরলজনেঽপি [৪] রাজকুলে সমুৎ-সারণাধিকারমুচিতমাচরদ্ভিঃ [৫]-দণ্ডিভিরুপদিশ্যমানমার্গঃ, [ন] বিতত-সিতবিতানাম্, অনেক-চারণগণ-নিবধ্যমানমণ্ডলাম্ [৬] গন্ধোদক-পূর্ণ-কনক

---

মঞ্জর্য্যা ইব বিভ্রতী বিলসন্তী যা তাভিঃ। অত্র লুপ্তোপমালঙ্কারঃ। উরসি বক্ষসি নির্দ্দয়শ্রমেণ কঠিন-পরিশ্রমেণ ছিন্নো যো হারস্তস্মাৎ বিগলিতানাং পতিতানাং মুক্তাফলানাং প্রকরং সমূহম্ অনুকর্ত্তুং শীলং যাসাং তাভিঃ। অত্রাপ্যুপমালঙ্কারঃ। ললাটপট্টে ভালস্থলে, অষ্টমীচন্দ্রশকলতলে অষ্টমীতিথিসম্বন্ধিচন্দ্র-খণ্ডে উল্লসন্তো দীপ্যমানা যে অমৃতবিন্দবস্তান্ বিড়ম্বয়িতুম্ অনুকর্ত্তুং শীলং যাসাং তাভিঃ। অত্রাপ্যুপ-মা। অষ্টমীপদং ললাটস্য অষ্টমীচন্দ্রাকারতাদ্যোতনার্থম্। স্বেদজলকণিকাসন্ততিভিঃ ঘর্ম্মবিন্দুশ্রেণীভিঃ অলঙ্ক্রিয়মাণা মূর্ত্তিঃ শরীরং যস্য সঃ।

(ধ) ইতস্তত ইতি। স্নানোপকরণানাং জলাদীনাং সম্পাদনে সত্বরেণ ত্বরান্বিতেন, অতএব পুরঃপ্রধাবতা অগ্রতো দ্রুতং গচ্ছতা, পরিজনেন পরিচারকলোকেন, উপদিশ্যমানেত্যস্য কর্ত্তৃপদমেকমেতৎ। তথা তৎকালং তস্মিন্ মধ্যাহ্নসময় ইত্যর্থঃ, বিরলা অল্পা জনা যত্র তাদৃশেঽপি, সুতরামুৎসারণায়া অনাবশ্যকত্বেঽপীতি ভাবঃ, রাজকুলে রাজভবনে উচিতং যোগ্যং স্বকর্ত্তব্যম্ ইত্যতঃ সমুৎসারণাধিকারং জনসম্মর্দ্দনিবারণকার্য্যম্ আচরদ্ভিঃ কুর্ব্বদ্ভিঃ, দণ্ডিভিঃ যষ্টিধারিভিঃ পুরুষৈঃ, উপদিশ্যমানঃ প্রদর্শ্যমানঃ মার্গঃ স্নানভূমিগমনপন্থা যস্য সঃ। রাজবিশেষণমেতৎ।

(ন) বিততেতি। দ্বিতীয়ান্তানি স্নানভূমিবিশেষণানি। বিততম্ উপরি বিস্তীর্ণং সিতং শুভ্রং বিতানং

---

সারকুসুমের (নিসিন্দাফুলের) মঞ্জরীর ন্যায় শোভা পাইতে লাগিল; বক্ষঃস্থলে ঘর্ম্মবিন্দু বহির্গত হইয়া, কঠিন পরিশ্রমে ছিন্ন হার হইতে বিগলিত মুক্তাসমূহের অনুকরণ করিতে লাগিল; আর ললাটদেশে ঘর্ম্মবিন্দু নির্গত হইয়া, অষ্টমীর চন্দ্রখণ্ডের উপরিভাগস্থিত অমৃতবিন্দুসমূহের ন্যায় বিরাজ করিতেছিল; তখন সেই ঘর্ম্মবিন্দুসমূহে তাঁহার দেহ অলঙ্কৃত হইয়াছিল।

(ধ) এদিক ওদিক হইতে স্নানীয় দ্রব্য আনয়ন করিবার নিমিত্ত ত্বরান্বিত পরিজনগণ অগ্রে অগ্রে দ্রুত গমন করিয়া এবং সেই সময়ে রাজবাটীতে অল্প লোক থাকিলেও যষ্টিধারী পুরুষগণ নিজেদের কর্ত্তব্য বলিয়া জনসংঘর্ষনিবারণের ভাণ দেখাইয়া মহারাজকে স্নানস্থানে যাইবার পথ বলিয়া দিতেছিল।

(ন) এই ভাবে মহারাজ স্নানস্থানে উপস্থিত হইলেন; সে স্থানের উপরিভাগে শ্বেতবর্ণ চন্দ্রাতপ বিস্তৃত ছিল; অনেক স্তুতিপাঠকগণ চতুর্দ্দিকে মণ্ডলাকারে দণ্ডায়মান ছিল;

---

(১) ...বাসশ্রম, বহিঃশ্রম...। (২) প্রধাবিতা। (৩) পরিজনেনানুগম্যমানঃ।
(৪) বিরলেতরেঽপি। (৫) সমাচরদ্ভিঃ। (৬) আবধ্যমানমণ্ডলাম্।

য-দ্রোণী-[১] সনাথমধ্যাম্, উপস্থাপিত-স্ফাটিক-স্নানপীঠাম্, একান্তনিহি-তাতিসুরভিগন্ধসলিলপূর্ণৈঃ পরিমলাকৃষ্ট-মধুকর-কুলান্ধকারিতমুখৈরাতপ-ভয়ান্নীলকর্পটাবগুণ্ঠিতমুখৈরিব স্নানকলশৈরুপশোভিতাং স্নানভূমিমগ-চ্ছৎ। [ধ]

অবতীর্ণস্য চ (২) জলদ্রোণীং বারবিলাসিনী-কর-মৃদিত-সুগন্ধামলক-লিপ্তশিরসো রাজ্ঞঃ সমন্তাৎ সমুপতস্থুঃ অংশুক-নিবিড়-নিবদ্ধ-(৩) স্তনপরিকরাঃ,

---

ন্দুনগো যস্যাং তাম্। অনেকৈঃ স্বর্ণকারৈঃ কুশলৈঃ সুনিপুণৈঃ নিবধ্যমানং ক্রিয়মাণং মণ্ডনং মণ্ডপ-রিকাবস্থানং যস্যাং তাম্। গন্ধোদকৈঃ সুরভিসলিলৈঃ পূর্ণা কনকময়ী সুবর্ণনির্মিতা যা দ্রোণী জলাধার-পাত্রবিশেষঃ, তয়া সনাথঃ সহিতো মধ্যো মধ্যস্থানং যস্যাস্তাম্। উপস্থাপিতং নিহিতং স্ফাটিকং স্ফটিক-নির্মিতং স্নানপীঠং যস্যাং তাম্। একান্তে স্নানভূমেরেকস্মিন্ পার্শ্বে নিহিতৈঃ স্থাপিতৈঃ। এতানি তৃতীয়ান্ত-পদানি স্নানকলশৈরিত্যস্য বিশেষণানি। অতিসুরভিঃ অতীবঘ্রাণতর্পকারী গন্ধো যেষাং তাদৃশৈঃ সলিলৈঃ পূর্ণৈ-র্ভৃতৈঃ, অতএব পরিমলেন জলসৌরভেণ আকৃষ্টেন আকৃষ্টং যৎ মধুকরকুলং ভ্রমরসমূহঃ তেন অন্ধকারি-তানি মলিনান্ধকারীকৃতানি মুখানি যেষাং তৈঃ, অতএব আতপভয়াৎ রবিকিরণসন্তাপভয়াৎ নীলকর্পটৈঃ নীলবর্ণজীর্ণবস্ত্রখণ্ডৈঃ, অবগুণ্ঠিতানি আবৃতানি মুখানি যৈস্তৈরিব স্থিতৈঃ। অত্র বাচ্যা ভাবাভিমানিনী ক্রিয়োৎপ্রেক্ষালঙ্কারঃ।

(ন) অবেতি। অবতীর্ণস্য জলদ্রোণীমধ্যে প্রবিষ্টস্য, বারবিলাসিনীভিঃ গণিকাভিঃ করৈর্হস্তৈঃ মৃদিতেন পিষ্টেন সুগন্ধেন সুরভিণা আমলকেন আমলকীফলবিশেষেণ লিপ্তং শিরো যস্য তস্য, রাজ্ঞঃ শূদ্রকস্য, সমন্তাৎ সর্বাসু দিক্ষু। অংশুকৈঃ স্বস্ববিচ্ছিন্নবসনৈঃ নিবিড়ং দৃঢ়ং যথা স্যাত্তথা নিবদ্ধা আস্ফালননিবা-রণার্থং সংযতাঃ স্তনপরিকরাঃ কুচাভোগা যাভিস্তাঃ। ইত্যাদীনি প্রথমান্তানি বারযোষিত ইত্যস্য বিশেষণানি। দূরে উপরিভাগে সমুৎসারিতানি ঝণৎকারাদ্যুপদ্রবনিবারণার্থম্ উৎক্ষিপ্তানি বলয়ানি যাভিঃ তাসাং তাদৃশী আকুলতা যাসাং তাঃ। সমুৎক্ষিপ্তানি নয়নগণ্ডোপরিপতননিবারণায় ঊর্ধ্বমুৎক্ষিপ্য বদ্ধানি কর্ণা-

---

মধ্যস্থানে সুগন্ধ জলপূর্ণ সুবর্ণনির্ম্মিত একটা দ্রোণী (বড় গামলা) এবং স্ফটিকময় একখানা স্নানপীঠ সংস্থাপিত ছিল; একদিকে অতিসুগন্ধ জলপূর্ণ বহুতর কলস রাখিয়াছিল, সেই জলের সৌরভে ভ্রমরগণ আসিয়া সেই কলস-সমূহের মুখভাগ অন্ধকার করিয়াছিল; তাহাতে বোধ হইতেছিল যেন, কলসসমূহ রৌদ্রের ভয়ে নীলবস্ত্রে মুখ আচ্ছাদন করিয়া রাখিয়াছে।

(ন) মহারাজ সেই জলদ্রোণীমধ্যে প্রবেশ করিলে কতকগুলি বেশ্যা, স্বহস্ত-মর্দ্দিত সুগন্ধ আমলকী দ্বারা তাঁহার মস্তক লিপ্ত করিয়া দিল; এবং আর কতকগুলি বেশ্যা পরি-ধেয় বসন দ্বারা স্তনদেশ দৃঢ়ভাবে বন্ধন করিয়া, হস্তবলয় দূরে উৎক্ষিপ্ত করিয়া, কর্ণালঙ্কার

---

(১) জলদ্রোণী। (২) ক্বচিৎ অস্মাৎ নাস্তি। (৩) অংশুকবিনিবদ্ধ…।

दूरसमुत्सारित-वलय-बाहुलताः, समुत्क्षिप्तकर्णाभरणाः (१) कर्णोत्सङ्गोत्सारितालकाः, गृहीतजल-कलसाः स्नानार्थमभिषेकदेवता इव वारयोषितः। (न)

ताभिश्च समुन्नत-कुचकुम्भ-मण्डलाभिर्वारिमध्यप्रविष्टः करिणीभिरिव वनकरी परिवृतस्तत्क्षणं रराज राजा। (प)

द्रोणीसलिलादुत्थाय च स्नानपीठममलस्फटिकधवलं वरुण इव राजहंसमारुरोह। (फ)

---

भरणानि याभिस्ताः। कर्णोत्सङ्गात् श्रवणसमीपात् उत्सारिता नयनावरणनिवारणार्थम् अपसार्य्य बद्धाः, अलकाश्चूर्णकुन्तला याभिस्ताः। अभिषेकदेवताः स्नानाधिष्ठात्र्यो देव्य इव, स्नानार्थं राज्ञः स्नानविधानार्थम् उपतस्थुः उपस्थिता बभूवुः। अत्र स्वभावोक्तिरलङ्कारः, वाच्या उत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः।

(प) ताभिरिति। वारिमध्यप्रविष्टः जलद्रोणीमध्यगतो राजा शूद्रकः, समुन्नतम् अतीवोच्चं कुचकुम्भमण्डलं यासां ताभिः, ताभिर्वाराङ्गनाभिः, करिणीभिर्वनकरीव परिवृतः परिवेष्टितः सन् तत्क्षणं तस्मिन् समये रराज। समुन्नतेति विशेषणम् उन्नतकुम्भशालिनीनां करिणीनां साम्यप्रतिपादनार्थम्। वनकरीति वनपदं तत्र लोकोपद्रवाभावेन परिवेष्टनसम्भवताप्रदर्शनार्थं लोकालये तु लोकोपद्रवेण तथात्वमसम्भवमिति बोध्यम्।

उपमालङ्कारः। तथा वनकरिणस्तथा शोभायाः सर्वदापि सम्भवात् वनकरी राजते, राजा तु रराज इति कालभेदात् "काप्यभिख्या तयोरासी" दित्यादिदर्पणोदाहृतवदुपमागतभग्नप्रक्रमतादोषः, स च 'वनकरी यथा राजते तथा रराज' इति पाठेन समाधेयः।

(फ) द्रोणीति। अमलस्फटिकेन धवलं स्वच्छस्फटिकमयतया शुभ्रमित्यर्थः।

उपमालङ्कारः। तथा वरुणो राजहंसमारोहति राजा तु आरुरोह इति कालभेदात् पूर्ववद्भग्नप्रक्रमतादोषः, सोऽपि 'वरुणो यथा राजहंसमारोहति तथा राजा स्नानपीठमारुरोह' इति पाठेन समाधेयः।

---

উপরে উত্তোলন করিয়া এবং আলুলায়িত কেশকলাপ কর্ণের নিকট হইতে অপসারিত করিয়া, জলপূর্ণ কলস গ্রহণপূর্ব্বক মহারাজকে স্নান করাইবার নিমিত্ত অভিষেক-দেবতার ন্যায় চতুর্দ্দিকে উপস্থিত হইল।

(প) উন্নত-কুচকুম্ভশালিনী বারাঙ্গনাগণ, জলদ্রোণীমধ্যপ্রবিষ্ট রাজাকে পরিবেষ্টন করিলে তখন তিনি হস্তিনীপরিবেষ্টিত বনহস্তীর ন্যায় শোভা পাইতেছিলেন।

(ফ) বরুণ যেমন জল হইতে উঠিয়া রাজহংসে আরোহণ করেন, রাজা শূদ্রকও তেমন জলদ্রোণী হইতে উঠিয়া নির্ম্মল ও শ্বেতবর্ণ স্ফটিকময় স্নানপীঠে আরোহণ করিলেন।

---

(१)···भरणाभरणाः।

ততস্তাঃ কাশ্চি-(১)ন্মরকত-কলশ-(২) প্রভাশ্যামায়মানা নলিন্য ইব মূর্ত্তিমত্যঃ পত্রপুটৈঃ, (ব) কাশ্চিদ্রজতকলশহস্তা রজন্য ইব পূর্ণচন্দ্রমণ্ডলাৎ বিনির্গতেন জ্যোৎস্নাপ্রবাহেণ, (ভ) কাশ্চিৎ কলশোৎক্ষেপ-শ্রম-স্বেদার্দ্র-শরীরা জলদেবতা ইব স্ফাটিকৈঃ কলশৈস্তীর্থজলেন, (ম) কাশ্চিন্মলয়সরিত ইব চন্দনরসমিশ্রেণ সলিলেন, (য) কাশ্চিদুৎক্ষিপ্ত-কলশ-পার্শ্ব-বিন্যস্ত-হস্ত-

---

(ব) তত ইতি। তা বারাঙ্গনা রাজানমভিষিষিচুরিত্যন্বয়ঃ। মরকতকলশানাং হরিন্মণিময়কুম্ভানাং প্রভাভিঃ শ্যামায়মানা অশ্যামা অপি শ্যামবদাচরন্ত্যঃ, অতএব পত্রপুটৈঃ মূর্ত্তিমত্যো নলিন্যঃ পদ্মিন্য ইব তৈঃ কলশৈঃ রাজানমভিষিষিচুঃ। বেশ্যানলিনীনাং মরকতকলশপত্রপুটানাঞ্চ শ্যামত্বাৎ সাম্যম্।

অত্র কাঙ্গতোপমা, বেশ্যাসু নলিনীত্বজাত্যুৎপ্রেক্ষা চ, অনয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ।

(ভ) কাশ্চিদিতি। রজতকলশহস্তা অতএব পূর্ণচন্দ্রমণ্ডলাৎ বিনির্গতেন জ্যোৎস্নাপ্রবাহেণ রজন্যো রাত্রয় ইব। বেশ্যানাং রাত্রিভিঃ, রজতকলশস্য পূর্ণচন্দ্রেণ, তৎকলশজলস্য চ জ্যোৎস্নাপ্রবাহেণ সাম্যমভিমতম্।

অত্রাপি বেশ্যাসু রজনীত্বজাত্যুৎপ্রেক্ষালঙ্কারঃ।

(ম) কাশ্চিদিতি। কলশোৎক্ষেপেণ কুম্ভোত্তোলনেন যঃ শ্রম আয়াসস্তেন যে স্বেদা ঘর্ম্মজলানি তৈরার্দ্রাণি শরীরাণি যাসাং তাঃ, অতএব জলদেবতা ইব, তাসামপি জলাদুত্থানেন জলবিন্দুব্যাপ্তশরীরত্বাৎ সাম্যমিতি ভাবঃ।

অত্রাপি তাদৃশগণিকাসু জলদেবতাত্বজাত্যুৎপ্রেক্ষালঙ্কারঃ।

(য) কাশ্চিদিতি। মলয়সরিতো মলয়পর্ব্বতস্থনদ্য ইব চন্দনরসমিশ্রজলধারণাদিতি ভাবঃ। অত্রোপমালঙ্কারঃ। কেচিত্ত্বত্রাপি মলয়সরিতাং তদানীং স্নানকর্ত্তৃত্বাসম্ভবেন তদারোপণাদুৎপ্রেক্ষৈবেতি বদন্তি।

(র) কাশ্চিদিতি। উৎক্ষিপ্তানাম্ উত্তোল্য কন্ধং নীতানাং কলশানাং পার্শ্বেষু মুখনিকটদেশেষু বিন্যস্তা

---

(ব) তদনন্তর সেই বারাঙ্গনাদিগের মধ্যে কতকগুলি, মকরতমণিময় কলসের প্রভায় প্রায় শ্যামবর্ণ হইয়া তাহার জলে রাজাকে স্নান করাইতে লাগিল, তাহাতে বোধ হইতেছিল যেন মূর্ত্তিমতী পদ্মিনীগণ পত্রপুট দ্বারা (পাতার ঠোঙা দিয়া) স্নান করাইতেছে। (ভ) কতকগুলি রূপার কলসের জলে স্নান করাইতে লাগিল, সুতরাং প্রতীতি হইতেছিল যেন, রাত্রিগণ পূর্ণচন্দ্রমণ্ডল হইতে নির্গত জ্যোৎস্নার স্রোতে স্নান করাইতেছে। (ম) কতকগুলি কলস উত্তোলনের পরিশ্রমে ঘর্ম্মাক্তকলেবর হইয়া স্নান করাইতে লাগিলে বোধ হইতেছিল যেন, জলদেবতারা স্ফটিকময় কলসে তীর্থ-জলদ্বারা স্নান করাইতেছেন। (য) কতকগুলি মলয়-

---

(১) কাঞ্চন। (২) মরকতময়কলশ…।

পল্লবাঃ প্রকীর্য্যমাণ-নখ-ময়ূখ-জালকাঃ প্রত্যঙ্গুলি-বিবর-বিনির্গত-(১) জল-ধারাঃ সলিলযন্ত্রদেবতা ইব, (র) কাশ্চিজ্জাড্যমপনেতুমাহিত-বালাতপেনেব দিবসশ্রিয় ইব কনককলসহস্তাঃ কুঙ্কুমজলেন বারাঙ্গনাঃ ক্রমেণ (২) রাজানমভিষিষিচুঃ। (ল)

অনন্তরমুদপাদি চ স্ফোটয়ন্নিব (৩) শ্রুতিপথমনেক-প্রহত-পটু-পটহ-ঝল্লরী-মৃদঙ্গ-বেণু-বীণা-গীত-নিনাদানুগম্যমানো বন্দিবৃন্দ-কোলাহলাকুলো ভুবন-(৪) বিবরব্যাপী স্নানশঙ্খানামাপূর্য্যমাণানামতিমুখরো (৫) ধ্বনিঃ। (ব)

---

উত্তানভাবেন স্থাপিতাঃ হস্তপল্লবাঃ পাণিকিসলয়ানি যাভিস্তাঃ, প্রকীর্য্যমাণানি ইতস্ততো বিক্ষিপ্যমাণানি নখানাং ময়ূখজালানি কিরণসমূহা যাসাং তাঃ, তথা প্রত্যঙ্গুলিবিবরেভ্যঃ সর্ব্বাসামঙ্গুলীনামন্তরালছিদ্রেভ্যঃ বিনির্গতা জলধারা যাসাং তাঃ, অতএব সলিলযন্ত্রদেবতা জলযন্ত্রাধিষ্ঠাত্রী দেব্য ইব রাজানমভিষিষিচুঃ।

অত্র তাদৃশীষু বারাঙ্গনাসু সলিলযন্ত্রদেবতাত্বজাত্যুৎপ্রেক্ষণাদুৎপ্রেক্ষালঙ্কারঃ।

(ল) কাশ্চিদিতি। কনককলসা হস্তেষু যাসাং তাঃ, কাশ্চিদ্বারাঙ্গনাঃ, দিবসশ্রিয় ইব দিনলক্ষ্ম্য ইব, জাড্যং জলীয়শৈত্যগুণম্ অপনেতুং দূরীকর্ত্তুম্ আহিত আনীতঃ বালাতপঃ নবোদিতরবিকিরণো যস্মিন্ তেনেব, রক্তবর্ণতয়া কুঙ্কুমজলস্যোৎপ্রেক্ষিতপাঙ্গনার্থমেতদ্বিশেষণমিতি বোধ্যম্। কুঙ্কুমজলেন কুঙ্কুমমিশ্রিতবারিণা। ক্রমেণ ক্রমশঃ, রাজানম্ অভিষিষিচুঃ স্নাপয়ামাসুঃ।

অত্র আহিতবালাতপেনেবেতি ক্রিয়োৎপ্রেক্ষা, দিবসশ্রিয় ইবেতি চ জাত্যুৎপ্রেক্ষা, অনয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ।

(ব) অনন্তরমিতি। অনন্তরং স্নানশঙ্খানাং ধ্বনিঃ উদপাদি উৎপন্ন ইত্যন্বয়ঃ। শ্রুতিপথং লোকানাং কর্ণবিবরং স্ফোটয়ন্ বিদারয়ন্নিব, অনেকৈর্জনৈঃ প্রহতা বাদিতা যাঃ, পটবো বাদ্যকরণসমর্থাঃ, পটহা দুন্দুভয়ঃ, ঝল্লর্য্যো বাদ্যবিশেষাঃ, মৃদঙ্গা মুরজাঃ, বেণবো বংশ্যঃ, বীণাশ্চ তাসাং গীতানাং মঙ্গলগানানাং চ নিনাদৈঃ শব্দৈরনুগম্যমানঃ মিশ্রিতো ভবন্নিত্যর্থঃ, বন্দিবৃন্দস্য স্তুতিপাঠকসমূহস্য কোলাহলেন আকুলো ব্যাপ্তঃ,

---

পর্ব্বতস্থিত নদীর ন্যায় চন্দন-মিশ্রিত জলদ্বারা স্নান করাইতে লাগিল। (র) কতকগুলি কক্ষদেশে কলস উত্তোলনপূর্ব্বক তাহার মুখে নীচের দিকে উত্তানভাবে (চিৎ করিয়া) পাণি পল্লব বিন্যস্ত করিয়া প্রত্যেক অঙ্গুলীর অন্তরাল হইতে নির্গত জলধারাদ্বারা জলযন্ত্র-দেবতার ন্যায় থাকিয়া মহারাজকে স্নান করাইতে লাগিল; তখন তাহাদের নখ হইতে কিরণসমূহ বহির্গত হইতেছিল। (ল) আর কতকগুলি বেশ্যা, সুবর্ণময় কলস হস্তে লইয়া, জলের শীতলতা দূর করিবার জন্য, যেন নবোদিত সূর্য্যের কিরণ আনিয়া যাহাতে মিশ্রিত করা হইয়াছে, এইরূপ কুঙ্কুম-জলের দ্বারা দিনলক্ষ্মীর ন্যায় ক্রমশঃ রাজাকে স্নান করাইতে লাগিল।

(ব) তাহার পর, মুখমারুত পূর্ণ স্নানকালীয় শঙ্খধ্বনি উৎপন্ন হইল; তাহার সঙ্গে সঙ্গে অনেকলোককর্ত্তৃক বাদিত উৎকৃষ্ট দুন্দুভি, ঝাজ (বাদ্যকাঁসী), মৃদঙ্গ, বংশী ও বীণার

---

(১)…অবনির্গত…। (২) যথাযথম্। (৩) আস্ফোটয়ন্নিব। (৪) ভবন…। (৫) সুস্বরঃ।

एवञ्च क्रमेण निर्वर्त्तिताभिषेको (१) विषधरनिर्मोकपरिलघुनी धवले परिधाय धौते वाससी (२) शरदम्बरैकदेश इव जलक्षालन-निर्मलतनुः (३) अतिधवल-जलधर-च्छेद-शुचिना दुकूलपटपल्लवेन तुहिनगिरिरिव गगनसरित्-स्रोतसा कृत-शिरोवेष्टनः सम्पादित-पितृजलक्रियो मन्त्रपूतेन तोयाञ्जलिना दिवसकरमभिप्रणम्य देवगृहमगमत्। (ग)

---

अतएव भुवनविवरव्यापी जगदन्तरालविसारी, अतिमुखरः अतीवतारतरः, आपूर्य्यमाणानां मुहुराहन्यमानानाम्, स्नानशङ्खानां स्नानसमयवादनीयशङ्खानां ध्वनिरुदपादि।

अत्र स्फोटयन्निवेति क्रियोत्प्रेक्षा, तथा भुवनविवरव्यापनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिश्च, अनयोर्मिथो निरपेक्षतया संसृष्टिः।

(ग) एवञ्चेति। किञ्चिति चार्थः। एवं क्रमेण अनया परिपाट्या, निर्वर्त्तिताभिषेकः कृतस्नानः देवगृहमगमदिति वक्ष्यमाणक्रिययाऽन्वयः। विषधरनिर्मोकवत् सर्पकञ्चुकवत् परिलघुनी अतीवसूक्ष्मे। अत्र लुप्तोपमालङ्कारः। धवले शुभ्रे धौते प्रक्षालिते वाससी वसनयुगलम् अन्तरीयमुत्तरीयञ्च वस्त्रद्वयं परिधाय। वसनयुगलधारणं देवतापूजनाद्यर्थम्। यथा वृहन्नारदीयम्—"देवार्च्चाचमन-स्नान-व्रतश्राद्धक्रियासु च। न भवेन्मुक्तकेशश्च नैकवस्त्रधरस्तथा।" शरदम्बरैकदेश इव शरत्कालीयगगनैकपार्श्व इव जलक्षालनेन स्नानीय-जलद्वारा प्रक्षालनेन वृष्टिजलद्वारा प्रक्षालनेन च निर्म्मला तनुः शरीरं यस्य सः। अत्र पूर्णोपमालङ्कारः। अतिधवलो यो जलधरच्छेदो मेघखण्डः तद्वत् शुचिः शुभ्रस्तेन। अत्र लुप्तोपमालङ्कारः। दुकूलपटपल्लवेन क्षौमवसनविस्तारेण वृहत्क्षौमवस्त्रेणेत्यर्थः "पल्लवो विस्तरे खिड़्गे किसलये विटपे वने।" इति त्रिकाण्डशेषः। गगनसरित्स्रोतसा मन्दाकिनीप्रवाहेण तुहिनगिरिर्हिमालय इव। अत्रोपमालङ्कारः। कृत-शिरोवेष्टनः विहितोष्णीषः। होमाद्यर्थमुष्णीषधारणम्। यथा स्मृतिः—

"उष्णीषेण विना राजन्! होमञ्चेत् कुरुते नरः। होतुश्चार्द्धविनाशः स्यात् होता च विकलो भवेत्।" सम्पादिता पितृजलक्रिया पितृतर्पणादिर्येन सः। "एवं स्नात्वा पितॄन् देवान् मनुष्यांस्तर्पयेन्नरः।" इति

---

শব্দ এবং মঙ্গলগানের শব্দ হইতে লাগিল, স্তুতিপাঠকগণের কোলাহল সেই সঙ্গে মিশিল ; তাহাতে সেই শব্দ অতিবৃহৎ হইয়া, কর্ণবিবর যেন বিদীর্ণ করিয়া, জগতের আকাশমণ্ডল ব্যাপ্ত করিল।

(গ) এই ভাবে স্নানক্রিয়া সম্পাদন করিয়া মহারাজ শূদ্রক, জলপ্রক্ষালনে শরৎকালীয় আকাশের একদেশের ন্যায় নির্ম্মল-শরীর হইলেন এবং সর্পনির্ম্মোকের ন্যায় (সাপের খোলসের মত) সূক্ষ্ম ও ধবল বসনযুগল পরিধান করিয়া, অতিধবল মেঘখণ্ডের ন্যায় শুভ্রবর্ণ ও বৃহৎ ক্ষৌমবস্ত্রে মস্তক বেষ্টন করিলেন ; তাহাতে মন্দাকিনীর প্রবাহে পরিবেষ্টিতশৃঙ্গ হিমা-

---

(१) निवर्त्तिताभिषेकः। (२) धौतवाससी। (३) जलाक्षालननिर्मलतनुः।

উপরচিত-(১) পশুপতিপূজনশ্চ (২) নিষ্ক্রম্য দেবগৃহান্নির্ব্বর্ত্তিতাগ্নিকার্য্যো বিলেপনভূমৌ ঝঙ্কারিভিরলিকদম্বকৈরনুবধ্যমানপরিমলেন মৃগমদ-কর্পূর-কুঙ্কুম-বাস-সুরভিণা চন্দনেনানুলিপ্তসর্ব্বাঙ্গো বিরচিতামোদি-মালতীকুসুম-শেখরঃ কৃতবস্ত্রপরিবর্ত্তঃ (৩) রত্নকর্ণপূরমাত্রাভরণঃ সমুচিতভোজনৈঃ সহ ভূপতিভিরাহারমভিমত-রসাস্বাদ-জাতপ্রীতিরবনিপো নির্ব্বর্ত্তয়ামাস (৪)। (ষ)

গারকত্বাদিতি ভাবঃ। অভি সূর্য্যাভিমুখঃ সন্, মন্ত্রপূতেনেতি মন্ত্রপূতং তোয়াঞ্জলিমর্ঘ্যরূপং সূর্য্যায় দত্ত্বা প্রণম্যেত্যর্থঃ। "যাবন্ন দীয়তে চার্ঘ্যং ভাস্করায় মহাত্মনে। তাবন্ন পূজয়েদ্বিষ্ণুং শঙ্করং বা মহেশ্বরীম্।" ইতি ব্রহ্মপুরাণবচনেন শিবপূজনাৎ পূর্ব্বং সূর্য্যার্ঘ্যদানবিধানাদিতি ভাবঃ।

(ষ) উপেতি। উপরচিতং কৃতং পশুপতেঃ শিবস্য পূজনং যেন সঃ। তথা চ "বরং প্রাণপরিত্যাগশ্ছেদনং শিরসোঽপি বা। নত্বনভ্যর্চ্য ভুঞ্জীত ভগবন্তং ত্রিলোচনম্।" ইতি ভবিষ্যপুরাণবচনেন শিবপূজায়া নিত্যতাভিধানাদিতি ভাবঃ। নির্ব্বর্ত্তিতাগ্নিকার্য্যঃ বিহিতাগ্নিহোত্রহোমঃ। "যাবজ্জীবমগ্নিহোত্রং জুহুয়াদিতি" শ্রুতেরগ্নিহোত্রস্যাপি নিত্যত্বাদিত্যভিপ্রায়ঃ। বিলেপনভূমৌ অঙ্গরাগস্থানে, ঝঙ্কারিভিঃ 'ঝম্' ইতিশব্দং কুর্ব্বদ্ভিঃ অলিকদম্বকৈঃ ভ্রমরসমূহৈঃ অনুবধ্যমানঃ অনুস্রিয়মাণঃ পরিমলো বিমর্দ্দগন্ধো যস্য তেন, মৃগমদস্য কস্তূর্য্যাঃ কর্পূরকুঙ্কুময়োশ্চ বাসেন গন্ধেন সুরভিণা আমোদবতা চন্দনেন। বাস্যতে বিভাসিভির্বস্ত্রাদিভিরিত্যস্মাদ্ ইতি বাসঃ সৌরভম্ "বাস উপসেবায়া"মিতি চৌরাদিকাদ্বাসধাতোঃ কর্ম্মণ্যচ্। বিরচিতো বিহিতঃ আমোদিভিঃ সুরভিভিঃ মালতীকুসুমৈঃ শেখরঃ শিরোভূষণং যেন সঃ। "যথাবয়ো যথাকালং যথাপ্রাণং প্রসাধন"মিত্যাহ্নিকতত্ত্ববচনাদিদমঙ্গরাগাদিকমিতি বোধ্যম্। কৃতো বস্ত্রয়োঃ পূর্ব্বধৃতবসনয়োঃ পরিবর্ত্তঃ পরিবর্ত্তনং যেন সঃ বিধৃতাপরবস্ত্র ইত্যর্থঃ। পূজাবস্ত্রস্য সর্ব্বদা পরিধানানৌচিত্যাদিতি ভাবঃ। রত্নকর্ণপূরমাত্রং কেবলং রত্নময়কুণ্ডলমেব আভরণং তৎকালীনভূষণং যস্য সঃ। ভোজনবিশ্রামকালে বহুতরাভরণধারণস্যোপদ্রবত্বাদিতি ভাবঃ। সমুচিতং যোগ্যং ভোজনম্ একপঙ্‌ক্তিভোজনং যেষাং তৈঃ স্বসমানবংশসদাচারাদিশালিভিরিতি ভাবঃ। ভূপতিভিরন্যৈ রাজভিঃ সহ, অভিমতরসানাম্ অভিলষিতমধুরাদিরসানাম্ আস্বাদেন জাতা প্রীতির্যস্য সঃ অবনিপো রাজা শূদ্রকঃ, আহারং ভোজনং নির্ব্বর্ত্তয়ামাস নিষ্পাদয়ামাস।

ন্দয়ের ন্যায় তাঁহাকে দেখা যাইতে লাগিল। তাহার পর তিনি পিতৃতর্পণ করিয়া, সূর্য্যের অভিমুখ হইয়া, মন্ত্রপূত জলাঞ্জলিদ্বারা সূর্য্যকে অর্ঘদান ও প্রণাম করিয়া দেবগৃহে গমন করিলেন।

(ষ) দেবগৃহে যাইয়া শিবপূজাসমাপনান্তে তথা হইতে নির্গত হইয়া হোমগৃহে নিত্যহোম সমাধানপূর্ব্বক অঙ্গরাগস্থানে যাইয়া কস্তূরী, কর্পূর ও কুঙ্কুমের সৌরভে পরম সুগন্ধি চন্দনদ্বারা সকল অঙ্গ লিপ্ত করিলেন; তখন ভ্রমরগণ সৌরভলোভে সেই চন্দনের অনুসরণ করিতেছিল। তাহার পর তিনি মস্তকে সুগন্ধি মালতীকুসুমের শেখর ধারণ ও বস্ত্রপরিবর্ত্তন করিয়া, অলঙ্কারের মধ্যে কেবল কর্ণকুণ্ডল ধারণ করিলেন; পরে পংক্তিভোজনযোগ্য রাজগণের সহিত অভিমত নানাবিধ রসের আস্বাদনে প্রীতিলাভ করতঃ ভোজনকার্য্য সম্পন্ন করিলেন।

(১) উপচরিত…। (২)…পূজয়। (৩) কৃতাম্বরপরীবর্ত্তঃ। [৪] নিবর্ত্তয়ামাস।

परिपीतधूमवर्त्तिः (१) उपस्पृश्य च गृहीतताम्बूलस्तस्मात् प्रमृष्ट-मणि-कुट्टिमप्रदेशादुत्थाय नातिदूरवर्त्तिन्या ससम्भ्रम-प्रधावितया प्रतीहार्य्या प्रसारितं बाहुम् (२) अवलम्ब्यानवरत-(३) वेत्रलतायहण-प्रसङ्गादतिजरठ-(४) किसलयानु-कारि-करतलं करेण (५) अभ्यन्तरसञ्चारसमुचितेन परिजनेनानुगम्यमानः-(ख) धवलांशुक-(६) परिगतपर्य्यन्ततया स्फटिकमणिमय-(७) भित्ति-बद्ध-(८) मिवोप-लक्ष्यमाणम्, (ङ) अतिसुरभिणा मृगनाभिपरिमलेना-(९) मोदिना चन्दन-वारिणा सिक्तशिशिरमणिभूमिम्, (च) अविरलविप्रकीर्णेन विमल-मणिकुट्टिम-

(ख) परीति। उपस्पृश्य च अस्य आस्थानमण्डपमगमदित्यन्वयः। "उपस्पर्शस्त्वाचमन"मित्यमरः। "सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वाऽनृतं वचः। पीत्वापोऽध्येष्यमाणश्च आचामेत् प्रयतोऽपि सन्।" इति नारदवचनेन भोजनानन्तरमाचमनविधानादिति भावः। परिपीता धूमवर्त्तिः धूमस्य ओषधि-कृत-धूमस्य कुण्डलाद्य-कृट दिनिर्म्मितवर्त्तिर्येन सः अभ्यासवशादिति भावः। गृहीतताम्बूलः मुखाभ्यन्तरे धृतपर्णः। प्रमृष्टो जलादिना परिष्कृतो यो मणिकुट्टिमप्रदेशः मणिमयबद्धस्थानं तस्मात्। प्रसारितं विस्तारितम्। अनवरतं सदा वेत्रलतायाः वेत्रयष्टिधारणं तस्य प्रसङ्गादभ्यासात्, अतिजरठं नितान्तपरिणतं किसलयं पल्लवम् अनुकरोतीति तत् तादृशं किञ्चित् कठिनमित्यर्थः करतलं पाणितलं यस्य तादृशं बाहुं भुजम् अवलम्ब्य धृत्वा, अभ्यन्तरे बाटीं-मध्ये सञ्चारे गमनागमनयोः समुचितेन योग्येन नितान्तविश्वस्तेन परिजनेन परिचारकलोकेन।

(ङ) धवलांशुकेति। धवलांशुकैः शुभ्रवसनैः परिगताः परिवेष्टिताः पर्य्यन्ताः प्रान्तदेशा यस्य तस्य भावस्तया हेतुना, स्फटिकमणिमयी या भित्तिः कुड्यं तया बद्धं निर्म्मितमिव उपलक्ष्यमाणं दृश्यमानम्।

अत्र क्रियोत्प्रेक्षालङ्कारः। इतः प्रभृति द्वितीयान्तानि पदानि आस्थानमण्डपमित्यस्य विशेषणानि।

(च) अतीति। अतिसुरभिणा अतीव घ्राणतर्पणेन मृगनाभिपरिमलेन कस्तूरीगन्धेन कारणेन आमोदिना परमसुगन्धिना चन्दनवारिणा चन्दनमिश्रितजलेन सिक्ता सेचिता अतएव शिशिरा शीतला मणिभूमिर्यत्र तम्।

(ख) তদনন্তর রাজা আচমন করিয়া ধূমবর্ত্তি (চুরুট) পান ও তাম্বুল চর্ব্বণ করিয়া দণ্ডায়মান হইলে নিকটবর্ত্তিনী প্রতীহারী সম্ভ্রমের সহিত দ্রুত আগমন করিয়া, সর্ব্বদা বেত্রযষ্টি ধারণ করায় কিঞ্চিৎকঠিন-পল্লবসদৃশ পাণিতলসম্পন্ন হস্ত প্রসারণ করিয়া দিল; তখন তিনি সেই হস্ত ধারণপূর্ব্বক সেই মণিময় ভূমি হইতে সভামণ্ডপে গমন করিলেন; তখন বাটীর মধ্যে গমনাগমনসমর্থ বিশ্বস্ত পরিজনগণ তাঁহার অনুগমন করিল।

(ঙ) সেই সভামণ্ডপের প্রান্তদেশ শ্বেতবর্ণবস্ত্রে পরিবেষ্টিত থাকায় সভামণ্ডপ যেন স্ফটিক-ময় ভিত্তিনির্ম্মিতের ন্যায় দেখা যাইতেছিল; (চ) নাসিকার অত্যন্ত তৃপ্তিকারী কস্তুরীর সৌরভে পরম সুগন্ধি চন্দনজলে সেই সভামণ্ডপের মণিময়ভূমি সিক্ত হওয়ায় শীতল হইয়া-

(१) धूपवर्त्तिं, धूपधूमवर्त्तिः। (२) प्रसारितबाहुं। (३) क्वचित् 'अनवरत' इति नास्ति।
(४) प्रसङ्गेनेति, प्रसङ्गादनेति…। (५) करतल-करेण।
(६) धवलांशुकजवनिकापरिगत…। (७) स्फटिकमय। (८) निबद्ध। (९) परिमलेन।

অম্ভঃশীকরসেকসমুপজাত-প্রজ্ঞং (১) তত্তট প্ররূঢ়-নলিনী-পলাশস্য (২) জলশিশিরায়াং ছায়ায়াং নিধায় যথাসমুচিত-(৩) মকরোৎ স্নানবিধিম্। (ঙ) অভিষেকাবসানে চানেকপ্রাণায়ামপূতোঽপি জপন্নঘমর্ষণানি (৪) প্রত্যগ্রভগ্নৈরুন্মুখো রক্তারবিন্দৈর্নলিনীপত্র-পুটেন ভগবতে সবিত্রে দত্ত্বার্ঘ-[৫]মুদতিষ্ঠৎ। [চ] আগৃহীত-ধৌত [৬] ধবল-বল্কলশ্চ সজ্যোৎস্ন ইব [৭] সন্ধ্যাতপঃ করতল-নির্ধূ

অপায়য়ৎ মাং ধৃত্বা, মুক্তাত্মা প্রথমং জলপানে প্রবৃত্তঃ মুখব্যাদানাদিবৈষ্ট্যর্থঃ যেন তং নিতান্তাবসন্নত্বাদিতি ভাবঃ। উত্তানিতমুখম্ উন্মীলিতবদনং মাম্।

(ঙ) অম্ভ ইতি। অম্ভঃশীকরৈঃ জলপ্রদানকালে হারীতহস্তাদ্বিপতিতৈর্জলবিন্দুভিঃ কৃতঃ সেকো গাত্রোপরিসেচনং যস্য তম্, অতএব সমুপজাতা প্রজ্ঞা প্রকৃষ্টচৈতন্যং যস্য তং মাম্, তত্তটে নদসমীপে প্ররূঢ়া জাতপত্রা যা নলিনী পদ্মিনী তস্যাঃ পলাশস্য পত্রস্য, জলেন জলাসারেণ শিশিরা শীতলা যস্যাং। নিধায় স্থাপয়িত্বা। যথাসমুচিতং যোগ্যম্ অঙ্গেষু মৃত্তিকালেপনাদিসহিতমিত্যর্থঃ।

(চ) অভিষেকেতি। অভিষেকাবসানে চ স্নানান্তে চ, অনেকৈঃ প্রাণায়ামৈঃ পূরককুম্ভকরেচকাত্মকৈর্বায়ুব্যাপাররূপযোগাঙ্গবিশেষৈঃ পূতোঽপি পবিত্রোঽপি। অঘং পাপং মৃষ্যতে মৃচ্ছ্যতে নাশ্যতে এভিরিতি তানি, "ঋতঞ্চ সত্যঞ্চাভীদ্ধা" দিত্যাদীনি জলদৈবতান্যৃচিরূপাণি অঘমর্ষণানি সূক্তানি উন্মুখ ঊর্দ্ধ্ববদনঃ সূর্য্যাভিমুখঃ সন্নিত্যর্থঃ। প্রত্যগ্রভগ্নৈঃ নূতনোদ্ধৃতৈঃ রক্তারবিন্দৈঃ রক্তবর্ণপদ্মৈঃ, নলিনীপত্রপুটেন রক্তারবিন্দাধারভূতেন পদ্মপত্রপুটকেন। সবিত্রে সূর্য্যায়। প্রাণায়ামাঘমর্ষণয়োর্বিশেষস্তু যোগদর্শনযোগিযাজ্ঞবল্ক্যসংহিতাদাবনুসন্ধেয়ঃ।

(ছ) আগৃহীতেতি। আগৃহীতং সম্যক্ পরিহিতং ধৌতং প্রক্ষালিতং ধবলং শুভ্রং বল্কলং যেন সঃ। অতএব জ্যোৎস্নয়া সহিতঃ সজ্যোৎস্নঃ, সন্ধ্যাতপঃ সায়ংকালীনসূর্য্যালোক ইব। অত্রোপমালঙ্কারঃ। করতলাভ্যাং নির্ধূননেন আস্ফালনেন বিশদা নির্ম্মলাঃ সটা জটা যস্য সঃ। প্রত্যর্পণে নবীন অভিজ্ঞরতৈশ্চ

জল পান করাইলেন; (ঙ) তাঁহার অঙ্গুলিনিঃসৃত জলসেকে আমার সম্পূর্ণ চৈতন্য জন্মিল; তখন তিনি, তীরের নিকটে উৎপন্ন পদ্মপত্রের শীতল ছায়াতে আমাকে রাখিয়া যথোচিত স্নানক্রিয়া সম্পাদন করিলেন; স্নানের পরে হারীত বহুতর প্রাণায়াম করায় পবিত্র হইলেও অঘমর্ষণসূক্ত জপ করিয়া সূর্য্যের অভিমুখ হইয়া, পদ্মপত্রে করিয়া নূতন উদ্ধৃত রক্তপদ্ম দ্বারা ভগবান সূর্য্যদেবকে অর্ঘ্যদান করিয়া তীরে উঠিলেন; (ছ) তাহার পর, তিনি প্রক্ষালিত শুভ্রবর্ণ একখানি বল্কল পরিধান করিলেন; তাহাতে সন্ধ্যাকালে জ্যোৎস্নাসম্মিলিত সূর্য্যা-লোকের ন্যায় তাঁহাকে দেখা যাইতে লাগিল; পরে তিনি করযুগলের আস্ফালনে জটাগুলিকে

(১) উপজাতনবপ্রাণং। (২) তত্তটপ্ররূঢ়স্য নবনলিনীদলস্য। (৩) যথোচিতং।
(৪)…পূতো জপন্ পবিত্রাঘমর্ষণানি। (৫) অর্ঘ্যং। (৬) আগৃহীতধবল…।
(৭) সজ্যোৎস্ন ইব।

नन विशद-सटः(१) प्रत्यग्र स्नानार्द्र जटेन (२)सकलेन तेन मुनिकुमार-कदम्बकेना-नुगम्यमानो मां गृहीत्वा तपोवनाभिमुखं शनैः शनैरगच्छत् (३)। (छ)

अनतिदूरमिव गत्वा दिशि दिशि सदासन्निहित कुसुमफलैः(४) तालतिलक-तमाल (५) हिन्ताल-बकुल बहुलैः एला-लताकुलित-नारिकेल-कलापैः, आलोल-लोध्र लवली लवङ्ग पल्लवैः,(६) उद्भ्रम (७) च्चूत रेणु पटलैः, अलिकुलझङ्कार मुखर-सहकारैः, उन्मदकोकिलकुलकलालाप (८) कोलाहलिभिः, उत्फुल्लकेतकी-

---

स्नानेन आर्द्रा जलक्लिन्ना जटा यस्य तेन मुनिकुमाराणां कदम्बकेन समूहेन, अनुगम्यमानो हारीतः। मां वैशम्पायनम्।

(छ) अनतीति। इवशब्दो वाक्यालङ्कारे। अनतिदूरं गत्वा अहम् आश्रमपदमपश्यमिति वक्ष्यमाणेन क्रियया अन्वयः। अत्र तृतीयान्तपदानि वक्ष्यमाणस्य 'काननै'रित्यस्य विशेषणानि। दिशि दिशि सर्वासु दिक्षु। सदा सन्निहितानि सततावस्थितानि यथासम्भवं कुसुमानि फलानि च येषु तैः। तालाः स्वनामख्याताः, तिलकाः पुष्पवृक्षविशेषाः, तमालाः अपि स्वनामख्याताः, हिन्तालाः फलवृक्षविशेषाः, बकुलाश्च बहुलाः अधिकसंख्यका येषु तैः। एलालताभिः आकुलिता व्याप्ता वेष्टिता नारिकेलानां वृक्षाणां कलापाः समूहा येषु तैः। आलोला वायुवेगेन कम्पिताः, लोध्राणां लवलीनां लवङ्गानाञ्च स्वनामख्यातानां पल्लवाः किसलयानि येषु तैः। उद्भ्रमन्ति वायुवेगेन प्रसरन्ति चूतानाम् आम्रकुसुमानां रेणुपटलानि परागपुञ्जा येषु तैः। अलि-कुलस्य भ्रमरसमूहस्य झङ्कारैः 'झम्' इत्याकारशब्दैः मुखराः शब्दायमानाः सहकारा अतिसुरभिचूता येषु तैः। "आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः।" इत्यमरः। अतएव पूर्वं चूतेति नार्थगत-पुनरुक्ततादोषः। उन्मदस्य मदमत्तस्य कोकिलकुलस्य कलालापो। मधुरास्फुटध्वनिरूपः कोलाहल एषामस्तीति तैः। अत्र धर्म्मसाम्यां मत्वर्थीय इनप्रत्ययः। किन्तु केवलबहुव्रीहिणा तदर्थं स्वाभिधातुमशक्यत्वात् "न कर्म्मधारयान्म-

---

নির্ম্মল করিয়া, সদ্য স্নান করায় আর্দ্র জটাসমন্বিত সেই সকল মুনিকুমারগণের সহিত আমাকে লইয়া ধীরে ধীরে তপোবনের অভিমুখে গমন করিলেন।

(ছ) আমি অনতিদূরে গমন করিয়া দ্বিতীয় ব্রহ্মলোকের ন্যায় অতি মনোহর একটি আশ্রম দর্শন করিলাম, সেই আশ্রমের সকল দিক্ বনে পরিবেষ্টিত ছিল, সেই বনে সর্ব্বদার জন্যই নানাজাতীয় কুসুম ও ফল বিদ্যমান থাকিত; আর তাল, তিলক, তমাল, হেন্তাল ও বকুল — এই সকল বৃক্ষই অধিকসংখ্যক ছিল; এলাচিলতায় পরিবেষ্টিত বহুতর নারিকেলবৃক্ষ ছিল, লোধ, নোয়াড়ি (লোয়াইল) এবং লবঙ্গের পল্লবসমূহ বায়ুভরে কম্পিত হইতেছিল; বায়ুবেগে আম্রকুসুমের পরাগসমূহ বিকীর্ণ হইতেছিল; ভ্রমরগণের ঝঙ্কারে পরমসুগন্ধি আম্রবৃক্ষ-সকল মুখরিত হইতেছিল; উন্মত্ত কোকিলগণ মধুর ও অস্পষ্ট কোলাহল করিতেছিল;

---

(१)…मधुनविशदसटः। (२) कमण्डलुमापूर्य कमलकिञ्जल्कसुरभिणा शुचिना सरोवारिणा प्रत्यग्र-स्नानार्द्रजटेन। (३) शनैरगच्छत्। (४) कुसुमपटलैः। (५)…तिलकतालीतमाल…।
(६)…पुष्पैः। (७) उल्लसित…। (८)…कुलकलाप…।

कुसुम-मञ्जरीरजः-[१] पुञ्ज-पिञ्जरैः, पूगीलता-दोलाधिरूढ़-वन-देवतैः, तारका-वर्ष-[२] मिवाधर्म्म-विनाश-पिशुनं कुसुम-निकरमनिल-चलितमनवरतमति-धवलमुत्सृजद्भिः, संसक्तपादपैः काननैरुपगूढ़म्, [३] [झ] अचकितप्रचलित-कृष्णसार-शत-शबलाभिः, उत्फुल्ल-स्थल-कमलिनी-लोहिनीभिः, मारीचमायामृगाव-लून-प्ररूढ़-वीरुद्दलाभिः, दाशरथि-चाप-कोटि-क्षत-कन्द-[४]-गर्त्त-विषमित-तलाभिः, दण्डकारण्यस्थलीभिरुपशोभितप्रान्तम् [ ञ ] आगृहीतसमित्कुशकुसुम-

---

त्वर्थो बहुव्रीहिश्च दर्शंप्रातपांसकर" इति निषेधस्य नावसरः। उत्फुल्लानां विकसितानां केतकीकुसुमानां या मञ्जर्य्यस्तासां रजःपुञ्जैः परागराशिभिः पिञ्जराणि पिङ्गलवर्णानि तैः। पूगीनां क्षुद्रगुवाकानां या लता लतावत् कृशशाखास्ता एव दोलाः स्वनतिभिर्दोलावद्गत्यां वक्रीभूतत्वादिति भावः, तासु अधिरूढा वनदेवता वनाधिष्ठात्र्यो देव्यो येषु तैः। क्षुद्रपरत्वादेव पूगीत्यस्य स्त्रीत्वं मृणाल्यादिवत्। अत्र वनदेवतानां तादृशदोलाधिरोहणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः। अधर्म्मविनाशपिशुनं पापध्वंससूचकं देवतापूजोपयोगित्वादिति भावः, अनिलचलितं वायुकम्पितं, अतिधवलं कुसुमनिकरं पुष्पसमूहं, तारकावर्षं नक्षत्रवृष्टिमिव अनवरतम् उत्सृजद्भिः परित्यजद्भिः। अत्रोपमालङ्कारः। संसक्ताः परस्परं संलग्नाः पादपा वृक्षा येषु तैः, तादृशैः काननैर्वनैः, उपगूढम् आलिङ्गितं परिवेष्टितमित्यर्थः।

(झ) अचकितेति। एतानि तृतीयान्तस्त्रीलिङ्गपदानि दण्डकारण्यस्थलीभिरित्यस्य विशेषणानि। अचकितानां हिंसाभावादत्रस्तानां प्रचलितानां विचरतां कृष्णसाराणां शतेन बाहुल्येन समूहेनेत्यर्थः शबला विचित्रास्ताभिः। उत्फुल्लाभिर्विकसिताभिः स्थलकमलिनीभिः लोहिन्यो रक्तवर्णास्ताभिः। मारीचो राक्षस एव मायामृगः तेन अवलूनानि आदौ भक्षणाय छिन्नानि पश्चात् प्ररूढानि उत्पन्नानि वीरुधां लतानां दलानि पत्राणि यासु ताभिः। तथा दाशरथेः रामस्य चापकोट्या धनुरग्रेण क्षतानि नष्टानि सुखेन विचरणार्थं उत्खातानि यानि कन्दानि तरुमूलानि तेषां गर्त्तैः विषमितानि उच्चावचीकृतानि तलानि उपरिभागा यासां ताभिः, दण्डकारण्यस्य स्थलीभिः स्थानविशेषैः।

---

প্রস্ফুটিত কেতকীকুসুমের পরাগসমূহে সেই বন পিঙ্গলবর্ণ হইয়াছিল; বনদেবতাগণ ক্ষুদ্র গুবাক বৃক্ষের দোলাতে আরোহণ করিয়াছিলেন; পাপবিনাশসূচক, অত্যন্ত শ্বেতবর্ণ ও বায়ুভরে কম্পিত পুষ্পসমূহ নক্ষত্রবৃষ্টির ন্যায় অবিশ্রান্ত পতিত হইতেছিল এবং সেই বনে বৃক্ষসমূহ পরস্পর সংলগ্ন ছিল।

(ঝ) আর দণ্ডকারণ্যের এক অংশ সেই আশ্রমের প্রান্তভাগ শোভিত করিয়াছিল; কৃষ্ণসারগণ নির্ভয়চিত্তে বিচরণ করত দণ্ডকারণ্যের সেই অংশটি বিচিত্র করিয়াছিল; প্রস্ফুটিত স্থলপদ্মে তাহা রক্তবর্ণ হইয়াছিল, মারীচরাক্ষস মায়ামৃগরূপ ধারণ করিয়া সেই বনের যে সকল লতার পত্র ভক্ষণ করিয়াছিল, সেই পত্রগুলি পুনরায় উৎপন্ন হইয়াছিল, রামচন্দ্র ধনুর অগ্রদ্বারা যে সকল মূল উত্তোলন করিয়াছিলেন, তখনও তাহার গর্ত্তগুলি থাকিয়া সেই

---

(१)…केतकमञ्जरीरजः, केतकीरजः…। (२) तारकावृष्टिं। (३)…पादपैरुपगूढं। (४)…कन्दर…।

কার-বাচাল শুককুলম্, (ন) অনেক-সারিকোদ্‌ঘুষ্যমাণ-সুব্রহ্মণ্যম্ (প) অরণ্য-কুক্কুটোপভুজ্যমান-বৈশ্বদেব-বলিপিণ্ডম্, (ফ) আসন্ন-বাপী-কলহংস-পোত-ভুজ্যমান-নীবারবলিম্, (ব) এণী-জিহ্বাপল্লবোপলিহ্যমান-মুনিবালকম্, (ভ) অগ্নিকার্য্যার্দ্ধদগ্ধ-সিমসিমায়মান (১) কুশ-সমিৎকুসুমম্, (ম) উপল-ভগ্ন নারিকেল-[২] রস-স্নিগ্ধশিলাতলম্, (য) অচির-লুপ্ত-বল্কল-রস-পাটল-

(ন) অনেকেতি। অনবরতমুচ্চারণেন সর্ব্বদাকর্ণনেন গৃহীতা শিক্ষিতাঃ বষট্‌কারা হবির্দানমন্ত্রাঃ তৈস্তদুচ্চারণৈরিত্যর্থঃ বাচালং মুখরং শুককুলং যত্র তম্।

(প) অনেকেতি। অনেকাভিঃ সারিকাভিঃ উদ্‌ঘুষ্যমাণং উচ্চৈর্ব্বাচ্যমানং সুব্রহ্মণ্যং বেদো যস্মিন্ তম্, তাসামপি তত্র শ্রবণেন গ্রহণাদিতি ভাবঃ।

(ফ) অরণ্যেতি। অরণ্যকুক্কুটৈঃ বন্যবিহগৈঃ উপভুজ্যমানাঃ বৈশ্বদেববলিপিণ্ডাঃ পঞ্চমহাযজ্ঞান্তর্গত-বিশ্বদেবোদ্দেশ্যকান্নাদয়ো যত্র তং। বৈশ্বদেববলিদানমাহ্নিকতত্ত্বেঽনুসন্ধেয়ম্।

(ব) আসন্নেতি। আসন্নবাপীনাং সন্নিহিতদীর্ঘিকাণাং যে কলহংসপোতা কাদম্বশাবকাঃ তৈঃ, ভুজ্যমানাঃ নীবারাণাং মুনিধান্যানাং বলয় উপহারা যত্র তম্।

(ভ) এণীতি। এণীভির্হরিণীভিঃ জিহ্বাপল্লবৈঃ বিস্তৃতীকৃতরসনাভিঃ করণৈঃ উপলিহ্যমানাঃ আস্বাদ্যমানাঃ স্পৃশ্যমানা ইত্যর্থঃ মুনিবালকা যত্র তম্।

(ম) অগ্নীতি। অগ্নিকার্য্যে হোমে অর্দ্ধদগ্ধানি অতএব সিমসিমায়মানানি 'সিম সিম' ইত্যেবং শব্দং কুর্ব্বাণানি কুশসমিৎকুসুমানি যত্র তম্।

(য) উপলেতি। উপলৈঃ পাষাণৈঃ ভগ্নানি পাষাণান্তরেষু স্থাপয়িত্বা মর্দ্দিতানি যানি নারিকেলানি ফলানি তেষাং রসৈর্জলৈর্নির্যাসৈর্বা স্নিগ্ধানি সিক্তানি তৈলাক্তীকৃতানি বা শিলাতলানি আসনভূতপাষাণা যত্র তম্।

(র) অচিরেতি। অচিরলুপ্তানাং বৃক্ষেভ্যঃ সদ্যোনিষ্কাশিতানাং বল্কলানাং রসৈর্নির্যাসৈঃ পাটলং শ্বেত-রক্তবর্ণং ভূতলং যস্মিন্ তম্।

করিতেছিল; (প) বহুতর সারিকা উচ্চৈঃস্বরে বেদ পাঠ করিতেছিল; (ফ) বনকুক্কুটগুলি বৈশ্বদেবের অন্ন ভোজন করিতেছিল; (ব) সন্নিহিত-দীর্ঘিকা-স্থিত হংসশাবকগণ উড়ীধান্য ভোজন করিতেছিল, (ভ) হরিণীগণ জিহ্বাদ্বারা মুনিবালকদিগকে লেহন করিতেছিল; (ম) হোমকুণ্ডে নিক্ষিপ্ত অর্দ্ধদগ্ধ কুশ, সমিধ ও পুষ্প 'সিম সিম' শব্দ করিতেছিল; (য) পাষাণদ্বারা নারিকেল ভগ্ন করিলে তাহার জলে নীচের পাষাণ সিক্ত হইতেছিল; (র) বৃক্ষ হইতে সদ্য

(১)…সিমসিমায়মান…(২)…নারিকের…

भूतलम्, (ल) रक्तचन्दनोपलिप्तमादित्यमण्डल-निहित-करवीर-कुसुमम्, (व) इतस्ततो विक्षिप्त-भस्मलेखालङ्कृत-मुनिजन भोजन-भूमिभागम्,[१] (श) परिचित-शाखामृग-कराकृष्ट-यष्टि [२] निष्काश्यमान-प्रवेश्यमान-जरदन्ध-तापसम्, (ष) इभ-करभकार्द्धोपभुक्तपतितैः सरस्वती भुजलता-विगलितैः [३] शङ्खवलयैरिव मृणाल-शकलैः कल्माषितम्, (स) ऋषिजनार्थमेणकैर्विषाण-शिखरोत्खन्यमान-विविध-कन्दमूलम्, (ह) अम्बु-पूर्ण-पुष्कर पुटैर्वनकरिभिरापूर्य्यमाण-विटपाल-

(ल) रक्तेति। रक्तचन्दनेन उपलिप्ते चर्च्चिते आदित्यमण्डले सूर्य्यविम्बे निहितं सूर्य्याय निवेद्य स्थापितं करवीरकुसुमं यत्र तम्।

(व) इत इति। इतस्ततो विक्षिप्ताभिर्विकीर्णाभिः भस्मनां लेखाभिः रेखाभिः अलङ्कृताः सीमावद्धीकरणात् शोभिता मुनिजनानां भोजनभूमिभागा यत्र तम्। चरणस्पर्शादिनिवारणाय भस्मरेखाङ्कितत्वमिति बोध्यम।

(श) परिचितेति। परिचितैः पूर्व्वं विज्ञातस्वभावैः शाखामृगैर्व्वानरैः कराकृष्टयष्ट्या हस्ताकृष्टदण्डेन निष्काश्यमानाः केचिद् गृहाद्वहिष्क्रियमाणाः प्रवेश्यमानाः केचिद् गृहमध्ये पूर्य्यमाणाश्च जरन्तो वृद्धाः अन्धाः तापसा यत्र तम्।

(ष) इभेति। इभकरभकैः करिशिशुभिः अर्द्धोपभुक्तैः पश्चात्पतितैः कथमपि तेषां वदनेभ्यो भ्रष्टैः, सरस्वत्या वाग्देव्या भुजलतायाः सकाशात् विगलितैः पतितैः शङ्खवलयैरिव स्थितैः मृणालशकलैर्विसखण्डैः कल्माषितं विचित्रीकृतम्। अत्र जात्युत्प्रेक्षालङ्कारः। तेन च वाग्देव्याः सततावस्थानं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः

(स) ऋषीति। ऋषिजनार्थं मुनिजनभोजनार्थम् एणकैर्म्मृगैः कर्त्तृभिः विषाणशिखरैः शृङ्गाग्रैः करणैः उत्खन्यमानानि उत्पाट्यमानानि विविधानि कन्दाः शालूकानि पद्मादीनां मूलानीत्यर्थः मूलानि मूलकादीनि च यत्र तम्।

(ह) अम्बुपूर्णेति। वनकरिभिः कर्त्तृभिः, अम्बुभिर्जलैः पूर्णानि यानि पुष्करपुटानि शुण्डाग्राणि तैः करणैः, आपूर्य्यमाणानि, भ्रियमाणानि, विटपानां छित्त्वा आनीय रोपितानां शाखानां, आलवालानि मूलजलधारणस्थानानि यत्र तम। "पुष्करं पङ्कजे व्योम्नि पयः करिकराग्रयोः" इत्यादि विश्वः।

আনীত বল্কলের রসে ভূতল পাটলবর্ণ হইয়া যাইতেছিল; (ল) ভূতলে রক্তচন্দনদ্বারা চিত্রিত সূর্য্যমণ্ডলের উপরে নিবেদিত করবীপুষ্প স্থাপিত ছিল; (ব) নানা দিকে ভস্মরেখাদ্বারা মুনিগণের ভোজনস্থান বিভক্ত করা ছিল; (শ) পরিচিত বানরগণ, হস্তদ্বারা যষ্টি আকর্ষণ করিয়া কোন কোন প্রাচীন অন্ধ তপস্বীকে গৃহ হইতে বাহির করিতেছিল, আবার কোন কোন প্রাচীন অন্ধ তপস্বীকে গৃহমধ্যে প্রবেশ করাইতেছিল; (ষ) হস্তিশাবকগণ অর্দ্ধাংশ ভোজন করিলে কোন কারণে তাহাদের মুখ হইতে নিপতিত মৃণালখণ্ডসকল, বাগ্দেবীর হস্ত হইতে স্খলিত শঙ্খবলয়ের ন্যায় থাকিয়া আশ্রমটিকে বিচিত্র করিয়াছিল; (স) মুনিগণের

(१)…विभक्तजन…भोजनभूमिपरिहारं। (२)… कराकृष्टनिष्काश्यमान… (३)…वाहुलताविधूतैः।

बालकम्, (ज) ऋषिकुमारकाकृष्यमाणवनवराहदंष्ट्रान्तराललग्नशालूकम्, (क) उपजातपरिचयैः कलापिभिः पक्षपुटपवनसन्धुक्ष्यमाणमुनिहोमहुताशनम्, (ख) आरभ्यमाणामृतचरुचारुगन्धम्, (ग) अर्धपक्वपुरोडाशपुण्यपरिमलामोदितम्, (१) (घ) अविच्छिन्नाज्यधाराहुतिहुतभुग्घुङ्कार [२] मुखरितम्, (ङ) उपचर्य-माणातिथिवर्गम्, (च) पूज्यमानपितृदैवतम्, (छ) अर्च्यमान (३) हरिहर-

---

(ज) ऋषीति। ऋषिकुमारकैः आकृष्यमाणानि वनवराहाणां दंष्ट्रान्तराललग्नानि शालूकानि उत्पलानां कन्दः मूलानीति यावत् यत्र तत्। "शालूकमेषां कन्दः स्या" दित्यमरः।

(क) उपेति। उपजातपरिचयैः पूर्वत एव मुनीनामहिंसास्वभाववेदिभिरिति तात्पर्य्यम्। कलापिभिः मयूरैः पक्षपुटानां पवनेन वायुना सन्धुक्ष्यमाणाः सन्दीप्यमानाः होमहुताशना यत्र तत्। एभिर्विशेषणैराश्रमस्य परमशान्तत्वं सूचितम्।

(ख) आरभ्येति। आरभ्यमाणस्य पक्तुं प्रवर्त्तितस्य अमृतचरोः घृतसंयुक्तचरोः चारुर्मनोहरो गन्धो यत्र तत्।

(ग) अर्धेति। अर्धपक्वस्य पुरोडाशस्य हवनीयद्रव्यविशेषस्य पुण्यपरिमलेन पवित्रगन्धेन आमोदितं आनन्दितम्।

(घ) अवीति। अविच्छिन्ना या आज्यधारा घृतधारा तया आहुत्या प्रक्षेपेण यो हुतभुजो वह्नेर्हुङ्कारः 'हु' इति शब्दः तेन मुखरितं शब्दायमानीकृतम्। अत्र हुतभुग्घुङ्कार इति पदगतो श्रुतिकटुत्वदोषः, स च 'हव्यवाहन-हुङ्कार' इति पाठेन समाधेयः। नच 'हुतभुग्झङ्कार' इति पाठान्तरं निर्दोषमिति वाच्यं वह्नेर्झं-कारासम्भवात्।

(ङ) उपेति। उपचर्यमाणाः सत्क्रियमाणाः अतिथिवर्गा यत्र तत्।

(च) पूज्येति। पूज्यमानानि श्राद्धेन पञ्चोपचारादिना च तोष्यमाणानि पितरो दैवतानि देवाश्च यत्र तत्।

---

ভোজনের নিমিত্ত হরিণগণ শৃঙ্গের অগ্রদ্বারা নানাবিধ শালূক ও মূল উত্তোলন করিতেছিল; (ছ) বন্য হস্তিগণ জলপূর্ণ শুণ্ডাগ্রদ্বারা, রোপিত শাখার (কলম গাছের) আলবাল পূরণ করিতেছিল; (জ) ঋষিকুমারগণ, বন্য শূকরগণের দন্তমধ্যে সংলগ্ন শালূক (পদ্মমূল) আকর্ষণ করিতেছিল; (ক) পরিচিত ময়ূরগণ পক্ষপুটের বায়ুদ্বারা মুনিগণের হোমাগ্নি প্রজ্বলিত করিয়া দিতেছিল; (খ) পচ্যমান ঘৃতাক্ত চরুর মনোহর গন্ধ বহির্গত হইতেছিল; (গ) অর্দ্ধপক্ক পুরোডাশের (যজ্ঞীয় পিটার) পবিত্র গন্ধে আমোদিত করিয়াছিল; (ঘ) অবিচ্ছিন্ন ঘৃতধারার আহুতিতে হোমাগ্নি হইতে 'হুং' 'হুং' শব্দ উঠিয়া আশ্রমটিকে মুখরিত করিয়াছিল; (ঙ) কেহ কেহ অতিথিদিগের সেবা করিতেছিলেন; (চ) কেহ পিতৃশ্রাদ্ধ, কেহ বা দেবতা-

---

(१)···पुण्यपरिमला, पुरोडाशपरिमला···। (२) हव्यवाहहुङ्कार···, झङ्कार···। (३) अभ्यर्च्यमान···।

পিতামহম্, (ছ) উপদিশ্যমান-(১) শ্রাদ্ধকল্পম্, (জ) ব্যাখ্যায়মান-যজ্ঞবিদ্যম্, (ঝ) আলোচ্যমান-ধর্ম্মশাস্ত্রম্, (ঞ) পঠ্যমান-(২) বিবিধ-পুস্তকম্, (ট) বিচার্য্যমাণ-সকল-শাস্ত্রার্থম্, (ঠ) আরভ্যমাণ-পর্ণশালম্, [ড] উপলিপ্যমানাজিরম্, [ঢ] উপমৃজ্যমানো-(৩] টজাভ্যন্তরম্, [ণ] আবধ্যমানধ্যানম্, [ত] সাধ্যমান-মন্ত্রম্, [থ] অভ্যস্যমানযোগম্ [দ) উপক্রিয়মাণ-(৪] বনদেবতাবলিম্, [ধ] নির্ব্বর্ত্ত্যমান-মৌঞ্জ-[৫] মেখলম্, [ন] প্রক্ষাল্যমান-[৬)

(ছ) অর্চ্চ্যেতি। অর্চ্চ্যমানঃ পূজ্যমানঃ, হরির্বিষ্ণুঃ, হরঃ শিবঃ, পিতামহো ব্রহ্মা চ যত্র তম্।

(জ) উপেতি। উপদিশ্যমানঃ অধ্যাপ্যমানঃ শ্রাদ্ধকল্পো গোভিলাদিপ্রণীতঃ শ্রাদ্ধবিধির্যত্র তম্।

[ঝ] ব্যাখ্যেতি। ব্যাখ্যায়মানা বিব্রিয়মাণা যজ্ঞবিদ্যা অশ্বমেধাদিযজ্ঞবিধায়কশাস্ত্রং যত্র তম্।

[ঞ] আলোচ্যেতি। আলোচ্যমানানি ধর্ম্মশাস্ত্রাণি মন্বাদিকৃতসংহিতা যত্র তম্।

[ট] পঠ্যেতি। পঠ্যমানানি বিবিধানি পুস্তকানি যত্র তম্।

[ঠ] বিচেতি। বিচার্য্যমাণা বিতর্ক্যমাণাঃ সকলশাস্ত্রার্থা যত্র তম্।

[ড] আরভ্যেতি। আরভ্যমাণাঃ নির্ম্মাতুং প্রবর্ত্ত্যমানাঃ পর্ণশালা যত্র তম্।

[ঢ] উপেতি। গোময়াদিনা উপলিপ্যমানানি অজিরাণি চত্বরাণি যত্র তম্।

[ণ] উপেতি। উপমৃজ্যমানানি সম্মার্জ্জন্যাদিনা পরিষ্ক্রিয়মাণানি উটজানাং পর্ণশালানাম্ অভ্যন্তরাণি যত্র তম্।

[ত] আবধ্যেতি। আবধ্যমানং ক্রিয়মাণং ধ্যানং প্রত্যর্থৈকতানতা যস্মিন্ তম্।

[থ] সাধ্যেতি। সাধ্যমানঃ পুরশ্চরণেন সিদ্ধিং প্রাপ্যমাণঃ মন্ত্রো যত্র তম্।

[দ] অভ্যস্যেতি। অভ্যস্যমানঃ অসকৃদনুষ্ঠীয়মানঃ যোগশ্চিত্তবৃত্তিনিরোধো যত্র তম্।

(ধ) উপেতি। উপক্রিয়মাণা দীয়মানা বনদেবতাভ্যো বলয়ঃ পূজাসামগ্র্যো যত্র তম্।

(ন) নির্ব্বর্ত্ত্যেতি। নির্ব্বর্ত্ত্যমানা নির্ম্মীয়মাণা মৌঞ্জী মুঞ্জোপাদানা মেখলা যত্র তম্।

পূজা করিতেছিলেন; (ছ) ভিন্ন ভিন্ন স্থানে ব্রহ্মা, বিষ্ণু ও শিবের পূজা হইতেছিল; (জ) কেহ শ্রাদ্ধশাস্ত্র পড়াইতেছিলেন; (ঝ) কেহ যজ্ঞশাস্ত্রের ব্যাখ্যা করিতেছিলেন; (ঞ) অনেকে ধর্ম্মশাস্ত্রের আলোচনা করিতেছিলেন; (ট) কোন স্থানে নানাবিধ পুস্তক পাঠ হইতেছিল; (ঠ) অনেকে সকল শাস্ত্রের অর্থ নিয়া বিচার করিতেছিলেন; (ড) কেহ পর্ণশালা নির্ম্মাণ করিতে আরম্ভ করিয়াছিলেন; [ঢ] কেহ উঠান লেপিতেছিলেন; (ণ) কেহ পর্ণশালার অভ্যন্তর পরিষ্কার করিতেছিলেন; (ত-থ-দ) কেহ ধ্যান, কেহ মন্ত্রসাধনা, কেহ বা যোগাভ্যাস করিতেছিলেন; (ধ) কেহ বনদেবতাদিগকে পূজার উপহার দিতেছিলেন; (ন) কেহ মুঞ্জদ্বারা মেখলা নির্ম্মাণ করিতেছিলেন; (প] কেহ বল্কল

(১) উদ্দিশ্যমান…। (২) বাচ্যমান…। (৩) অপমৃজ্যমান…।
[৪] উপহ্রিয়মাণ…। [৫] মুঞ্জ…। [৬] আক্ষ্যমান…।

वल्कलम्, (प) उपसंगृह्यमाण-समिधम्, (फ) संस्क्रियमाण (१) कृष्णाजिनम्, (ब) गृह्यमाण-(२) गवेधुकम्, (भ) शोष्यमाण-(३) पुष्कर-बीजम्, (म) ग्रथ्यमानाक्ष-मालम्, [य] गृह्यमाण-त्रिपुण्ड्रकं, [र] न्यस्यमान-वैत्रदण्डम् [४] [ल] आपूर्य्यमाण कमण्डलुम्, (व) अदृष्टपूर्वं कलिकालस्य, अपरिचितमनृतस्य, अश्रुतपूर्वमनङ्गस्य, [श] अब्जयोनिमिव त्रिभुवन-वन्दितम्, [ष] असुरारिमिव

---

[प) प्रक्षेति। प्रक्षाल्यमानं मलिनं शोध्यमानं वल्कलं यत्र तम्।

(फ) उपेति। उपसंगृह्यमाणा आक्रियमाणाः समिधो यत्र तम्।

(ब) संस्क्रीति। संस्क्रियमाणं पिच्छिकादिना परिष्क्रियमाणं कृष्णाजिनं कृष्णसारचर्म्म यत्र तम्।

(भ) गृह्येति। गृह्यमाणा आदीयमाना गवेधुका धान्यविशेषो यस्मिन् तम्।

(म) शोष्येति। शोष्यमाणानि आतपेन शुष्कतां नीयमानानि पुष्कराणां पद्मानां बीजानि यत्र तम्। जपमालानिर्म्माणार्थमेतदिति बोध्यम्।

(य) ग्रथ्येति। ग्रथ्यमाना अक्षमाला जपमाला यस्मिन् तम्।

(र) गृह्येति। गृह्यमाणं ललाटे धार्य्यमाणं त्रिपुण्ड्रकं तिलकविशेषो यत्र तम्।

(ल) न्यस्येति। न्यस्यमानो दूरादागत्य भूमौ स्थाप्यमानः वैत्रदण्डो यत्र तम्।

(व) आपूर्य्येति। आपूर्य्यमाणो जलैर्भ्रियमाणः कमण्डलुर्जलपात्रविशेषो यस्मिन् तम्। एषु यथा-सम्भवं 'केनचित्' 'कैश्चित्' इति कर्त्तृपदं योजनीयम्।

(श) अदृष्टेति। न विद्यते दृष्टं दर्शनं पूर्वं यत्र तम्। भावे क्तः, एवमन्ययोरपि। पापाभावा-दिति भावः। अनृतस्य मिथ्यायाः, न विद्यते परिचितं परिचयो यत्र तम्, सर्वदा सत्यव्यवहारादिति भावः। अनङ्गस्य कामस्य, न विद्यते श्रुतं श्रवणं पूर्वं यस्मिन् यस्य तम्, तत्कृतविकाराभावादिति भावः।

(ष) अब्जेति। अब्जयोनिं ब्रह्माणमिव त्रिभुवनवन्दितं त्रिजगत्पूजितम्, असाधारणपुण्यधामत्वात् प्रजापतित्वाच्चेति भावः। अत्र पूर्णोपमालङ्कारः।

---

প্রক্ষালন করিতেছিলেন; [ফ) কেহ সমিধ আহরণ করিতেছিলেন; [ব] কেহ কৃষ্ণ-সারের চর্ম্ম পরিষ্কার করিতেছিলেন; [ভ] কেহ গড়গড়ে ধান লইতেছিলেন; [ম] কেহ পদ্মের বীজ শুকাইতেছিলেন; (য) কেহ জপের মালা গাঁথিতে ছিলেন; (র) কেহ ত্রিপুণ্ড্র ধারণ করিতেছিলেন; (ল) কেহ বেত্রযষ্টি রাখিতেছিলেন; (ব) কেহ কমণ্ডলুতে জল পূরণ করিতেছিলেন। (শ) কলিকাল সে আশ্রম দেখিয়াছিল না, মিথ্যার সেখানে পরিচয় ছিল না এবং কামদেব সে আশ্রমের সংবাদ শোনেন নাই; (ষ) আর ব্রহ্মার ন্যায় যেই

---

(१) उपसंस्क्रियमाण…। (२) निगृह्यमाण…। (३) पेष्यमाण…।

(४) निदण्डकं, [illegible]परिव्राजकम्।

প্রকটিত-বরাহ-নরসিংহরূপম্, [১] (ঢ) সাংখ্যমিব কপিলাধিষ্ঠিতম্, (ণ) মথুরোপবনমিব [২] বলাবলীঢ়-দর্পিত-ধেনুকম্, (ত) উদয়নমিবানন্দিত-বৎস-কুলম্, (থ) কিম্পুরুষাধিরাজ্যমিব মুনিজন-গৃহীত-কলসা-(৩) ভিষিক্ত-

(ড) অসুরেতি। অসুরারিং বিষ্ণুমিব, প্রকটিতানি ব্যক্তীকৃতানি বরাহাঃ, নরাঃ, সিংহাঃ, রূপাণি মৃগাশ্চ যেন তং তেষাং তত্রাবস্থানাদিতি ভাবঃ, পক্ষে প্রকটিতে প্রকাশিতে বরাহনরসিংহয়োরবতারয়ো রূপে আকৃতী যেন তম্। পূর্ণোপমা। "রূপং মৃগেঽপি বিজ্ঞেয়"মিতি হলায়ুধঃ।

(ঢ) সাংখ্যমিতি। সাংখ্যং দর্শনমিব, কপিলয়া স্বর্ণবর্ণয়া গবা, কপিলেন সাংখ্যপ্রণেত্রা মুনিবিশেষেণ চ অধিষ্ঠিতং আশ্রিতম্। পূর্ণোপমা।

(ণ) মথুরেতি। মথুরায়া নগর্য্যা উপবনমিব, বলাবলীঢ়া দৈহিকবলান্বিতা অতএব দর্পিতাঃ সঞ্জাতদর্পাঃ ধেনবো নবপ্রসূতা গাবো যস্মিন্ তৎ; অত্র "শেষাদ্বা" ইতি কপ্রত্যয়ঃ। অন্যত্র তু বলাবলীঢ়ো বলবান্ দর্পিতশ্চ ধেনুকো ধেনুকনামাসুরো যত্র তৎ। পূর্ণোপমা। ধেনুকাসুরঃ কৃষ্ণেন হত ইতি ভাগবতে দ্রষ্টব্যম্।

(ত) উদেতি। উদয়নং তদাখ্যং পাণ্ডববংশজাতং কৌশাম্বীরাজমিব, আনন্দিতং ঘাসজলদানাদিনা সন্তোষিতং বৎসকুলং গোবৎসসমূহো যস্মিন্ তৎ, পক্ষে আনন্দিতং সদ্ব্যবহারাদিনা পরিতোষিতং বৎসকুলং বৎসদেশীয়জনসমূহো যেন তম্, তস্য বৎসদেশরাজত্বাৎ। পূর্ণোপমা। পুরা উদয়নো নাম রাজা ন্যায়মার্গেণ পরিপালয়ন্ প্রজাস্তোষয়ামাসেতি কথাসরিৎসাগরবার্ত্তা।

(থ) কিম্পুরুষেতি। কিম্পুরুষাণাং কিন্নরাণাম্ অধিরাজ্যং রাষ্ট্রমিব, মুনিজনৈর্গৃহীতা যে কলসা জলপূর্ণকুম্ভাস্তৈরভিষিচ্যমানা দ্রুমা বৃক্ষা যত্র তৎ, অন্যত্র মুনিজনগৃহীতকলসৈঃ অভিষিচ্যমানো রাজ্যে অভিষিচ্যমানঃ দ্রুমো নাম রাজা যত্র তৎ। পূর্ণোপমা। পুরা কিল মুনয়ঃ কিন্নররাজ্যে দ্রুমমভিষিষিচুরিত্যপি কথাসরিৎসাগরে দ্রষ্টব্যম্।

আশ্রম ত্রিজগতের পূজনীয় ছিল; (ড) নারায়ণ যেমন বরাহ ও নরসিংহ অবতার ধারণ করিয়াছিলেন, সেই আশ্রমও তেমন বরাহ, মনুষ্য, সিংহ ও হরিণ—এই সকল ধারণ করিতেছিল; (ঢ) সাংখ্যদর্শন যেমন কপিলের আশ্রিত, সেই আশ্রমও তেমন কপিলাধেনুগণ-কর্তৃক আশ্রিত; (ণ) মথুরা নগরীর উপবনে যেমন বলবান্ ও দর্পশালী ধেনুকাসুর ছিল, সেই আশ্রমেও তেমন বলবতী ও তেজস্বিনী ধেনুগণ ছিল; (ত) উদয়ন রাজা যেমন বৎসদেশীয় প্রজাগণকে আনন্দিত করিয়াছিলেন, সেই আশ্রমে মুনিগণও তেমন গোবৎস-দিগকে আনন্দিত করিতেছিলেন; (থ) কিন্নরদিগের রাজ্যে যেমন মুনিগণ জলপূর্ণ কলস ধারণ করিয়া দ্রুমনামে রাজাকে অভিষিক্ত করিয়াছিলেন, সেই আশ্রমেও তেমন মুনিগণ

(১) নরহরিবরাহরূপম্। (২) মথুরোপবনমিব। (৩)…সম্ভৃতকলশা…।

মান-দ্রুমম্, (গ) নিদাঘসময়াবসানমিব আসন্ন (১) জলপ্রপাতম্, (ঘ) জলধরসময়মিব বন-গহন-মধ্য-সুখ-সুপ্ত-হরিম্, (ঙ) হনূমন্তমিব (২) শিলাশকল-প্রহার-সঞ্চূর্ণিতাক্ষাস্থি-(৩) সঞ্চয়ম্, (চ) খাণ্ডব-বিনাশোদ্যতার্জ্জুনমিব প্রারব্ধাগ্নিকার্য্যম্, (ছ) সুরভি-বিলেপনধরমপি হুততাবিভূত-(৪)

(গ) নিদাঘেতি। নিদাঘসময়াবসানমিব গ্রীষ্মকালশেষমিব, আসন্নৌ নিকটবর্ত্তিনৌ, জলং দীর্ঘিকাজলঞ্চ প্রপাতো নির্ঝরশ্চ তৌ যস্য তম্, পক্ষে আসন্নো নিকটবর্ত্তী জলপ্রপাতো বৃষ্টিজলপতনং যস্য তম্। পূর্ণোপমা। "প্রপাতো নির্ঝরে তটে" ইতি মেদিনী।

(ঘ) জলেতি। জলধরসময়মিব বর্ষাকালমিব, বনে অরণ্যে যদ্গহনং গহ্বরপ্রদেশঃ তস্য মধ্যে সুখেন শঙ্কাভাবাশ্রিতিমিলনভাবেন সুপ্তা হরয়ঃ সিংহা যস্মিন্ তম্। অন্যত্র তু বনস্য সাগরজলস্য গহনে গহ্বরে দুর্গমীরে মধ্যে মধ্যস্থানে সুখেন সুপ্তো হরির্নারায়ণো যস্মিন্ তম্। "শেতে বিষ্ণুঃ সদাষাঢ়ে ভাদ্রে চ পরিবর্ত্ততে।" ইত্যাদিস্মৃতেরিতি ভাবঃ। অত্র বনগহনশব্দয়োঃ পর্য্যায়তয়া অর্থস্যাপাততঃ পুনরুক্ততাপ্রতীতিঃ পরস্মিন্ স্বপ্রবোধকাভাবাৎ ভিন্নাকারাবচ্ছেদকত্বাচ্চ পুনরুক্তবদাভাসোঽলঙ্কারঃ পূর্ণোপমা চানয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ। "বনং প্রস্রবণে গেহে প্রবাসেঽম্বুনি কাননে" ইতি হৈমঃ। "গহনং গহ্বরে দুঃখে বনে" ইতি বিশ্বপ্রকাশঃ।

(ঙ) হনূমন্তমিতি। হনূমন্তং অঞ্জনাপুত্রমিব, শিলাশকলস্য প্রস্তরখণ্ডস্য প্রহারেণ সঞ্চূর্ণিতঃ তৈলনির্ম্মাণার্থং পিষ্টঃ অক্ষাণাং বিভীতকফলানাম্ অস্থিসঞ্চয়ো মধ্যবর্ত্তী কঠিনাংশো যত্র তম্, অন্যত্র তু শিলাশকলপ্রহারেণ সঞ্চূর্ণিতো ভগ্নঃ অক্ষস্য অক্ষনামকরাবণপুত্রস্য অস্থিসঞ্চয়ো যেন তম্। পূর্ণোপমা। "অক্ষো বিভীতকো বৃক্ষঃ পাশকোঽক্ষোঽক্ষমিন্দ্রিয়ম্। অক্ষো রাবণিরিত্যুক্তঃ" ইত্যমরঃ। ইত্যনেকার্থধ্বনিমঞ্জরী। পুরা লঙ্কাদাহানন্তরং হনূমান্ পাষাণপ্রহারেণ অক্ষনামানং রাবণপুত্রং নিহতবানিতি রামায়ণম্।

(চ) খাণ্ডবেতি। খাণ্ডবস্য তদাখ্যবনস্য বিনাশে দাহনে উদ্যতো যোঽর্জ্জুনস্তৎতৃতীয়পাণ্ডবস্তমিব, প্রারব্ধম্ উপক্রান্তম্ অগ্নিকার্য্যং হোমো যত্র তম্, পক্ষে প্রারব্ধং দাহবিঘ্ননিবারণেনোপক্রান্তম্ অগ্নেঃ কার্য্যং বহ্নিক্রিয়া যেন তম্। পূর্ণোপমা। অন্যেতিহাসঃ পূর্ব্বমুক্তঃ।

জলপূর্ণ কলস ধারণ করিয়া বৃক্ষসমূহকে অভিষিক্ত করিতেছিলেন; (গ) গ্রীষ্মকালের শেষে যেমন বৃষ্টিপাত নিকটবর্ত্তী হয়, সেই আশ্রমেও তেমন দীর্ঘিকার ও প্রস্রবণের জল নিকটবর্ত্তী ছিল; (ঘ) বর্ষাকালে (আষাঢ়মাসে) নারায়ণ যেমন গভীর সাগরজলমধ্যে সুখে নিদ্রিত হন, সেই আশ্রমেও তেমন সিংহগণ বনের অন্তর্গত গহ্বরমধ্যে সুখে নিদ্রিত ছিল; (ঙ) হনূমান্ যেমন প্রস্তরখণ্ডের আঘাতে রাবণের পুত্র অক্ষকুমারের অস্থিসমূহ চূর্ণ করিয়াছিল, মুনিগণও তেমন তৈল-নির্ম্মাণের জন্য প্রস্তরখণ্ডের আঘাতে বহেড়ার বীজ সকল চূর্ণ করিতেছিলেন; (চ) খাণ্ডববন-দাহনে প্রবৃত্ত অর্জ্জুন যেমন অগ্নির কার্য্য আরম্ভ করিয়াছিলেন,

(১) প্রত্যাসন্ন···। (২) অনিলসুতমিব। (৩) শিলাশকলসঞ্চূর্ণিতাক্ষাস্থি···।
(৪)···হুতবহধূমগন্ধম্।

धूम-गन्धम्, (छ) मातङ्गकुलाध्यासितमपि पवित्रम्, (ज) उल्लसित-धूमकेतु-शत-(१) मपि प्रशान्तोपद्रवम्, (झ) परिपूर्ण-द्विजपति-मण्डल-सनाथमपि सदा-सन्निहित-तरु-गहनान्धकारम्, (ञ) अतिरमणीयमपरमिव ब्रह्मलोकमाश्रममपश्यम्। (ट)

यत्र च मलिनता हविर्धूमेषु न चरितेषु, मुखरागः शुकेषु न कोपेषु, तीक्ष्णता कुशाग्रेषु न स्वभावेषु, चञ्चलता कदलीदलेषु न मनःसु, चक्षूरागः

---

(छ) सुरभीति। सुरभि सुगन्धि विलेपनम् अङ्गरागयोग्यं चन्दनादिकं धरतीति सः, तं तथोक्तमपि, सततमाविर्भूतो धूमगन्धो यस्मात्तमिति सौरभाविर्भावसम्भवे धूमगन्धाविर्भावाद्विरोधः, सुरभेर्गोः, विलिप्यतेऽनेनेति विलेपनं गोमयं यस्यां सा तादृशी धरा भूमिर्यत्र तं तथोक्तमिति तत्समाधानम्। अत्र विरोधालङ्कारः। "सुरभिर्गवि च स्त्रियां"मित्यमरः।

(ज) मातङ्गेति। मातङ्गकुलेन चण्डालसमूहेन अध्यासितमाश्रितमपि पवित्रमिति विरोधः, मातङ्गकुलेन हस्तिसमूहेनेति तत्समाधानम्। विरोधालङ्कारः। "मातङ्गः श्वपचे गजे" इति विश्वः।

(झ) उल्लसितेति। उल्लसितम् उत्थितं धूमकेतुशतं यत्र तादृशमपि प्रशान्तोपद्रवमिति विरोधः, धूमकेतुशतं वह्निसमूहो यत्रेति तत्समाधानम्। विरोधालङ्कारः। "धूमकेतुः स्मृतो वह्नावुत्पातग्रहभेदयोः।" इति विश्वः।

(ञ) परीति। परिपूर्णेन द्विजपतिमण्डलेन चन्द्रमण्डलेन सनाथः सहितस्तं तादृशमपि, सदा सन्निहितः अवस्थितः तरुगहनेषु अन्धकारो यत्र तमिति विरोधः, परिपूर्णेन ज्ञानपूर्णेन द्विजपतिमण्डलेन ब्राह्मणश्रेष्ठगणेन सनाथस्तमिति तत्समाधानम्। विरोधालङ्कारः।

(ट) अतीति। अपरं ब्रह्मलोकमिवेति द्रव्योत्प्रेक्षालङ्कारः।

(ठ) यत्रेति। अपि चेति चार्थः। यत्र आश्रमे। चरितेषु जनानां चरित्रेषु, मलिनता हिंसापैशुन्यादिपापप्रवृत्तिः नासीदिति शेषः। एवमन्यत्रापि। मैत्र्यादिभावनया शुद्धचित्तत्वादिति भावः। इतः प्रभृति

---

সেই আশ্রমে মুনিগণও তেমন অগ্নিকার্য্য (হোম) আরম্ভ করিয়াছিলেন, (ছ) সেই আশ্রমে সুগন্ধিচন্দনপ্রভৃতি অনুলেপনদ্রব্য (সমাধানপক্ষে—গোময়লিপ্ত ভূমি) থাকিলেও সর্ব্বদাই ধূমের গন্ধ বাহির হইতেছিল; (জ) সেই আশ্রম চণ্ডালগণ কর্ত্তৃক (সমাধানপক্ষে—হস্তিসমূহ কর্ত্তৃক) আশ্রিত হইলেও পবিত্র ছিল; (ঝ) বহুসংখ্য ধূমকেতু (সমাধানপক্ষে—হোমের অগ্নি) উত্থিত হইলেও সে আশ্রমে উপদ্রব ছিল না; (ঞ) সম্পূর্ণ চন্দ্রমণ্ডল (সমাধানপক্ষে—জ্ঞানী ব্রাহ্মণশ্রেষ্ঠগণ) সংযুক্ত হইলেও সেই আশ্রমের বনমধ্যে সর্ব্বদা অন্ধকার ছিল; (ট) দ্বিতীয় ব্রহ্মলোকের ন্যায় অতিরমণীয় সেই আশ্রম দেখিলাম।

(ঠ) আর যে আশ্রমে হোমাগ্নির ধূমেই মলিনতা (ধূম্রবর্ণ) ছিল, কিন্তু কাহারও

---

(१) सहस्र...।

কোকিলেষু ন পর-কলত্রেষু, কণ্ঠগ্রহঃ কমণ্ডলুষু ন সুরতেষু, মেখলাবন্ধো ব্রতেষু নের্ষ্যাকলহেষু, স্তনস্পর্শো হোমধেনুষু ন বনিতাসু, (১) পক্ষপাতঃ কৃকবাকুষু (২) ন বিদ্যা-বিবাদেষু, ভ্রান্তিরনলপ্রদক্ষিণেষু (৩) ন শাস্ত্রেষু, (৪) বসুসঙ্কীর্ত্তনং দিব্যকথাসু ন তৃষ্ণাসু, (৫) গণনা রুদ্রাক্ষ-বলয়েষু ন শরীরেষু,

---

শুকমুখবিকারো জরয়া ন ধনাভিমানেন ইত্যন্তং যাবৎ প্রত্যেকবাক্যে অপরস্মিন্নপি শব্দা অন্যনিরাসাৎ শ্লেষ-সহিতো শাব্দো পরিসংখ্যালঙ্কারঃ। মুখরাগো বদনস্য রক্তিমা। কোপেঽপি তি নিমিত্তসপ্তমী তেন কোপ-নিমিত্তকো মুখরক্তিমা নাসীদিত্যর্থঃ কোপস্যৈবাভাবাৎ। কুশাগ্রেষু তীক্ষ্ণতা ভেদনোপযোগিনী সূক্ষ্মতা, কিন্তু স্বভাবেষু তীক্ষ্ণতা ক্রূরতা নাসীৎ নির্ম্মলচিত্তত্বাৎ। মনঃসু চঞ্চলতা অধীরতা ন, উপদ্রবাভাবাৎ। কোকিলেষু চক্ষূরাগো নয়নলৌহিত্যং, কিন্তু পরকলত্রেষু চক্ষূরাগো নয়নাসঞ্জনং, কামাভাবাৎ। কমণ্ডলুষু কণ্ঠগ্রহো গলধারণং, কিন্তু সুরতেষু ন, ঊর্দ্ধরেতসাং তদভাবাদিতি ভাবঃ। ব্রতেষু উপনয়নাদিনিয়মেষু মেখলাবন্ধো মৌঞ্জীবন্ধনং, কিন্তু ঈর্ষ্যাকলহেষু ঈর্ষ্যামূলকবিবাদেষু মেখলাবন্ধঃ খড়্গমুষ্টিধরণং ন, তেষা-মীর্ষ্যায়া এবাভাবাৎ। "মেখলা মুষ্টিদেশার্থং সুপর্য্যধো লৌহবন্ধঃ। ইত্যেকে" ইত্যমরটীকায়াং ভরতঃ। হোম-ধেনুষু স্তনস্পর্শো দুগ্ধদোহনার্থঃ, কিন্তু স বনিতাসু ন, কামাবস্থাভাবাৎ। কৃকবাকুষু কুক্কুটপক্ষিষু পক্ষপাতঃ পক্ষাভ্যাং পতনম্, কিন্তু বিদ্যাবিবাদেষু শাস্ত্রতর্কেষু পক্ষপাতো মধ্যস্থস্য বাদিপ্রতিবাদিনোরেকতরসহায়তাকরণং ন, তস্যান্যায্যত্বাৎ। অত্র পক্ষিসামান্যস্যৈব পক্ষাভ্যাং পতনসম্ভবে কেবলকৃকবাকূপাদানাদবিশেষে বিশেষাখ্যদোষঃ, স চ 'পক্ষিষু' ইতি পাঠেন সমাধেয়ঃ। অনলপ্রদক্ষিণেষু হোমাগ্নিপ্রদক্ষিণকার্য্যেষু ভ্রান্তিঃ পরিভ্রমণং, শাস্ত্রেষু ন ভ্রান্তি-র্মিথ্যাজ্ঞানম্, যথাযথনির্ণয়াৎ। দিব্যকথাসু স্বর্গীয়োপাখ্যানকথনেষু বসূনাং ধ্রুবপ্রভৃতীনাং দেববিশেষাণাং সঙ্কীর্ত্তনমুল্লেখঃ, কিন্তু তৃষ্ণাস্বিত্যপি নিমিত্তসপ্তমী, তেন ধনতৃষ্ণানিমিত্তকং বসুনো ধনস্য সঙ্কীর্ত্তনং ন,

---

চরিত্রে মলিনতা ( পরহিংসাপ্রভৃতি পাপবৃত্তি ) ছিল না ; শুকপক্ষিগণেরই মুখ রক্তবর্ণ ছিল, কিন্তু ক্রোধে কাহারও মুখ রক্তবর্ণ হইত না ; কুশাগ্রেই তীক্ষ্ণতা ছিল , কিন্তু কাহারও স্বভাবে তীক্ষ্ণতা [ ক্রূরতা ] ছিল না ; কদলীপত্রেই চাঞ্চল্য ছিল, কিন্তু কাহারও মনে চাঞ্চল্য ছিল না ; কোকিলগণেরই চক্ষূরাগ [ নয়ন রক্তবর্ণ ] ছিল, কিন্তু পরস্ত্রীর প্রতি কাহারও চক্ষূরাগ [ নয়ন আকর্ষণ ] ছিল না ; কমণ্ডলুরই কণ্ঠধারণ ছিল, কিন্তু সম্ভোগের বেলায় কণ্ঠ-ধারণ ছিল না ; উপনয়নেই মেখলাবন্ধন [ মৌঞ্জী ধারণ ] ছিল, কিন্তু ঈর্ষ্যামূলক বিবাদে মেখলাবন্ধন [ তরবারির মুষ্টিধারণ ] ছিল না ; হোমধেনুরই স্তনস্পর্শ হইত, কিন্তু স্ত্রীর নহে ; কুক্কুটপক্ষিগণেরই পক্ষপাত [ পক্ষদ্বারা ভূমিতে পতন ] ছিল, কিন্তু শাস্ত্রীয় তর্কে পক্ষপাত ছিল না ; হোমাগ্নিপ্রদক্ষিণ করিবার সময়েই ভ্রান্তি [ পরিভ্রমণ ] ছিল, কিন্তু শাস্ত্রে ভ্রান্তি [ ভ্রম ] ছিল না ; স্বর্গের কোন উপাখ্যান বলিবার সময়ই বসুগণের [ অষ্টবসুর ] উল্লেখ হইত, কিন্তু ধনের লোভে বসুর [ ধনের ] উল্লেখ হইত না ; জপের সময় রুদ্রাক্ষমালাতেই গণনা

---

(১) কামিনীষু। (২) কুক্কুটেষু। (৩)···প্রদক্ষিণাসু। (৪) শাস্ত্রার্থেষু। (৫) ধনতৃষ্ণাসু।

मुनि-बाल-नाशः क्रतु-दीक्षया न मृत्युना, रामानुरागो रामायणेन न यौवनेन, मुखभङ्ग-विकारो जरया न धनाभिमानेन। (ड)

यत्र च महाभारते शकुनि-वधः, पुराणे वायु-प्रलपितम्, वयःपरिणामे (१) द्विज-पतनम्, उपवन-चन्दनेषु जाड्यम्, अग्नीनां भूतिमत्त्वम्, एणकानां गीत-

---

तेषां धनतृष्णाया एवाभावात्। रुद्राक्षाणां वलयेषु वलयीकृतमालासु गणना जपादौ संख्या, किन्तु शरीरेषु न गणना नादरः, तत्र तेषां निःस्पृहत्वात्। क्रतुदीक्षया यज्ञारम्भेण हेतुना मुनीनां बालनाशः केशादिच्छेदनं "केशवापः पूर्वेद्यु"रिति श्रुतेः, किन्तु मृत्युना मुनीनां बालनाशः शिशुध्वंसो न, तपःप्रभावेणाकालमृत्यु-विरहात्। रामायणेन रामायणे गुणग्रामश्रवणेन रामे दाशरथौ अनुरागो भक्तिः, किन्तु यौवनेन यौवनो-चितकामावेशेन रामायां रमण्याम् अनुराग आसक्तिर्न, तपोमाहात्म्येन तेषां यौवनेऽपि कामावेशाभावात्। जरया वार्द्धक्येन मुखस्य भङ्गविकारश्चर्म्मादिशैथिल्यकृता विकृतिः, किन्तु धनाभिमानेन मुखस्य भङ्गविकारः परेषु भ्रूकुट्यादिविकृतिर्न, तेषां धनाभिमानश्रीमदयोरेवाभावात्।

(ड) यत्रेति। अत्रापि अपि चेति चार्थः। महाभारत एव शकुनेर्दुर्य्योधनमातुलस्य वधः सहदेवेन कृतः श्रूयते स्म, न तु यत्र कुत्रचित् स्थाने शकुनेः पक्षिणो वधो दृष्टः, तेषां हिंसाविरहात्। अतः प्रभृति 'मूलानामधोगति'रित्यन्तं यावत् प्रत्येकवाक्ये अप्रश्नेऽपि तात्पर्य्येणान्यनिरासात् श्लेषानुप्राणिता आर्थी परिसंख्यालङ्कारः। पुराणे पुराणशास्त्र एव वायोर्देवतायाः प्रलपितं प्रकर्षेणोक्तिर्वर्णनमिति यावत्, न तु कुत्रापि गृहे वायुना उन्मादरोगेण प्रलपितं कस्यापि अनर्थकं वच आसीत् तादृशरोगाभावात्। वयः-परिणामे वार्द्धक्य एव द्विजानां दन्तानां पतनं, न तु महापातकादौ सति द्विजानां विप्राणां पतनं पातित्यम्, तेषां पापस्यैवाभावात्। "दन्तविप्राण्डजा द्विजाः" इत्यमरः। उपवनस्य चन्दनेषु तरुष्वेव जाड्यं शैत्यं, न तु जनेषु जाड्यं मूर्खता सर्व्वेषामेव पूर्णशिक्षालाभात्। अग्नीनामेव भूतिमत्त्वं भस्मवत्त्वं, न तु मुनीनां

---

( সংখ্যা ) ছিল, কিন্তু শরীরের প্রতি গণনা ( আদর ) ছিল না; যজ্ঞ আরম্ভের সময়েই মুনিগণের বালনাশ ( কেশচ্ছেদন ) হইত, কিন্তু মৃত্যুদ্বারা বালনাশ [বালকবিনাশ] হইত না; রামায়ণ শুনিয়া রামের প্রতি অনুরাগ [ ভক্তি ] হইত, কিন্তু যৌবনবশতঃ রমণীর প্রতি অনুরাগ [আসক্তি] হইত না; বার্দ্ধক্যবশতই মুখের বিকৃতি হইত, কিন্তু ধনের অহঙ্কারে নহে।

[ড] এবং যে আশ্রমে মহাভারতেই শকুনিবধ [ দুর্য্যোধনের মাতুলবধ ] শুনা যাইত কিন্তু আশ্রমের কোন স্থানে শকুনিবধ [ পক্ষিবিনাশ ] দেখা যাইত না; পুরাণেই বায়ুপ্রলাপ [ পবনদেবের প্রকৃষ্ট বর্ণনা ] শুনা যাইত, কিন্তু কোন গৃহে কাহারও বায়ুপ্রলাপ [ বায়ুরোগবশতঃ প্রলাপ ] শুনা যাইত না; বৃদ্ধকালেই দ্বিজপতন [ দন্তপতন ] হইত, কিন্তু পাপে দ্বিজপতন [ ব্রাহ্মণদিগের পাতিত্য ] হইত না, উপবনের চন্দনতরুতেই জাড্য [ শীতলতা ]

---

(१) परिणतौ।

শ্রবণ-ব্যসনম্, (১) শিখণ্ডিনাং নৃত্য-পক্ষপাতঃ, (২) ভুজঙ্গমানাং (৩) ভোগঃ, কপীনাং শ্রীফলাভিলাষঃ, মূলানামধোগতিঃ। (ড)

তস্য চৈবংবিধস্য মধ্যভাগ-(৪) মলঙ্কুর্বাণস্য, অলক্তকালোহিত-(৫) পল্লবস্য মুনিজনালম্বিত-(৬) কৃষ্ণাজিন জল-করঙ্ক-(৭) শাখস্য ; তাপস-

ভূতিরৈশ্বর্যং ধনসম্পত্তিশ্চ, ধনাসংগ্রহকারিত্বাৎ। এণকানাং হরিণানামেব গীতশ্রবণে ব্যসনম্ আসক্তিঃ, ন তু মুনীনাং, তেষাং তুর্যাদ্যসম্ভবাৎ। শিখণ্ডিনাং ময়ূরাণামেব নৃত্যে নর্তনকালে পক্ষস্য পতত্রস্য পাতঃ পতনং কস্যচিৎ স্খলনমিত্যর্থঃ, ন তু মুনীনাং নৃত্যে নৃত্যদর্শনে পক্ষপাতঃ স্পৃহা, তেষাং সর্বত্রৈব নিস্পৃহত্বাৎ। ভুজঙ্গমানাং সর্পাণামেব ভোগঃ শরীরং, ন তু মুনীনাং ভোগঃ স্রক্‌চন্দনবনিতাদিসম্ভোগজনিতং সুখং সর্বভোগবর্জনাৎ। "ভোগঃ সুখে স্ত্র্যাদিভৃতাবহেশ্চ ফণকায়য়োঃ" ইত্যমরঃ। কপীনাং বানরাণামেব শ্রীফলাভিলাষঃ বিল্বফলেষ্বভিরুচিঃ, ন তু মুনীনাং শ্রীর্ধনসম্পত্তিঃ সৈব ফলং কাম্যযাগাদিফলং তদভিলাষঃ, তেষাং মুমুক্ষুতয়া ফলানভিসন্ধিতকর্মকারিত্বাৎ। তথা মূলানাং তরুলতাদি-কন্দানামেব মূলকানামেব বা অধোগতিঃ ভূমি-নিম্নদিশি গমনং, ন তু মুনীনামধোগতির্নরকপতনম্ নিষ্পাপত্বাৎ।

অত্র অতীবচমৎকারিণী শ্লিষ্টা শ্লেষালঙ্কাররুচিরা পরিসংখ্যাপরম্পরা সহৃদয়রমণীয়ৈব পরমাং প্রীতিমাবহতি রসিকানাম্।

(ড) তস্যেতি। তস্য চৈবংবিধস্য আশ্রমস্য মধ্যভাগমলঙ্কুর্বাণস্য রক্তাশোকতরোরধশ্ছায়ায়ামুপবিষ্টং ভগবন্তং জাবালিং মুনিমপশ্যামিতি বহুদূরবর্তিন্যা ক্রিয়য়াঽন্বয়ঃ। অত্র দ্বিতীয়ান্তপদানি জাবালিমুনেস্তু বিশেষণানি। প্রথমতঃ ষষ্ঠ্যন্তপদানি চ রক্তাশোকতরোর্বিশেষণানি। অলক্তকবৎ আলোহিতানি

ছিল, কিন্তু কোন মানুষের জাড্য [মূর্খতা] ছিল না; অগ্নিরই ভূতি [ভস্ম] ছিল কিন্তু মুনিগণের ভূতি [সম্পদ্] ছিল না; হরিণগণেরই গান শুনিতে আসক্তি ছিল, কিন্তু মুনিগণের নহে; ময়ূরগণের নৃত্যের বেলায় পক্ষপাত [পাখা পড়িয়া যাওয়া] ছিল, কিন্তু মুনিগণের নৃত্যদর্শনে পক্ষপাত [অভিলাষ] ছিল না; সর্পগণেরই ভোগ [শরীর] ছিল, কিন্তু মুনিগণের কোন ভোগ [সম্ভোগ] ছিল না; বানরগণেরই শ্রীফলে [বিল্বফলে] অভিলাষ ছিল, কিন্তু মুনিগণের শ্রীফলে [ধনসম্পদ্রূপ কাম্যকর্মের ফলে] অভিলাষ ছিল না; এবং তরুলতা প্রভৃতির মূলেরই অধোগতি [নীচের দিকে গতি] হইত, কিন্তু মুনিগণের অধোগতি [নরকে গমন] হইত না।

(ড) এই প্রকার সেই আশ্রমের মধ্যস্থান অলঙ্কৃত করিয়া অনতিবৃহৎ একটি রক্ত অশোকবৃক্ষ ছিল; তাহার পল্লবগুলি অলক্তকের ন্যায় ঈষৎ রক্তবর্ণ ছিল, মুনিগণ তাহার শাখাতে কৃষ্ণসারের চর্ম এবং নারিকেলের করঙ্ক-(খোল) নির্মিত জলপাত্র সকল ঝুলাইয়া

(১) গীতব্যসনম্। (২) শিখণ্ডিনাং, নৃত্যপক্ষপাতঃ। (৩) ভুজগানাং, ভুজঙ্গানাং।
(৪) মধ্যভাগমলঙ্কুর্বাণস্য। (৫) অলক্তলোহিত…। (৬)…অবলম্বিত। (৭)…করক…।

কন্যকাভির্মূলভাগ-দত্ত(১) পীতপিষ্টাতকানেক(২) পঞ্চাঙ্গুলস্য, হরিণশিশুভিঃ পরিপীয়মানালবাল(৩) সলিলস্য, মুনিকুমারকাবদ্ধ-কুশচীরদাম্নঃ, হরিত-গোময়োপলেপন-(৪) বিবিক্ততলস্য, তৎক্ষণ-কৃত(৫) কুসুমোপহার-রমণীয়স্য, নাতিমহতঃ পরিমণ্ডলতয়া বিস্তীর্ণাবকাশস্য রক্তাশোকতরোরধশ্ছায়ায়ামুপবিষ্টম্, (ঢ) অত্যুগ্রতপোভি-(৬) র্ভুবনমিব সাগরৈঃ কনক-গিরিমিব কুলাচলৈঃ,(৭) ক্রতুমিব বৈতান-(৮) বহ্নিভিঃ, কল্পান্ত-দিবসমিব রবিভিঃ,

---

বৈবদ্ধানি পঞ্চাঙ্গুলানি যস্য তস্য। মুনিজনৈঃ আলম্বিতা যে কমণ্ডল্বজিনজলকরঙ্কাঃ কমণ্ডলবশ্চর্ম্মাণি জল-করঙ্কাঃ নারিকেলাস্থিনির্ম্মিতাঃ পাত্রবিশেষাশ্চ তৈঃ শবলাঃ শাখা যস্য তস্য। "করঙ্কো মস্তকে ঽস্থ্নি নারিকেলফলাস্থনি।" ইতি বিশ্বঃ। তাপসকন্যকাভিঃ মূলভাগে দত্তানি পীতপিষ্টাতকৈঃ হরিদ্রাবর্ণ-পটবাসচূর্ণৈঃ অনেকানি পঞ্চাঙ্গুলানি হস্তস্থপঞ্চাঙ্গুলচিহ্নানি যস্য তস্য। পরি সমন্তাৎ পীয়মানম্ আল-বালস্য সলিলং জলং যস্য তস্য। মুনিকুমারকৈঃ আবদ্ধানি কুশচীরাণাং দর্ভৈঃ করিষ্যমাণবসনানাং দামানি রজ্জবো যত্র তস্য। হরিতেন হরিদ্বর্ণেন অশুষ্কেণ গোময়েন যদুপলেপনং তেন বিবিক্তং পবিত্রং তলং যস্য তস্য। তৎক্ষণে অধুনা কৃতেন কুসুমোপহারেণ পুষ্পনিক্ষেপেণ রমণীয়স্য সুন্দরস্য। পরিমণ্ডলতয়া গোলাকারতয়া হেতুনা বিস্তীর্ণঃ অবকাশো নিম্নবর্ত্তী ছায়াপ্রদেশো যস্য তস্য। রক্তানামশোকানাং কুসুমানাং তর্জ্জনকারী ন তু রক্তো যঃ অশোকতরুরিতি, তস্যাধস্তাৎ।

(ঢ) অত্যুগ্রেতি। অত্যুগ্রাণি তপাংসি যেষাং তৈরিতি মহর্ষিভিরিত্যস্য বিশেষণম্। সাগরৈঃ সমুদ্রৈঃ ভুবনং জগদিব, কুলাচলৈঃ কুলপর্ব্বতৈঃ কনকগিরিং সুমেরুমিব, বিতানস্য যজ্ঞস্য ইমে ইতি বৈতানা যে বহ্নয়ো দক্ষিণাগ্নি-গার্হপত্যাহবনীয়নামানস্তৈঃ ক্রতুং যজ্ঞমিব, "বিতানো যজ্ঞ উল্লোচে" ইত্যাদি মেদিনী। রবিভির্দ্বাদশাদিত্যৈঃ কল্পান্তদিবসং প্রলয়বাসরমিব, তৎপূর্ব্বং তদানীঞ্চ দ্বাদশাদিত্যোদয়স্য পুরাণপ্রসিদ্ধত্বাৎ।

---

রাখিয়াছিলেন; তপস্বীদের কন্যারা তাহার মূলে হরিদ্রাবর্ণ আবীরদ্বারা হস্তের পঞ্চাঙ্গুলের অনেক চিত্র করিয়া রাখিয়াছিলেন; হরিণশাবকগণ চতুর্দিক্ হইতে তাহার আলবালের জল পান করিতেছিল; মুনিকুমারগণ কুশময় বস্ত্র নির্ম্মাণ করিবার জন্য তাহার রজ্জু নির্ম্মাণ করিয়া সেই বৃক্ষে বন্ধন করিয়া রাখিয়াছিলেন; হরিতবর্ণ গোময়দ্বারা লেপন করায় তাহার তল পবিত্র ছিল; সেই সময়েই নানাবিধ পুষ্প নিক্ষেপ করায় সেই বৃক্ষটি সুন্দর দেখাইতেছিল, আর গোলাকার বলিয়া তাহার তলের ছায়া বিস্তৃত ছিল; সেই বৃক্ষের তলে ছায়াতে উপবিষ্ট ভগবান্ মহর্ষি জাবালিকে দেখিলাম।

(ণ) সমুদ্রগণে পরিবেষ্টিত ভূমণ্ডলের ন্যায়, কুলপর্ব্বতগণে পরিবেষ্টিত সুমেরুর ন্যায়, যজ্ঞীয়বহ্নিপরিবেষ্টিত যজ্ঞের ন্যায়, দ্বাদশ সূর্য্য-পরিবেষ্টিত প্রলয়দিবসের ন্যায় এবং প্রশম-

---

(১)···কুমারিকাভিরালবালদত্ত···। (২)···পীতপিষ্ট···। (৩) পীয়মান···। (৪)···উপলিপ্ত···। (৫)···রচিত···। (৬) উগ্রতপোভিঃ। (৭) কুলপর্ব্বতৈঃ। (৮) বৈতানিক···।

कालमिव कल्पैः, समन्तान्महर्षिभिः परिवृतम्, (य) उग्र-शाप-भीतयेव कम्पित-देहया (१) प्रणयिन्येव विहित-केशग्रहया क्रुद्धयेव कृत-भ्रूभङ्गया मत्तयेवा-कुलितगमनया प्रसाधितयेव प्रकटित-तिलकया जरया गृहीतव्रतयेव भस्म-धवलया धवलीकृत-विग्रहम्, (र) आयामिनीभिः पलित-पाण्डुराभिः तपोभि-(२) र्विजित्य मुनिजनमखिलं धर्म्मपताकाभिरिवोच्छ्रिताभिः (३) अमरलोकमारोढुं,

---

कल्पैः: प्रलयैः कालम् अखण्डं समयमिव, प्रलयानां पौर्वापर्य्येऽपि 'एकसत्तया मूलतः परिवृतस्तरु' रित्यादिवत् अखण्डकालस्य यथा कथञ्चित् परिवेष्टनमुपपद्यते। महर्षिभिः समन्तात् सर्वासु दिक्षु परितः परिवेष्टितम्। अत्र मालोपमालङ्कारः।

(य) उग्रेति। उग्रशापभीतया जावालेरेव भयङ्कराभिसम्पातवस्तया स्त्रियेव, कम्पितो देहो यथा, तथान्तरे यस्यास्तया। अत्र पूर्णोपमालङ्कारः। विशेषणमात्रोपादानादिविशेष्यज्ञानस्य नियततया स्त्रियेत्यनुक्तावपि न न्यूनपदतादोषः "अयमुदयति मुद्राभञ्जनः पद्मिनीना" मित्यमरकोषटीकायां रघुनाथोदाहृतवत्। केचित्तु पर्य्याय वदन्ति, तन्मते स्त्रियेति नोपादानम्। एवमन्यत्रापि। प्रणयिन्या वल्लभयेव, विहितः केशग्रहः कुन्तलावलम्बनं यया तया, पक्वताविधानात् रतिकलहाक्रोशाच्चेति भावः। पूर्णोपमा। क्रुद्धया कोपाविष्टया स्त्रियेव, कृतौ भ्रुवोर्भङ्गः शैथिल्यं भ्रुकुटी च यया तया। पूर्णोपमा। मत्तया मद्यपानमत्तया स्त्रियेव, आकुलितं स्खलितीकृतं गमनं यया, गतिर्यस्यास्तया। पूर्णोपमा। प्रसाधितया अलङ्कृतया स्त्रियेव, प्रकटितानि प्रकाशितानि तिलकानि शरीरे कृष्णवर्णचिह्नानि, ललाटे तिलकञ्च यया तया। पूर्णोपमा। तथा गृहीतव्रतया धृतकिञ्चिन्नियमया स्त्रियेव भस्मवत्धवलया भस्मना धवलया च जरया वार्द्धक्येन। पूर्णोपमा। धवलीकृतविग्रहं शुक्लीकृतशरीरम्।

(र) आयामीति। आयामिनीभिर्दीर्घाभिः, पलितेन वार्द्धक्यजनितशौक्ल्येन पाण्डुराभिः पाण्डुवर्णाभिः।

---

পরিবেষ্টিত অখণ্ড কালের ন্যায়, মহর্ষি জাবালি অন্যান্য মুনিগণে পরিবেষ্টিত ছিলেন। (য) ভয়ানক অভিশাপের ভয়ে কোন স্ত্রীলোক যেমন নিজদেহ কম্পিত করে, জরাও তেমন তাঁহার দেহ কম্পিত করিতেছিল; প্রিয়তমা যেমন কেশগ্রহণ করে, জরাও তেমন তাঁহার কেশগ্রহণ করিয়াছিল (কেশ পাকাইয়াছিল); ক্রুদ্ধা রমণী যেমন ভ্রূভঙ্গ করে, জরাও তেমন তাঁহার ভ্রূভঙ্গ (ভ্রূযুগলকে শিথিল) করিয়াছিল; মদ্যপানে মত্তা রমণী যেমন স্খলিতভাবে গমন করে, (এখানে পা ফেলিতে ওখানে ফেলে), জরাও তেমন তাঁহার গতি স্খলিত করিয়াছিল; অলঙ্কৃতা রমণী যেমন ললাটে তিলক ধারণ করে, জরাও তেমন তাঁহার শরীরে তিলের মত কাল কাল চিহ্ন করিয়াছিল; কোন ব্রতকারিণী স্ত্রী যেমন ভস্ম মাখিয়া শ্বেতবর্ণ হয়, জরাও তেমন ভস্মের ন্যায় শ্বেতবর্ণ হইয়াছিল; সেই জরা জাবালির শরীর শ্বেতবর্ণ করিয়াছিল। (র) জাবালি, দীর্ঘ ও বার্দ্ধক্যবশতঃ পাণ্ডুবর্ণ জটা-সমূহে শোভা পাইতেছিলেন; সেইরূপ জটাসমূহ থাকায় প্রতীতি হইতেছিল যেন তপস্যা-

---

(१) उग्रशापात् कम्पितदेहया। (२) तपसा। (३) उत्थापिताभिः।

পুণ্য-রজ্জুভিরিবোপসংগৃহীতাভিঃ, অতিদূর-প্রবৃদ্ধস্য তপস্তরোঃ কুসুম-মঞ্জরীভি-রিবোদ্গতাভির্জটাভিরুপশোভমানম্, (থ) উপরচিত-ভস্ম-ত্রিপুণ্ড্রকেণ তির্য্যক্-প্রবৃত্ত-গঙ্গা-(১) স্রোতস্ত্রয়েণ [২] হিমগিরি-শিলাতলেনেব ললাটফলকেনো-পেতম্, [৩] [দ] অধোমুখ-চন্দ্র-কলাকারাভ্যামবলম্বিত-বলি-শিথিলাভ্যাং ভ্রূলতাভ্যামবষ্টভ্যমান-দৃষ্টিম্, [ধ] অনবরত-মন্ত্রাভ্যাস-[৪] বিবৃতাধর-পুটতয়া নিষ্পতদ্ভিরতিশুচিভিঃ সত্যপ্ররোহৈরিব স্বচ্ছেন্দ্রিয়-বৃত্তিভিরিব বিদ্যা-গুণৈরিব [৫] করুণারস-[৬] প্রবাহৈরিব দশন-ময়ূখৈর্ধবলিত-পুরোভাগম্, উদ্গম-

---

উচ্ছ্রিতাভিরুত্তোলিতাভিঃ ধর্ম্মপতাকাভির্ধর্ম্মসূচকধ্বজাঞ্চলৈরিব স্থিতাভিঃ। অত্র কাব্যলিঙ্গং চালঙ্কারঃ। অমরলোকং স্বর্গম্ উপসংগৃহীতাভিরায়োজিতাভিঃ পুণ্যরজ্জুভির্ধর্ম্মময়রশ্মিভিরিব স্থিতাভিঃ। অন্যোঽপি হর্ম্ম্যাদিমুচ্চদেশমারোঢ়ুং রজ্জুমায়োজয়তি। অত্রাপি কাব্যলিঙ্গং বা। অতিদূরপ্রবৃদ্ধস্য অতীববৃদ্ধিং প্রাপ্তস্য তপস এব তরুস্তস্মাৎ উদ্গতাভিরুত্থিতাভিঃ। অত্র নিরঙ্গকেবলরূপকজাতীয়ং পি অনয়োরেকাশ্রয়ানুপ্রবেশরূপঃ সঙ্করঃ।

(দ) উপেতি। উপরচিতানি ভস্মত্রিপুণ্ড্রাণি ভস্মনা তির্য্যক্ তিস্রো রেখা যস্মিন্ তেন, অতএব তির্য্যক্ প্রবৃত্তং তিরশ্চীনভাবেন প্রচলিতং গঙ্গায়াঃ স্রোতস্ত্রয়ং যত্র তাদৃশেন, হিমগিরেঃ শিলাতলেন প্রস্তরফলকেনেব ললাটফলকেন ভালদেশেন উপেতং বিশিষ্টম্। অত্র তাদৃশশিলাতলাপ্রসিদ্ধেরুৎপ্রেক্ষাঽলঙ্কারঃ।

(ধ) অধ ইতি। অধোমুখী যা চন্দ্রকলা চন্দ্ররেখা তস্যা আকার ইব আকারো যয়োস্তাভ্যাং, অবলম্বিতা শিথিলতয়া নিম্নং পতিতা যা বলিঃ শিথিলং চর্ম্ম "বলিস্তামরসক্ষেপে চ জরয়া শ্লথচর্ম্মণি" ইত্যাদি বিশ্বঃ, তয়া শিথিলাভ্যাং শৈথিল্যান্নয়নোপরি পতিতাভ্যামিত্যর্থঃ, অতএব তাভ্যাং ভ্রূলতাভ্যাম্ অবষ্টভ্যমানা আক্রম্যমাণা কথঞ্চিদবরুধ্যমানা দৃষ্টিদর্শনশক্তির্যস্য তম্। অত্রার্থী সমাসগতলুপ্তোপমালঙ্কারঃ।

(ন) অনেতি। অনবরতো যো মন্ত্রাভ্যাসো মন্ত্রজপপৌনঃপুন্যং তেন বিবৃতং ব্যাদত্তম্ অধরপুটম্ ওষ্ঠযুগলং যস্য তস্য ভাবস্তয়া হেতুনা, নিষ্পতদ্ভির্নির্গচ্ছদ্ভিঃ, অতিশুচিভিঃ পরমধবলৈঃ, সত্যপ্ররোহৈরিব সত্যবাক্যমনস্যব্যবহারযো-

---

যারা অন্যান্য মুনিগনকে পরাজিত করিয়া ধর্ম্মের পতাকা তুলিয়া দিয়াছেন, স্বর্গলোকে আরোহণ করিবার নিমিত্ত যেন ধর্ম্মময় রজ্জুসমূহ সংগ্রহ করা হইয়াছে এবং অত্যন্ত বৃদ্ধিপ্রাপ্ত তপস্যারূপতরু হইতে যেন পুষ্পমঞ্জরী প্রাদুর্ভূত হইয়াছে। (দ) জাবালি, ললাটে ভস্মদ্বারা ত্রিপুণ্ড্র অঙ্কিত করিয়াছিলেন; তাহাতে বোধ হইতেছিল যেন হিমালয়ের কোন প্রস্তরফলকে গঙ্গার তিনটি স্রোত তির্য্যগ্ভাবে (তেরচা ভাবে) প্রবাহিত হইতেছে। (ধ) অধোমুখ চন্দ্ররেখার ন্যায় ভ্রূযুগল তাঁহার দৃষ্টি রোধ করিতেছিল, কারণ, সেই ভ্রূযুগলের শিথিল চর্ম্ম আসিয়া নয়নের উপর পতিত হইয়াছিল, (ন) অবিশ্রান্ত মন্ত্র জপ করায় ওষ্ঠযুগল বিবৃত (ফাঁক করা) হইতেছিল বলিয়া মুখ হইতে নির্গত অত্যন্ত শুভ্রবর্ণ

---

(১) বিবৰ্ণা। (২)···ত্রয়েণৈব···তলেন। (৩)···পত্রেণোপেতং।

(৪)···মন্ত্রাক্ষরাভ্যাস···। (৫) করুণেব পাঠো নাস্তি। (৬) করুণারস···।

विमल-गङ्गा-प्रवाहमिव जह्नुम्, [प]अनवरत-[१]सोमोद्गारसुगन्धिनिश्वासा[२]कृष्टैर्मूर्त्तिमद्भिरिव शापाक्षरैः [३] सदामुखभाग-सन्निहितैः परिस्फुरद्भिरलिभिरविरहितम्, अतिकृशतया निम्नतर-गण्डगर्त्तम् उन्नततर[४]हनु-घोणम् आकरालतारकम् अवशीर्य्यमाण-विरल-नयन पक्ष्ममालम् उद्गत-दीर्घरोम-रुद्ध-श्रवण-विवरम् आनाभिलम्बित-कूर्च्चकलापमाननमादधानम्, [फ] अतिचपलानामिन्द्रिया-

---

णामङ्कुरैरिव, स्वच्छा निर्म्मलाः पापहीना या इन्द्रियवृत्तयः मनःप्रभृतीनामिन्द्रियाणां व्यापारास्ताभिरिव, विद्यागुणैर्ज्ञानधर्म्मैर्विनयादिभिरिव करुणारसप्रवाहैरिव दयारसस्रोतोभिरिव सर्व्वत्र निर्म्मलत्वादिति भावः, दशनमयूखैर्दन्तकिरणैः धवलितः श्वेतीकृतः पुरोभागः सम्मुखदेशो यस्य तम्, अतएव उद्गमन् दक्षिणकर्णान्निर्गच्छन् अमलो गङ्गाप्रवाहो यस्मात्तं जह्नुं तदाख्यं मुनिमिव स्थितम्। अत्र समतैरकर्म्मकत्वम् विवक्षितम्। अत्र वाक्य एव गुणोत्प्रेक्षा वाक्यार्थहेतुकं काव्यलिङ्गमुपमा च इत्थं तेषामङ्गाङ्गिभावेन सङ्करः।

पुरा किल हिमालयान्निर्गता गङ्गा यजमानस्य जह्नोर्यज्ञवाटं प्लावयन्ती क्रोधात्तेन निपीता पुनर्भगीरथप्रार्थनया कर्णरन्ध्रान्निःसारिता, इति ब्रह्मपुराणवार्त्ता, अतएव जाह्नवीत्युच्यते।

(फ) अनेति। इत्यादीन्याननविशेषणानि। अनवरतं यः सोमस्य निपीतसोमरसस्य उद्गारः तेन सुगन्धिना निश्वासेन वायुना आकृष्टैराकृष्टैः मूर्त्तिमद्भिः शापाक्षरैरभिसम्पातवर्णैरिव। परिस्फुरद्भिर्विचरद्भिः, अलिभिर्भ्रमरैः अविरहितम् अपरित्यक्तम्। अत्र गुणोत्प्रेक्षालङ्कारः। अतिकृशतया नितान्तक्षीणदेहतया निम्नतरौ अतीवगभीरौ गण्डगर्त्तौ गर्त्तीभूतौ गण्डौ यत्र तत्। उन्नततरा हनुश्चाः हनू गण्डोपरिभागद्वयं घोणा नासिका च यस्मिन् तत्। नितान्तक्षीणदेहानामीदृगाननं भवतीति द्रष्टव्यम्। आकराले भीषणतया अतीवोग्रे तारके नयनताराद्वयं यत्र तत्। अवशीर्य्यमाणा क्षीयमाणा विरला अनिविडा नयनपक्ष्ममाला लोचनलोमश्रेणी यत्र तत्। उद्गतैरुत्पन्नैः दीर्घैः रोमभिः रुद्धं आवृतं श्रवणविवरं कर्णरन्ध्रद्वयं यत्र तत्। आनाभिलम्बितो नाभिपर्य्यन्तपतितः कूर्च्चकलापः श्मश्रुराजिर्यत्र तत्। "कूर्च्चमस्त्री भ्रुवोर्मध्ये श्मश्रुकैतवयोरपि।" इति विश्वाभिधानम्। तादृशमाननं मुखम् आदधानं धारयन्तम्।

---

সত্যের অঙ্কুরের ন্যায়, নির্ম্মল ইন্দ্রিয়বৃত্তির ন্যায়, বিদ্যার গুণ বিনয়াদির ন্যায় এবং দয়ার স্রোতের ন্যায় দন্তরশ্মি তাঁহার সম্মুখ ভাগ শ্বেতবর্ণ করিয়াছিল, সুতরাং নির্ম্মল গঙ্গাপ্রবাহনিঃসারণকারী জহ্নুমুনির ন্যায় তাঁহাকে দেখা যাইতেছিল, (ফ) যজ্ঞে যে সোমরস পান করিয়াছিলেন, অবিশ্রান্ত তাহার উদ্গার (ঢেকুর) হওয়ায় সুগন্ধি নিশ্বাসবায়ুতে আকৃষ্ট হইয়া ভ্রমরগণ, অভিশাপের মূর্ত্তিমান্ অক্ষরের ন্যায় সর্ব্বদা মুখের নিকট থাকিয়া বিচরণ করিতেছিল; শরীর অতিশয় কৃশ বলিয়া গালের গর্ত্ত দুইটা গভীর এবং তাহার উপরের হাড় দু'খানা ও নাক খুব উঁচু ছিল, নয়নের তারা অত্যন্ত উগ্র এবং লোমগুলি জীর্ণ ও বিরল (খুব ফাঁক ফাঁক) ছিল, দীর্ঘ রোমরাজি উৎপন্ন হইয়া কর্ণবিবর আবৃত করিয়াছিল এবং শ্মশ্রুসমূহ (দাড়ী) নাভিপর্য্যন্ত পতিত হইয়াছিল, জাবালি এই ভাবের মুখমণ্ডল ধারণ

---

(১) অবিরত, অবিরল…। (২)…নিঃশ্বাসা…। (৩) মূর্ত্তিমদ্ভিঃ শাপাক্ষরৈরিব। (৪) সমুন্নত…।

श्वानाम (१) अन्तःसंयमन-रज्जुभिरिवाततताभिः कण्ठनाडीभिर्निरन्तराबद्ध-(२) कन्धरम्, समुन्नत-(३) विरलास्थि-पञ्जरम्, अंसालम्बित-धवल-(४) यज्ञोपवीतम्, अनिल-(५) वश-जनित-तनु-तरङ्ग-भङ्गम् उत्प्लवमान-नवमृणालमिव (६) मन्दाकिनीप्रवाहम् अकलुषमङ्गमुद्वहन्तम्, (फ) अमल-स्फटिक-शकल-घटितमक्ष-(७) वलयमत्युज्ज्वल-(८) स्थूल मुक्ताफल-ग्रथितं सरस्वती-हारमिव चलदङ्गुलि-विवर-

(फ) अतीति। अतः प्रभृत्यङ्गविशेषणानि। इन्द्रियाण्येव अश्वाः विषयान् प्रति प्राणिनामाकर्षकत्वादिति भावः, कठोपनिषद् यथा—"इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्।" तेषाम् अन्तर्मध्ये संयमनरज्जुभिरिव बन्धनरश्मिभिरिव, आततामिर्विस्तीर्णाभिः कण्ठनाडीभिर्गलदेशस्थशिराभिः निरन्तरं घनं यथा स्यात्तथा आबद्धा कन्धरा ग्रीवा यस्य तत्। अत्र निरङ्गकेवलरूपकमात्युत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः। समुन्नतं मांसादिक्षयात् समुन्नतवत् दृश्यमानं विरलम् अघनम् अस्थिपञ्जरं यस्य तत्। अंसे स्कन्धे आलम्बितं लम्बमानं धवलं यज्ञोपवीतं यस्य तत्। अतएव अनिलवशेन वायुवशेन जनितः तनूनां क्षुद्राणां तरङ्गाणाम् ऊर्मीणां भङ्गः कौटिल्यं वक्रता यस्मिन् तम्, तथा उत्प्लवमानं जलोपरि सन्तिष्ठमानं नवं मृणालं यस्मिन् तम्, मन्दाकिन्या गङ्गायाः प्रवाहमिव अकलुषं निर्म्मलम् अङ्गं देहावयवम् उद्वहन्तं धारयन्तम्। अत्र तादृशक्षुद्रतरङ्गसदृशम् अस्थिपञ्जरं, जलोपरिप्लवमाननवमृणालसदृशञ्च यज्ञोपवीतमित्युपमालङ्कारः।

(ब) अमलेति। अत्युज्ज्वल-स्थूल-मुक्ताफलग्रथितं सरस्वत्या वाग्देव्याः हारं कण्ठमालामिव, चलन्तीनां मालागुटिकाकर्षणेन चञ्चलीभूतानाम् अङ्गुलीनां विवरगतं रन्ध्रस्थितम्, अमलैः स्वच्छैः स्फटिकानां शकलैः खण्डैः घटितं निर्म्मितम् अक्षवलयं जपमालाम् आवर्त्तयन्तं क्रमेण संख्याविशेषपूरणाय भ्रमयन्तम्, अतएव अनवरतं भ्रमितं प्रवहनामकवायुना घूर्णितं तारकाचक्रं नक्षत्रचक्रं यस्मिन् तादृशम् अपरं द्वितीयं ध्रुवं तदाख्यं नक्षत्रविशेषमिव स्थितम्। यथा चिरस्थिरध्रौकमयोर्भुवनद्वयोर्मध्यस्थं नक्षत्रचक्रं प्रवहवायुना निरन्तरं घूर्णते, तथा उपविष्टेन स्थिरतरेण मुनिना वामहस्तग्रस्थापिता स्फटिकमाला जपसंख्यारक्षणाय निरन्तरमङ्गुलीभिः परिचालितेति स दृश्यम। तथा च सूर्यसिद्धान्ते—

করিতেছিলেন; (ফ) আর অত্যন্তচঞ্চল ইন্দ্রিয়রূপ অশ্বগণকে অভ্যন্তরে বন্ধন করিয়া রাখিবার রজ্জুর ন্যায় বিস্তৃত শিরাসমূহ তাঁহার গ্রীবাদেশ ঘনভাবে পরিবেষ্টন করিয়া রহিয়াছিল, পার্শ্বের বিরল অস্থিপঞ্জর উঁচু হইয়াছিল এবং শুভ্রবর্ণ একটি যজ্ঞোপবীত স্কন্ধদেশে লম্বমান ছিল; সুতরাং বায়ুবেগে ক্ষুদ্র ক্ষুদ্র তরঙ্গগুলি বক্র হইয়া গেলে এবং জলের উপরে একটি নূতন মৃণাল ভাসিতে থাকিলে গঙ্গার প্রবাহ যেরূপ দেখা যায়, জাবালি সেইরূপ অঙ্গ বহন করিতেছিলেন। (ব) অতিশয় উজ্জ্বল ও বৃহৎ মুক্তাসমূহে গ্রথিত সরস্বতীর কণ্ঠহারের ন্যায়, নির্ম্মল স্ফটিকখণ্ডনির্ম্মিত জপমালা অঙ্গুলীর অন্তরালে রাখিয়া পরিবর্ত্তিত করিতেছিলেন,

(১) ইন্দ্রিয়াণাম্। (২)…সংবদ্ধ…। (৩) উন্নত…। (৪) অবলম্বন, লম্বিযজ্ঞো…।
(৫) বায়ু। (৬)…প্লবমানমৃণালমিব। (৭) ঘটিতাক্ষ…। (৮) উজ্জ্বল।

গতমাবর্ত্তযন্তম্, অনবরত-ভ্রমিত-তারকাচক্রমপরমিব ধ্রুবম্, (ব) উন্নমতা (১) শিরা-জালকেন জরৎকল্পতরুমিব পরিণত-লতাসন্তয়েন নিরন্তর নিচিতম্, (ভ) অমলিন (২) চন্দ্রাংশুভিরিবামৃতফেনৈরিব গুণসন্তান-তন্তুভিরিব নির্ম্মিতেন মানসসরো-জল-ক্ষালন-(৩) শুচিনা দুকূল-বল্কলেন দ্বিতীয়েনেব জরাজালকেন সংচ্ছাদিতম্, (ম) আসন্নবর্ত্তিনা মন্দাকিনী-সলিল-পূর্ণেন ত্রিদণ্ডোপবিষ্টেন স্ফাটিক-(৪) কমণ্ডলুনা বিকচপুণ্ডরীক-(৫) রাশিমিব রাজহংসেনোপশোভমা-

---

'ভচক্রং ধ্রুবয়োর্বদ্ধমাক্ষিপ্তং প্রবহানিলৈঃ। পর্য্যেত্যজস্রং তন্নদ্ধা গ্রহকক্ষা যথাক্রমম্।"

অত্রোপমা পদার্থহেতুকং কাব্যলিঙ্গং দ্রব্যোৎপ্রেক্ষা চ ইত্যেতেষাং মিথো নিরপেক্ষতয়া সংসৃষ্টিরলঙ্কারঃ।

(ভ) উন্নমতেতি। পরিণতানাং পক্কানাং লতানাং সন্তয়েন সমূহেন নিরন্তরনিচিতং ঘনভাবেন ব্যাপ্তং জরৎকল্পতরুমিব পুরাতনকল্পবৃক্ষমিব, উন্নমতা উপরি ভাসমানেন শিরাণাং জালকেন সমূহেন নিরন্তর-নিচিতম্। অত্রোপমালঙ্কারঃ। মুনেঃ কল্পতরুবৎ প্রার্থিতফলদানযোগ্যতাসম্ভবায় কল্পতরুবদদানিতি ন অবিমৃষ্ট বিধেয়াংশদোষঃ।

(ম) অমলিনেতি। অমলিন নির্ম্মলেন, অতএব চন্দ্রাংশুভিরিব অমৃতফেনৈরিব তথা গুণানাং দয়াধর্ম্মাদীনাং সন্তানাঃ সমূহা এব তন্তবঃ সূত্রাণি তৈরিব নির্ম্মিতেন, মানসসরসো জলেন যৎ ক্ষালনং প্রক্ষালনং তেন, সংস্কা-পবিত্রং তেন, দ্বিতীয়েন জরাজালকেনেব বার্দ্ধক্যহেতুকবলিসমূহেনেব, দুকূলবৎ ক্ষৌমবস্ত্রবৎ বল্কলং তেন, সংচ্ছা-দিতম্ আচ্ছাদনাভিনিবিষ্টম্। অত্র পদার্থহেতুকং কাব্যলিঙ্গং, দ্বে ক্রিয়োৎপ্রেক্ষে, একা চ নিরঙ্কুশবলপদ্মসহোত্থা ক্রিয়োৎপ্রেক্ষা, লুপ্তোপমা, অপরা দ্রব্যোৎপ্রেক্ষা চ ইত্যেতেষামঙ্গাঙ্গিভাবেন সঙ্করঃ।

(য) আসন্নেতি। রাজহংসেন বিকচপুণ্ডরীকরাশিমিব প্রস্ফুটিতপদ্মসমূহমিব ত্রিদণ্ডোপবিষ্টেন ত্রিপাদিকোপরিস্থিতেন। অত্রোপমালঙ্কারঃ।

---

সুতরাং যাহাতে আবদ্ধ থাকিয়া নক্ষত্রচক্র অবিশ্রান্ত ঘূর্ণিত হইতেছে, দ্বিতীয় সেই ধ্রুবনক্ষত্রের ন্যায় জাবালিকে দেখা যাইতেছিল; (ভ) পুরাতন কল্পবৃক্ষ যেমন পরিপক্ক লতাসমূহে ঘনভাবে পরিবেষ্টিত থাকে, জাবালির শরীরও তেমন উচ্চ উচ্চ শিরাসমূহে ঘনভাবে পরিবেষ্টিত ছিল; (ম) মানসসরোবরের জলে প্রক্ষালন করায় পরম পবিত্র এবং ক্ষৌমবসনের ন্যায় নির্ম্মল একখানা বল্কল তিনি পরিধান করিয়াছিলেন, সেই বল্কলখানা যেন চন্দ্ররশ্মিদ্বারা কিংবা অমৃতের ফেনদ্বারা, অথবা দয়াধর্ম্ম প্রভৃতি গুণসমূহরূপ সূত্রদ্বারা নির্ম্মিত হইয়াছিল আর দ্বিতীয় বার্দ্ধক্যের ন্যায় সেখানা তাঁহার দেহে লাগিয়াছিল; (য) গঙ্গাজলে পরিপূর্ণ স্ফটিক নির্ম্মিত একটি কমণ্ডলু নিকটবর্ত্তী ত্রিপদিকার উপরে স্থাপিত ছিল, সুতরাং নিকটবর্ত্তী রাজহংস দ্বারা পরিশোভিত প্রস্ফুটিত পদ্মসমূহের ন্যায় জাবালিকে দেখা যাইতেছিল

---

(১) উন্নমতা। (২) অমলৈঃ। (৩)···ক্ষালন···। (৪) স্ফটিক···।
(৫)···রাশি···।

कमल-कान्ति-लज्जितस्येन्दोः कलङ्कमिवापनयन्तो दूरप्रसारित-ध्वज-भुजाः (१) प्रासादा लक्ष्यन्ते । (ष)

यस्याञ्च सौध-शिखर-शायिनीनां (२) पश्यन् मुखानि पुरसुन्दरीणां मदन-परवश इव पतितः प्रतिमाच्छलेन लुठति बहल-चन्दन-जल-सेक-शिशिरेषु मणि-कुट्टिमेषु (३) मृगलाञ्छनः । (स)

यस्याञ्च निशावसाने (४) प्रबुद्धस्य तारतरमपि पठतः पञ्जरभाजः शुकसारिकासमूहस्याभिभूत-गृहसारस स्वरामृतेन (५) विस्तारिणा विलासिनी-भूषण-रवेणाविभाव्यमानाः (६) व्यर्थीभवन्ति प्रभात-मङ्गलगीतयः । (ह)

---

प्रासादा राजभवनानि, पवनावलोलैर्वायुचालितैः अतएवोल्लसद्भिरुल्लसद्भिः, दुकूलपल्लवैः विस्तृतपताकापटैः, मालवीनां मालवदेशीयरमणीनां मुखकमलकान्तिभिर्लज्जितस्य सकलङ्कत्वात् सलज्जीकृतस्य इन्दोश्चन्द्रस्य कलङ्कं लज्जाकारणीभूतं लाञ्छनं कालिमानञ्च अपनयन्तः प्रोञ्छन्त इव लक्ष्यन्ते । सुहृदा सुहृदन्तरस्य मुखकालिमप्रोञ्छनवदिति भावः । अतएवात्र कार्य्येण प्रासादेषु सुहृद्व्यवहारसमारोपात् समासोक्तिरलङ्कारः क्रियोत्प्रेक्षया सङ्कीर्य्यते । एतेन मालवीनां महासौन्दर्य्यं प्रासादानामत्युन्नतत्वं व्यज्यते ।

(स) यस्यामिति । मृगलाञ्छनः शशधरः, सौधशिखरशायिनीनां राजसदनोपरिस्थायिनीनां पुरसुन्दरीणां नगररमणीनां मुखानि पश्यन् मदनपरवशः कामायत्त इव सन्, बहलानां प्रचुराणां चन्दनजलानां सेकेन शिशिरेषु शीतलेषु मणिकुट्टिमेषु तासां पुरसुन्दरीणामाश्रयभूतेषु मणिमयच्छदिःसु प्रतिमाच्छलेन प्रतिबिम्बव्याजेन पतितो लुठति, तासामनुनयार्थमिति भावः । अत्रापि कार्य्येण चन्द्रे विटकामुकव्यवहारसमारोपात् समासोक्तिरलङ्कारो गुणोत्प्रेक्षापह्नुतिभ्यां सङ्कीर्य्यते ।

[ह] यस्यामिति । प्रबुद्धस्य जागरितस्य । तारतरम् उच्चैस्तरं यथा स्यात्तथा । पञ्जरभाजः पञ्जरमध्यवर्त्तिनः शुकसारिकासमूहस्य प्रभातमङ्गलगीतयः, अभिभूतम् उच्चैस्तया तिरस्कृतं गृहसारसानां गृहस्थितपक्षिविशेषाणां स्वरामृतम् अमृतवन्मधुरध्वनिर्येन तेन, विस्तारिणा महता विलासिनीनां स्त्रीणां भूषणरवेण अल-

---

বায়ুভরে কম্পিত হইয়া উত্থিত পতাকাবসনদ্বারা, মালবদেশীয় রমণীগণের মুখপদ্মের সৌন্দর্য্য দেখিয়া লজ্জিত চন্দ্রের কলঙ্ক যেন মুছিয়া দিতেছে—এইরূপ প্রত্যেক রাত্রিতে দেখা যায়।

(স) এবং যে উজ্জয়িনীতে পুররমণীগণ অট্টালিকার উপরে আরোহণ করিলে তাহাদের মুখ দর্শন করিয়া কামাতুর হইয়াই যেন চন্দ্র, প্রচুর চন্দনজলসেকে সুশীতল মণিময় ছাদে প্রতিবিম্বচ্ছলে পতিত হইয়া লুণ্ঠিত হইতে থাকে।

(হ) আর যে উজ্জয়িনীতে পঞ্জরস্থিত শুক ও সারিকাগণ রাত্রিশেষে জাগরিত হইয়া উচ্চৈঃস্বরে পাঠ করিতে থাকে আর প্রভাতকালের মঙ্গলগান করিতে থাকে; কিন্তু গৃহস্থিত

---

[१] उर्द्धध्वजभुजाः । [२] सौधशिखरोत्सङ्गशायिनीनाम् । [३) क्वचिदयं पाठो नास्ति ।
(४) निशावसान…(५)…समूहस्य रवेणाभिभूता गृहसारसविरुतेन । (६) अभिभाव्यमानाः ।

यस्याञ्चानिवृत्तिः (१) मणिदीपानाम्, [२] तरलता (३) हारलतानाम्, अस्थितिः सङ्गीत-मुरज-ध्वनीनाम्, द्वन्द्ववियोगश्चक्रनाम्नाम्, (४) वर्णपरीक्षा कनकानाम्, अस्थिरत्वं ध्वजानाम्, मित्रद्वेषः कुमुदानाम्, कोषगुप्तिरसीनाम्। (च)

किं बहुना, यस्यां (५) सुरासुर-चूड़ा-मणि-मरीचि-चय-चुम्बित-(६) चरण-नख-मयूखो निशित-त्रिशूल-दारितान्धकमहासुरः, गौरी-नूपुर-कोटि-घृष्ट-शिखर-

---

हारशब्देन, आच्छाद्यमाना विशेषेणाप्रथमाणाः सम्मिलितत्वेन पृथक्तया अज्ञायमानाः सत्यः, अतएव व्यर्थीभवन्ति। अत्र तादृशभूषणरवेण तद्गीतानां गोपनान्मीलितमलङ्कारः पदार्थहेतुककाव्यलिङ्गेन सङ्कीर्य्यते।

(च) यस्यामिति। मणिदीपानाम् अनिवृत्तिः स्वभावतो दीप्तिमत्त्वात् अनिर्वाणता, न तु लोकानामनिवृत्तिः विषयादनुपरमः सर्वेषामेव वार्द्धक्ये तदुदयात्। हारलतानां मुक्तामालानां तरलता चञ्चलता, न तु नरनारीणां तरलता, विशेषशिक्षाशालितया परमगाम्भीर्य्यवत्त्वात्। सङ्गीतमुरजध्वनीनां सङ्गीतमृदङ्गयोः शब्दानाम् अस्थितिः तृतीयक्षणे अविद्यमानता, न तु लोकानामस्थितिः मर्य्यादाहीनता सर्वेषामेव तद्वत्त्वात्। चक्रनाम्नां चक्रवाकपक्षिणां द्वन्द्ववियोगः मिथुनविरहः रात्रौ दम्पतिविच्छेद इति यावत्, न तु जनानां मध्ये दम्पतिविच्छेदः सम्भ्रमतया विदेशगमनाभावात् तादृशधर्म्मवत्तया च विभिन्नकाले मृत्युविरहात्। कनकानां स्वर्णानां वर्णस्य रूपस्य परीक्षा तप्ततापादिना सदोषनिर्दोषताज्ञानम्, न तु ब्राह्मणादीनां वर्णपरीक्षा जिज्ञासादिना विशिष्टजातिज्ञानम्, साङ्कर्य्यदोषाभावात्। ध्वजानां पताकानाम् अस्थिरत्वं वायुवेगेन चञ्चलत्वम्, न तु जनानामस्थिरत्वम् अधीरत्वं तादृशोपद्रवाभावात्। कुमुदानां कैरवाणां मित्रद्वेषः सङ्कोचकारकत्वेन सूर्य्यं प्रति विद्वेषः, न तु जनानां मित्रद्वेषः सुहृत्सु विद्वेषः गुरुतरपापहेतुत्वात्। असीनां तरवारीणां कोषेषु चर्म्ममयावरणेषु गुप्तिः रक्षणम्, न तु धनानां कोषेषु भाण्डारेषु गुप्तिर्गोपनम् चौराद्यभावात्। सर्वत्र वर्त्तत इति शेषः। अत्र प्रत्येकवाक्ये यथासम्भवं श्लेषसङ्कीर्णा आर्थी परिसंख्यालङ्कारः।

(क) किमिति। बहुना जल्पितेन किमित्यर्थः। सुरासुराणां प्रणमतामिति भावः, चूड़ामणिमरीचिचयैः मस्तकस्थरत्नरश्मिसमूहैः चुम्बिताः संस्पृष्टाः चरणनखानां मयूखाः किरणा यस्य सः। निशितेन

---

সারসপক্ষিগণের মধুরধ্বনি নীচে ফেলিয়া রমণীগণের অলঙ্কারের শব্দ বিস্তৃতভাবে হইতে থাকে, তাহাতে সেই মঙ্গলগীত পৃথক্ ভাবে শুনিতে না পাওয়ায় নিষ্ফল হইয়া যায়।

(চ) এবং যে উজ্জয়িনীনগরে মণিময় প্রদীপেরই অনিবৃত্তি, মুক্তামালারই চঞ্চলতা, সঙ্গীত ও মৃদঙ্গের শব্দেরই স্থিতিহীনতা, চক্রবাকপক্ষিগণের মধ্যেই দম্পতিবিচ্ছেদ, সুবর্ণেরই বর্ণপরীক্ষা, পতাকারই অস্থিরতা, কুমুদগণেরই মিত্রের (সূর্য্যের) প্রতি বিদ্বেষ এবং তরবারিসমূহেরই কোষমধ্যে স্থাপন হইয়া থাকে।

(ক) অধিক বলিবার প্রয়োজন নাই; নমস্কার করিবার সময়ে দেবদানবগণের

---

(१) अनिवृत्तिः। (२) मणिप्रदीपानाम्। (३) अनवस्थता। (४) चक्रनाम्नः, चक्रवाकनाम्नाम्।
(५) यस्याम्। (६) मरीचिचुम्बित…।

চন্দ্র-শকল, (১) ত্রিপুরভস্মরজঃকৃতাঙ্গরাগঃ, মকরধ্বজধ্বংসবিধুরয়া রত্যা প্রসাদয়ন্ত্যা প্রসারিতকরযুগল(২) বিগলিতবলয়নিকরার্চ্চিতচরণঃ, প্রলয়ানলশিখাকলাপকপিলজটাভারভ্রান্তসুরসিন্ধুঃ, (৩) অন্ধকারিঃ, [৪] ভগবান্, উৎসৃষ্টকৈলাসবাসপ্রীতির্মহাকালাভিধানঃ স্বয়ং প্রতিবসতি (৫)। (ক)

---

ত্রিশূলেন দারিতঃ অন্ধকোঽন্ধকনামা মহাসুরো যেন সঃ। গৌর্য্যাঃ প্রণয়কুপিতায়াঃ পার্ব্বত্যাঃ নূপুরকোট্যা পদাঘাতকালে মঞ্জীরাগ্রদেশেন, ঘৃষ্টং বিলিখিতং শেখরঃ শিরোভূষণভূতং চন্দ্রশকলং চন্দ্রখণ্ডং যস্য সঃ। অবানেন বিশেষণেন ভগবতো ন কিমপি মাহাত্ম্যং প্রকাশিতমিতি "সদাশিবং নৌমি পিনাকপাণি"মিতি দর্পণোদাহৃতবদধিকপদতাদোষঃ, স চৈতৎপরিত্যাগেনৈব সমাধেয়ঃ। ত্রিপুরাসুরস্য ভস্মনঃ স্বয়ং কৃতস্যেতি ভাবঃ, রজসা রেণুনা কৃতঃ অঙ্গরাগঃ অঙ্গলেপনং যেন সঃ। মকরধ্বজধ্বংসেন কামদেববিনাশেন বিধুরয়া তদীয়শোকেন বিহ্বলয়া রত্যা কামপত্ন্যা প্রসাদয়ন্ত্যা অনুগ্রহলাভাশয়া তমেব প্রসন্নীকুর্ব্বত্যা সত্যা, প্রসারিতাৎ চরণগ্রহণায় বিস্তারিতাৎ করযুগলাৎ বিগলিতেন নিপতিতেন বলয়নিকরেণ গোলাকারাভরণসমূহেন অর্চ্চিতৌ চরণৌ যস্য সঃ। তথা প্রলয়ানলস্য প্রলয়কালীনবহ্নেঃ শিখাকলাপবৎ কপিলে পিঙ্গলবর্ণে জটাভারে জটাসমূহে ভ্রান্তা পতিত্বা ঘূর্ণিতা সুরসিন্ধুর্গঙ্গা যস্য সঃ। স্বয়ং ভগবান্ অন্ধকারির্মহাদেবঃ, উৎসৃষ্টা ত্যক্তা কৈলাসস্য প্রীতিঃ প্রমোদো যেন সঃ, তথা মহাকাল ইত্যভিধানং নাম যস্য তাদৃশশ্চ সন্ যস্যামুজ্জয়িন্যাং প্রতিবসতি। তথা চ কথাসরিৎসাগরে—

"যস্যাং বসতি বিশ্বেশো মহাকালবপুঃ স্বয়ম্। শিথিলীকৃতকৈলাস-নিবাসব্যসনো হরঃ।"

এতেন কৈলাসাদপ্যুৎকৃষ্টত্বামুজ্জয়িনীতি ধ্বনিতম্। তথাত্র সুরাসুরেত্যাদিনৈকেনৈব বিশেষণেনাভিপ্রেতমাহাত্ম্যপ্রকাশনির্ব্বাহে সত্যপি তদর্থং এব বহুতরবিশেষণান্তরোপন্যাসাৎ সমুচ্চয়োঽলঙ্কারঃ, প্রলয়ানলেত্যাদৌ চোপমা চ, অনয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ।

---

চূড়ামণির কিরণসমূহে যাঁহার চরণনখের রশ্মিসমূহ সংস্পৃষ্ট হইয়া থাকে; যিনি নিশিত ত্রিশূলদ্বারা মহাবলবান্ অন্ধকাসুরকে বিদীর্ণ করিয়াছিলেন; প্রণয়কুপিতা পার্ব্বতী যখন মস্তকে পদাঘাত করেন, তখন তাঁহার চরণনূপুরের অগ্রভাগদ্বারা যাঁহার মস্তকালঙ্কার চন্দ্রখণ্ড, ঘর্ষণ প্রাপ্ত হইয়া থাকে; যিনি ত্রিপুরাসুরকে ভস্ম করিয়া সেই ভস্মরেণুদ্বারা অঙ্গরাগ করিয়াছিলেন; কামদেবকে দগ্ধ করিলে পর তাঁহার শোকে বিহ্বল হইয়া রতি, পুনরায় অনুগ্রহলাভের প্রত্যাশায় প্রসন্ন করিতে আরম্ভ করিয়া চরণ ধারণ করিবার নিমিত্ত করযুগল প্রসারিত করিলে তাহা হইতে বলয়সমূহ (চুড়ীগুলি) নিপতিত হইয়া যাঁহার চরণযুগলের অর্চ্চনা করিয়াছিল, এবং প্রলয়কালের অগ্নির শিখাসমূহের ন্যায় পিঙ্গলবর্ণ যাঁহার জটাসমূহে নিপতিত হইয়া গঙ্গা বহুকাল ভ্রমণ করিয়াছিলেন; স্বয়ং সেই ভগবান্

---

(১) চন্দ্রশকলশেখরঃ। (২)---করযুগ...। (৩) অমরসিন্ধুঃ। (৪) অন্ধকারাতিঃ। (৫) বসতি।

तस्याञ्चैवंविधायां नगर्य्यां नल-(१) नहुष-ययाति-धुन्धुमार-भरत-भगीरथ-दशरथप्रतिमः, (२) भुजबलार्ज्जित-(३) भूमण्डलः, फलित-शक्तित्रयः, मतिमान् उत्साह सम्पन्नः, नीतिशास्त्राखिन्न-बुद्धिः, अधीत-धर्म्मशास्त्रः, तृतीय इव तेजसा कान्त्या च सूर्य्याचन्द्रमसोः, अनेक-सप्ततन्तु-पूत-मूर्त्तिः, उपशमित-सकल-जगदुपप्लवः, (ख) विहाय कमल-वनानि, अविगणय्य (४) नारायण-वक्षःस्थल-वसति-सुखम्, उत्फुल्लारविन्दहस्तया शूर-समागम-व्यसनिन्या (५) निर्व्याजमालिङ्गितो

---

अहो यदीयमुज्जयिनी वैद्युतशकट जलयन्त्रादिविविधाश्चर्य्यशालिन्यभविष्यत् तदेदानीन्तनीं कलिकातानगरीमत्यशयिष्यत्।

(ख) तस्यामिति। तस्याञ्चैवंविधायां नगर्य्यां राजा तारापीड़ो नामाभूदिति वक्ष्यमाणक्रियायान्वयः। अत्र प्रथमान्तपदानि तारापीड़ इत्यस्य विशेषणानि। धुन्धुमारः कुवलाश्वः। नलादयः प्रतिमा उपमा यस्य सः। भुजबलेन अर्ज्जितम् आयत्तीकृतं भूमण्डलं येन सः। फलितं सफलं जातं शक्तित्रयं प्रभावोत्साह-मन्त्रजातशक्तित्रयं यस्य सः, न पुण्यवशाददृष्टवशाच्चेति भावः। मतिमान् बुद्धिमान्। नीतिशास्त्रेषु अखिन्ना अनवरतालोचनयाप्यश्रान्ता बुद्धिर्यस्य सः। सूर्य्य इव तेजस्वी चन्द्रमा इव च कान्तिमानित्यर्थः। तृतीय इवेति द्रव्योत्प्रेक्षालङ्कारः। सप्तभिः सप्तभिः सप्तप्रकारच्छन्दोयुक्तमन्त्रैस्तन्यत इति सप्ततन्तुर्यज्ञः पृषोदरादित्वात् साधुः। अनेकैः सप्ततन्तुभिः पूता पवित्रा मूर्त्तिः शरीरं यस्य सः। उपशमिताः स्वचेष्टादैवार्च्चनादिना निवारिताः सकला जगताम् उपप्लवा विपदो येन सः।

(ग) विहायेति। उत्फुल्लं विकसितम् अरविन्दं पद्मं हस्ते यस्यास्तया, एतेन विलासलालसयाप्यव-ष्टम्भानुरागिण्येति ध्वन्यते। शूरसमागमे वीरपुरुषसंसर्गे व्यसनिन्या आसक्तिमत्या, लक्ष्म्या राजश्रिया निर्व्याज-

---

মহাদেব, কৈলাসধামে বাস করার আমোদ পরিত্যাগ করিয়া যে উজ্জয়িনীতে মহাকাল নাম ধারণ করিয়া বাস করিতেছেন।

(খ) এইরূপ সেই উজ্জয়িনীতে নল, নহুষ, যযাতি, ধুন্ধুমার, ভরত, ভগীরথ ও দশরথের তুল্য, বুদ্ধিমান্ ও উৎসাহশীল 'তারাপীড়' নামে এক রাজা ছিলেন; তিনি বাহুবলে সমগ্র ভূমণ্ডল আয়ত্ত করিয়াছিলেন; তাঁহার প্রভুশক্তি, উৎসাহশক্তি ও মন্ত্রশক্তি সর্ব্বত্রই সফল হইত; সর্ব্বদা নীতিশাস্ত্র পর্য্যালোচনা করাতেও তাঁহার বুদ্ধি ক্লান্ত হইত না; তিনি সমগ্র ধর্ম্মশাস্ত্র অধ্যয়ন করিয়াছিলেন এবং তেজ ও সৌন্দর্য্যে সূর্য্য ও চন্দ্রের যেন তৃতীয় ব্যক্তি ছিলেন; বহুতর যজ্ঞ অনুষ্ঠান করায় তাঁহার দেহ পবিত্র হইয়াছিল; তিনি নানাবিধ উপায়ে জগতের সমস্ত উপদ্রব নিবারণ করিয়াছিলেন; (গ) প্রস্ফুটিত-পদ্ম-হস্তা এবং বীর-পুরুষের সংসর্গে অনুরাগিণী স্বয়ং রাজলক্ষ্মী, পদ্মবন পরিত্যাগ করিয়া এবং নারায়ণের বক্ষঃ-

---

(१) ख ग नल…। (२)…दशरथ-जनमेजयार्ज्जुनप्रतिमः। (३)…उपार्ज्जित…।
(४) अवगणय्य। (५) एकव्यसनिन्या, शूरसमागमव्यसनिन्या।

लक्ष्म्या, (ग) महामुनिजन-संसेवितस्य मधुसूदन-चरण इव सुर-सरित्-प्रवाहस्य प्रभवः सत्यस्य, (घ) शिशिरस्यापि रिपुजन-सन्तापकारिणः स्थिरस्याप्यविरतं (१) भ्रमतः, निर्म्मलस्यापि मलिनीकृतारातिवनितामुखकमल-द्युतेः, अतिधवल-स्यापि सर्वजनरागकारिणः, सुधासूतेरिव जलनिधि-(२) रुद्भवो यशसः, (ङ)

---

सकपटमालिङ्गितः। एतेन कमलवनादपि नारायणादपि च सुखवसतिस्थानं राजेति व्यतिरेकालङ्कारो व्यज्यत इति वस्तुनालङ्कारध्वनिः, तथा राज्ञोऽपि नितान्तविलासित्वं महावीरत्वञ्च ध्वन्यत इति वस्तुना वस्तुध्वनिश्च।

(घ) महेति। महामुनिजनैः संसेवितस्य व्यवहारेण धर्म्मार्जनार्थं अवगाहनेन धर्म्मार्जनार्थञ्च सततमाश्रितस्य, सुरसरित्प्रवाहस्य गङ्गास्रोतसः, मधुसूदनचरण इव विष्णोः पाद इव, सत्यस्य सत्यव्यवहारस्य, प्रभवत्यस्मादिति प्रभव उत्पत्तिस्थानम्। अत्र पूर्णोपमालङ्कारः।

(ङ) शिशिरस्येति। शिशिरस्यापि शीतलस्यापि, रिपुजनस्य शत्रुलोकस्य विरहिलोकस्य च सन्तापकारिण इति विरोधः, ईर्ष्यया कामोद्दीपनया च चित्तक्षोभकरस्येति तत्समाधानम्। स्थिरस्य निश्चलस्यापि अविरतं भ्रमत इति विरोधः, स्थिरस्य चिरस्थायिनः नित्याकाशस्थायिनश्च, अविरतं भ्रमतः लोकपरम्परया गीयमानत्वात् सर्वासु दिक्षु गच्छतः, सर्वदा राशिचक्रे घूर्णमानस्य चेति तत्परिहारः। निर्म्मलस्येत्यादौ विरोधः स्फुट एव, समाधानन्तु विद्वेषान्मदनवेदनावशाच्च मलिनीकृता अरातिवनितानां शत्रुस्त्रीणां विरहिस्त्रीणाञ्च मुखकमलद्युतिर्येनेति। अतिधवलस्यापि सर्वेषु जनेषु रागकारिणो रक्तिमविधायिन इति विरोधः, सर्वेषां जनानां रागकारिण आत्मन्यनुरागविधायिन इति समाधानम्। एवम्भूतस्य सुधासूतेः सुधाकरस्य चन्द्रस्य जलनिधिः समुद्र इव, एवम्भूतस्य यशसः, उद्भवत्यस्मादित्युद्भव आकरः। अत्र विरोधालङ्कारचतुष्टयसङ्कीर्णा पूर्णोपमालङ्कारः।

---

স্থলে বাস করার সুখ গণনা না করিয়া অকপটে তাঁহাকে আলিঙ্গন করিয়াছিলেন; (ঘ) বিষ্ণুর চরণ যেমন মহর্ষিসেবিত গঙ্গাপ্রবাহের উৎপত্তিস্থান, তিনিও তেমন মহর্ষিসেবিত সত্যের উৎপত্তিস্থান ছিলেন; (ঙ) সমুদ্র যেমন চন্দ্রের আকর, তিনিও তেমন যশের আকর ছিলেন; চন্দ্র যেমন শীতল হইয়া বিরহিগণের সন্তাপ জন্মান (কামোদ্দীপনানিবন্ধন চিত্তের ক্ষোভ জন্মান,) তাঁহার সেই যশও তেমন শীতল হইয়াও শত্রুদিগের সন্তাপ জন্মাইত; (ঈর্ষ্যাবশতঃ চিত্তের ক্ষোভ জন্মাইত;) চন্দ্র যেমন স্থির হইয়াও সর্ব্বদা ভ্রমণ করেন, (আকাশে স্থায়ী হইয়া রাশিচক্রের সঙ্গে সঙ্গে ভ্রমণ করেন,) তাঁহার যশও তেমন স্থির হইয়াও সর্ব্বদা ভ্রমণ করিত; (চিরস্থায়ী হইয়া লোকমুখে চতুর্দ্দিকে চলিয়া হইত;) চন্দ্র যেমন নির্ম্মল হইয়াও বিরহিণী রমণীগণের বদনকমলের কান্তি মলিন করেন, (মদনবেদনা জন্মাইয়া মলিন করেন,) তাঁহার যশও তেমন নির্ম্মল হইয়াও শত্রুস্ত্রীদিগের মুখকমলের শোভা মলিন করিত; (বিদ্বেষবশতঃ মলিন করিত;) চন্দ্র যেমন অতিশয় ধবল হইয়াও সকল লোকের রক্তিমা

---

(१) नित्यम्। (२) सागरः।

पातालवदाश्रितो (१) निजपक्षक्षतिभीतैः (२) क्षितिभृतां कुलैः, (३) (च) ग्रह-गण इव बुधानुगतः, (छ) मकरध्वज इवोत्सन्न-विग्रहः, (ज) दशरथ इव सुमित्रो-पेतः (झ) पशुपतिरिव महासेनानुयातः, (ञ) भुजगराज इव क्षमाभरगुरुः, (ट) नर्म्मदा-प्रवाह इव महावंशप्रभवः, (ठ) अवतार इव धर्म्मस्य, प्रति-

---

(च) पातालवदिति। निजपक्षाणाम् आत्मीयजनानां स्वकीयपतत्राणाञ्च या क्षतिः विरुद्धतारापीड़तो हानिः इन्द्रेण छेदनञ्च ततो भीतैः क्षितिभृतां राज्ञां पर्वतानाञ्च कुलैः समूहैः पातालमिव पातालवत् आश्रितः तारापीड़ः। इन्द्रकर्तृकपक्षच्छेदभीतैः पर्वतगणैर्यथा पातालमाश्रितं तथा विरुद्धतारापीड़कर्तृकात्मगण-हानिभीतैः राजगणैः स आश्रित इति सरलार्थः। पूर्णोपमा।

(छ) ग्रहेति। ग्रहगण इव, बुधैः पण्डितैः, बुधेन सौम्येन चानुगतः। पूर्णोपमा।

(ज) मकरेति। मकरध्वजः कामदेव इव उत्सन्नो विनष्टः विग्रहो युद्धं शरीरञ्च यस्य सः, एतेन नीतिकौशलादन्यत्र हरनयनाग्निना दाहादिति भावः। पूर्णोपमा।

(झ) दशेति। दशरथो राजेव, सुमित्रैः उत्तमसुहृद्भिः, सुमित्रया लक्ष्मणजनन्या च उपेतो युक्तः। पूर्णोपमा।

(ञ) पश्विति। पशुपतिः शिव इव, महासेनया विशालसैन्येन, कार्त्तिकेयेन च अनुयातः अनुगतः। पूर्णोपमा।

(ट) भुजगेति। भुजगराजः अनन्तनाग इव, क्षमाभरेण क्षमागुणबाहुल्येन, धारणात् पृथिवीभारेण च गुरुर्गौरवान्वितः भारवांश्च। पूर्णोपमा।

(ठ) नर्म्मदेति। नर्म्मदाया नद्याः प्रवाह इव, महावंशात् प्रशस्तकुलात् विशालवेणुनिकरमध्याच्च प्रभवति उत्पद्यत इति सः। पूर्णोपमा। मेखलाचलस्थवेणुनिकरमध्यान्नर्म्मदाया उत्पत्तिरिति प्रवादः।

---

(অনুরাগ) জন্মাইয়া থাকেন, তাঁহার যশও তেমন অতিশয় ধবল হইয়াও সকল লোকের রক্তিমা (অনুরাগ) জন্মাইত; (চ) পর্ব্বতগণ যেমন ইন্দ্রকর্তৃক আপনাদের পক্ষচ্ছেদনের ভয়ে পাতাল আশ্রয় করিয়াছিল, অন্যান্য রাজগণও তেমন নিজেদের ক্ষতির ভয়ে তাড়াপীড়কে আশ্রয় করিয়াছিলেন; (ছ) বুধ যেমন অন্যান্য গ্রহগণের অনুগমন করেন, পণ্ডিতগণও তেমন তারাপীড়ের অনুগমন করিতেন; (জ) কামদেবের যেমন দেহ নাই, তারাপীড়েরও তেমন যুদ্ধ ছিল না; (ঝ) রাজা দশরথ যেমন সুমিত্রানামে ভার্য্যার সহিত সম্মিলিত ছিলেন, তারাপীড়ও তেমন উত্তম সুহৃদ্‌গণের সহিত সম্মিলিত ছিলেন; (ঞ) কার্ত্তিক যেমন শিবের অনুগমন করেন, বিশাল সৈন্যমণ্ডলীও তেমন তারাপীড়ের অনুগমন করিত; (ট) নাগরাজ অনন্ত যেমন পৃথিবী ধারণ করায় ভারবান্, তারাপীড়ও তেমন অতিশয় ক্ষমাগুণে গৌরব-সম্পন্ন ছিলেন; (ঠ) নর্ম্মদানদীর প্রবাহ যেমন বিশাল বংশসমূহ (বাঁশঝাড়) হইতে উৎপন্ন

---

(१) पाताल इव। (२) ध्यानमानैः। (३) क्षितिभृत्कुटिलैः।

নিধিরিব পুরুষোত্তমস্য, পরিহৃত-[১] প্রজাপীড়ো রাজা তারাপীড়ো নামা-ভূত্ [২]। [ড]

যস্তমঃ-প্রসর-মলিনবপুষা পাপবহুলেন কলিকালেন চালিতমামূলতো ধর্ম্মং দশাননেনেব কৈলাসমিব [৩) পশুপতিরিবাষ্টভ্য পুনরপি স্থিরীচকার [৪]। [ঢ]

যঞ্চ রতি-প্রলাপ-জনিত-(৫) দয়ার্দ্র-হৃদয়-হর-নির্ম্মিতমপরমিব (৬) মকর কেতুমমংস্ত লোকঃ। (ণ)

(ড) অবেতি। ধর্ম্মস্য ধর্ম্মরাজস্য অবতার ইব, রূপান্তরেণোৎপন্নঃ অংশ ইব, সর্ব্বদা ন্যায়সত্যানুসরণাদিত্যাশয়ঃ। পুরুষোত্তমস্য নারায়ণস্য প্রতিনিধিরিব মাহাত্ম্যাৎ কার্য্যভারপ্রাপ্ত ইব, সর্ব্বদা জগৎপরিপালনপরায়ণত্বাদিতি ভাবঃ। উভয়ত্রাপি জাত্যুৎপ্রেক্ষালঙ্কারঃ। পরিহৃতা পরিত্যক্তা প্রজানাং পীড়া দুর্ব্বহকরভারার্পণাদিজনিতযাতনা যেন সঃ।

(ঢ) য ইতি। পশুপতির্মহাদেব ইব যস্তারাপীড়ঃ, দশাননেন রাবণেনেব, তমসাং তমোগুণানাং প্রসরেণ বাহুল্যেন মলিনং বপুর্যস্য তেন, তথা পাপমেব বহুলম্ অতিরিক্তং যস্মিন্ তেন, কলিকালেন আমূলতঃ মূলাদবধি চালিতং স্বস্থানাদ্‌ভ্রংশয়িতুমুপক্রান্তম্, কৈলাসং পর্ব্বতমিব ধর্ম্মম্, অবষ্টভ্য সর্ব্বতঃ শ্রৌতস্মার্ত্তবিধানপ্রবর্ত্তনেন পাদাঙ্গুষ্ঠনর্ম্মণে চ আশ্রিত্য, পুনরপি স্থিরীচকার নিশ্চলং কৃতবান্। অত্র তিসৃণামেবোপমানামঙ্গাঙ্গিভাবেন সঙ্করঃ। পুরা কিল পরমশৈবেন দশাননেন শিবার্চ্চনায় প্রতিদিনং লঙ্কাতঃ কৈলাসাগমনপরিশ্রমং পরিজিহীর্ষুণা নমচলমুৎপাট্য লঙ্কায়াং নীয়মানং ভগবান্ মহেশ্বরশ্চরণাঙ্গুষ্ঠভরেণ পুনরপি স্বস্থানে স্থাপয়ামাসেতি রামায়ণবার্ত্তা।

(ণ) যমিতি। রতেঃ কামভার্য্যায়াঃ প্রলাপেন কামদেববিনাশজনিতশোকাৎ বিলাপেন, জনিতা যা দয়া তয়া আর্দ্রং হৃদয়ং যস্য তেন হরেণ শিবেন নির্ম্মিতম্ অপরং মকরকেতুং কামদেবমিব যং তারাপীড়ম্ অমংস্ত মনসি চকার। অত্র দ্রব্যোৎপ্রেক্ষালঙ্কারঃ। তেন চাস্য পরমসৌন্দর্য্যং ব্যজ্যত ইত্যলঙ্কারেণ বস্তুধ্বনিঃ।

হইয়াছে, তারাপীড়ও তেমন উচ্চ কুল হইতে উৎপন্ন হইয়াছিলেন; (ড) আর তিনি ধর্ম্মের যেন অবতার এবং নারায়ণের যেন প্রতিনিধিস্বরূপ ছিলেন এবং প্রজাগণের কোনরূপ পীড়ন করিতেন না।

(ঢ) রাবণ কৈলাসপর্ব্বতকে মূল হইতে সঞ্চালিত করিলে মহাদেব চরণাঙ্গুষ্ঠের ভরে যেমন পুনরায় তাহাকে স্থির করিয়াছিলেন, সেইরূপ তমোগুণের বাহুল্যনিবন্ধন কৃষ্ণবর্ণ এবং অধিকপরিমাণে পাপশালী কলিকাল ধর্ম্মকে মূল হইতে সঞ্চালিত করিলে তারাপীড় শ্রুতি ও স্মৃতির বিধান প্রবর্ত্তিত করিয়া সেই ধর্ম্মকে পুনরায় স্থির করিয়াছিলেন।

(ণ) এবং মহাদেব রতির বিলাপে দয়ার্দ্রচিত্ত হইয়া আর একটি কামদেব যেন নির্ম্মাণ করিয়া রাখিয়াছেন বলিয়া যে তারাপীড়কে সকলে মনে করিত।

(১) পরিহৃত…। (২) তারাপীড়োঽভূত্, তারাপীড়াঽভবত্। (৩) কৈলাসম্। (৪) অর্দ্ধ (৫)…উপজনিত। (৬) অপরং।

যস্য জলনিধি-তরঙ্গ-ধৌত-মেখলাৎ পত্রান্তর-(১) বিচারি তারাগণ-দ্বিগুণিত-তট-তরু-কুসুম-প্রকরাৎ উদ্যদিন্দু-বিম্ব বিগলদমৃত-বিন্দ্বাসারার্দ্র-(২) চন্দনাৎ অশিশিরকর-রথ তুরঙ্গ-(৩) খুর-শিখরোল্লেখ খণ্ডিতোল্লসল্লবঙ্গ-(৪) পল্লবাৎ ঐরাবত-কর-(৫) লূন-শল্লকী-কিসলয়াৎ (৬) আ শৈলাদুদয়নাম্নঃ, (ত) কপিবল-(৭) বিলুপ্ত-বিরল-লবলীলতা-ফলাৎ উদধি-বিনির্গত-জলদেবতাভিবন্দ্যমান-রাঘবপাদাৎ অচল-পাত-(৮) দলিত-শঙ্খকুল-শকল-তারকিত-শিলাতলাৎ

---

যস্যেতি। অপি চেতি চার্থঃ। পূর্বদিগবস্থিতাদুদয়শৈলাৎ দক্ষিণদিগবস্থিতাৎ সেতুবন্ধাৎ পশ্চিমদিগবস্থিতান্মন্দরাচলাৎ উত্তরদিগবস্থিতাচ্চ গন্ধমাদনশৈলাদারভ্য অবনীপতয়ো রাজানো যং প্রণেমুরিতি বক্ষ্যমাণক্রিয়য়ান্বয়ঃ। অত্র পঞ্চম্যন্তপদানি তেষামচলানাং বিশেষণানি। তত্রাদাবুদয়শৈলবিশেষণান্যাহ জলনিধীতি। জলনিধেঃ পূর্বসাগরস্য তরঙ্গৈর্ধৌতা মেখলা মধ্যভাগো যস্য তস্মাৎ। পত্রান্তরবিচারিভিঃ অত্যুচ্চতয়া নভোমণ্ডলস্পর্শিত্বাৎ পত্রমধ্যসঞ্চারিভিঃ, তারাগণৈর্নক্ষত্রসমূহৈঃ, দ্বিগুণিতঃ কুসুমতুল্যবর্ণত্বাৎ দ্বিগুণীকৃতঃ তটতরূণাং স্বোচ্চদেশস্থবৃক্ষাণাং কুসুমপ্রকরো যস্য তস্মাৎ। উদ্যত উদয়মানাদিন্দুবিম্বাৎ চন্দ্রমণ্ডলাৎ বিগলতাম্ অমৃতবিন্দূনাম্ আসারেণ ধারাসম্পাতেন আর্দ্রাশ্চন্দনা বৃক্ষা যস্মিন্ তস্মাৎ। অশিশিরকরস্য সূর্য্যস্য যে রথতুরঙ্গা রথনিযুক্তঘোটকাস্তেষাং খুরশিখরৈঃ খুরাগ্রভাগৈর্য উল্লেখো ঘর্ষণং তেন খণ্ডিতানি ছিন্নানি অতএব উল্লসন্তি স্ফুরন্তি লবঙ্গপল্লবানি যস্মিন্ তস্মাৎ। ঐরাবতস্য হস্তিনঃ করেণ শুণ্ডয়া লূনানি ছিন্নানি শল্লকীনাং হস্তিখাদ্যবৃক্ষবিশেষাণাং কিসলয়ানি পল্লবানি যস্মিন্ তস্মাৎ। উদয়নাম্নঃ শৈলাৎ আ আরভ্যেত্যর্থঃ। অত্র পত্রান্তরেত্যাদৌ, উদ্যদিত্যাদৌ, অশিশিরেত্যাদৌ চ বিশেষণে প্রত্যেকমসম্বন্ধে সম্বন্ধরূপাতিশয়োক্তিরলঙ্কারঃ, তেষাঞ্চ মিথো নিরপেক্ষতয়া সংসৃষ্টিঃ।

(থ) সেতুবন্ধং বিশেষয়ন্নাহ কপীতি। কপিবলেন লঙ্কাগমনসময়ে বানরসৈন্যেন বিলুপ্তানি ভক্ষণায় ছিন্নানি এতএব বিরলানি অল্পীভূতানি লবলীলতানাং ফলানি যস্মিন্ তস্মাৎ। উদধেঃ সাগরাৎ বিনির্গতয়া

---

(ত) পূর্বদিকে উদয়াচল হইতে আরম্ভ করিয়া সমস্ত রাজগণ আসিয়া যে তারাপীড়কে নমস্কার করিতেন। সমুদ্রের তরঙ্গে যে উদয়াচলের মধ্যস্থান ধৌত হইতেছে; যে উদয়াচলের উপরিস্থিত বৃক্ষসমূহের পত্রের অভ্যন্তরে বিচরণকারী নক্ষত্রসমূহে কুসুমসমূহকে যেন দ্বিগুণ করিয়াছে বলিয়া প্রতীতি হইয়া থাকে; উদয়মান চন্দ্রমণ্ডল হইতে নিঃসৃত অমৃতবিন্দুর বৃষ্টিতে যে উদয়াচলের চন্দনবৃক্ষ সকল আর্দ্র হইয়া যায়; সূর্য্যের রথে নিযুক্ত অশ্বগণের খুরের আঘাতে যে উদয়াচলের লবঙ্গপল্লবগুলি ছিন্ন হইয়া স্পন্দিত হইতে থাকে; এবং ঐরাবতহস্তী শুণ্ডদ্বারা যে উদয়াচলের শল্লকীবৃক্ষের পল্লবগুলি ছিন্ন করিয়া থাকে।

(থ) আর দক্ষিণদিকে সেতুবন্ধ হইতে আরম্ভ করিয়া সমস্ত রাজগণ আসিয়া যে তারাপীড়কে নমস্কার করিতেন। রামের সঙ্গে লঙ্কায় যাইবার সময়ে বানরসৈন্যগণ অধিক পরিমাণে

---

(১) পত্রান্তঃ…। (২) দুর্দ্দিনার্দ্র…। (৩)…তুরগ…। (৪)…লবঙ্গ…। (৫)…করতল, করলূনবীথ…, করলূনলোধ…। (৬)…কলাপাৎ। (৭) কপিকুল…। (৮) নিপাত…।

নল-করতলাকলিত-শৈল-সহস্র সম্ভৃতাদা সেতুবন্ধাৎ, (থ) অচ্ছ-নির্ঝরজল-ধৌত-তারক-সার্থাৎ অমৃত-মথনোদ্যত-বৈকুণ্ঠ-কেয়ূরপত্র-মকরকোটি কর্ষণ-মসৃণিত-গ্রাবণঃ সুরাসুর-হেলা-বলয়িত-(১) বাসুকি-সমাকর্ষণ-প্রারম্ভ চলিত (২) চরণ-ভর-দলিত নিতম্বাৎ (৩) অমৃত-সীকর-সিচ্যমানোরো মন্দরাচলাৎ (৪);(দ)

স্থিতয়া জলদৈবতয়া অভিবন্দ্যমানাঃ পূজ্যমানাঃ রাঘবস্য রামস্য পাদাঃ চরণচিহ্নানি যস্মিন্ তস্মাৎ। অচলানাং শৈলানাং পাতেন নিক্ষেপেণ সেতুবন্ধনসময়ে পর্ব্বতনিক্ষেপাঘাতেনেত্যর্থঃ দলিতানাং ভগ্নানাং শঙ্খকুলানাং শকলৈঃ খণ্ডৈঃ তারকিতানি সঞ্জাততারকাণি শিলাতলানি যস্মিন্ তস্মাৎ। নলস্য তদাখ্যস্য বিশ্বকর্ম্মপুত্রস্য বানরপ্রধানস্য করতলেন আকলিতেন সংস্থাপিতেন শৈলসহস্রেণ পর্ব্বতসমূহেন সম্ভৃতাৎ উৎপন্নাৎ সেতুবন্ধাৎ আ আরভ্য। অত্র শঙ্খকুলশকলতারকিতেত্যনেন শঙ্খখণ্ডা এব নক্ষত্রশ্রেণিতয়া প্রতীয়ন্তে ইতি তাৎপর্য্যাদ্ ভ্রান্তিমানলঙ্কারো ব্যজ্যতে।

(দ) মন্দরাচলং বিশিনষ্টি অচ্ছেতি। অচ্ছৈঃ নির্ম্মলৈঃ নির্ঝরজলৈঃ ধৌতঃ প্রক্ষালিতঃ তারকাণাং নক্ষত্রাণাং সার্থঃ সমূহো যস্মিন্ তস্মাৎ, অত্যুন্নততয়া নক্ষত্রমণ্ডলস্পর্শিত্বাদিতি ভাবঃ। অমৃতমথনে সাগরমন্থনপূর্ব্বকামৃতোত্তোলনে ইত্যর্থঃ, উদ্যতস্য প্রবৃত্তস্য বৈকুণ্ঠস্য বিষ্ণোঃ, কেয়ূরপত্রাণাং পত্রাকারবাহুভূষণবিশেষাণাং যা মকরকোটয়ঃ মকরাকারাগ্রভাগাঃ তেষাং কর্ষণেন ঘর্ষণেন মসৃণিতাঃ শ্লক্ষ্ণীকৃতাঃ গ্রাবাণঃ পাষাণা যস্য তস্মাৎ। সুরাসুরৈঃ হেলয়া বলয়িতো মণ্ডলীকৃতো যো বাসুকিরনন্তনাগস্তস্য সমাকর্ষণপ্রারম্ভেণ চলিতানাং চরণানাং তেষামেব সুরাসুরাণাং পাদানাং ভরেণ দলিতো মর্দ্দিতো নিতম্বো মধ্যদেশো যস্য তস্মাৎ। অমৃতস্য উচ্ছলন্ত্যাঃ সুধায়াঃ, সীকরৈর্বিন্দুভিঃ সিক্তাঃ সানবঃ প্রস্থদেশা যস্য তস্মাৎ, মন্দরাচলাৎ আ আরভ্য। পুরা কিল নারায়ণেন কূর্ম্মরূপেণ পৃষ্ঠে ধৃতম্ ঊর্দ্ধে চ বিষ্ণুরূপেণৈব বাহুভ্যামাবিষ্ট্য রক্ষিতং মন্দরাচলং মন্থনদণ্ডম্, বাসুকিঞ্চ রজ্জুং বিধায় সুরাসুরাঃ সাগরং মথিতবন্ত ইতি মহাভারতবার্ত্তা।

নিয়া গিয়াছিল বলিয়া যে সেতুবন্ধে লবলীফল (নোয়াড়ী, নোয়াইল) অল্প হইয়া গিয়াছে, জলদেবতাগণ সমুদ্র হইতে নির্গত হইয়া যে সেতুবন্ধস্থিত রামচন্দ্রের চরণচিহ্নগুলি পূজা করিয়া থাকে; নিক্ষিপ্ত পর্ব্বতের আঘাতে চূর্ণিত শঙ্খসমূহের খণ্ডগুলি যে সেতুবন্ধের প্রস্তর সকলের উপরে নক্ষত্রপুঞ্জের ন্যায় প্রতীতি হইয়াছিল; এবং বানরশ্রেষ্ঠ নলের হস্তনিক্ষিপ্ত পর্ব্বতসমূহে যে সেতুবন্ধ নির্ম্মিত হইয়াছিল। (দ) এবং পশ্চিমদিকে মন্দরপর্ব্বত হইতে আরম্ভ করিয়া সমস্ত রাজগণ আসিয়া যে তারাপীড়কে নমস্কার করিতেন। যে মন্দরপর্ব্বতের নির্ঝরজলে নক্ষত্ররাশি ধৌত হইয়াছিল; অমৃতমন্থনে প্রবৃত্ত বিষ্ণুর কেয়ূরসমূহের মকরাকার অগ্রভাগের ঘর্ষণে যে মন্দরপর্ব্বতের পাষাণসমূহ মসৃণ (পালিস) হইয়াছিল; দেব ও দানবগণ অবহেলায় মণ্ডলীকৃত বাসুকিনাগের আকর্ষণ আরম্ভ করিলে তাঁহাদের চঞ্চল চরণসমূহের ভরে যে মন্দরাচলের মধ্যদেশ মর্দ্দিত হইয়াছিল আর উত্থিত অমৃতবিন্দুসমূহে মন্দরাচলের

(১) সুরাসুরাবলয়িত…। (২)…আরম্ভবলচরণ…,…চলাবস্থিতচরণ…। (৩) নিতম্বকটকাৎ। (৪) মন্দরাৎ।

নর-নারায়ণ-চরণ-মুদ্রাঙ্কিত-বদরিকাশ্রম-রমণীয়াৎ কুবের-পুর-সুন্দরী-ভূষণ-রব-মুখর-শিখরাৎ সপ্তর্ষি-সন্ধ্যোপাসনা-পূত-প্রস্রবণাম্ভসঃ বৃকোদরোদ্দলিত-সৌগন্ধিক-ষণ্ড-সুগন্ধি-মেখলাৎ (১) আ গন্ধমাদনাৎ, (ধ) সেবাঞ্জলি-কমল-মুকুল-দন্তুরৈঃ (২) শিরোভিশ্চরণ-নখ-ময়ূখ-(৩) গ্রথিত-মুকুটপত্রলতা-গ্রন্থয়ো ভয়-চকিত-তরল-তারক-(৪) দৃশো ভুজবল-বিজিতাঃ প্রণেমুরবনীপতয়ঃ (৫)। (ন)

---

(ধ) গন্ধমাদনং বিশেষয়ন্নাহ নরেতি। নরনারায়ণয়োস্তদাখ্যয়োর্মুন্যোঃ চরণমুদ্রাভিঃ পাদন্যাসচিহ্নৈঃ অঙ্কিতঃ চিহ্নিতো যো বদরিকাশ্রমস্তেন রমণীয়াৎ। কুবেরপুরসুন্দরীণাম্ অলকানগরীস্থরমণীনাং ভূষণরবৈঃ মুখরাণি সশব্দানি শিখরাণি শৃঙ্গাণি যস্য তস্মাৎ। সপ্তর্ষীণাং মরীচ্যাদীনাং সন্ধ্যোপাসনয়া পূতানি পবিত্রাণি প্রস্রবণাম্ভাংসি নির্ঝরজলানি যস্য তস্মাৎ। তথা বৃকোদরেণ ভীমসেনেন উদ্দলিতম্ আমর্দিতং যৎ সৌগন্ধিকষণ্ডং কহ্লারসমূহস্তেন সুগন্ধির্মেখলা মধ্যভাগো যস্য তস্মাৎ। গন্ধমাদনাৎ আ আরভ্য যদা তু দ্যূতনির্জিতাঃ পাণ্ডবা দ্বৈতবনমধ্যাসীনা আসন্, তদা দ্রৌপদ্যা অভিলাষাৎ ভীমেন গন্ধমাদনাদগন্ধর্বান্ বিজিত্য সৌগন্ধিকান্যাহৃতানীতি মহাভারতবার্ত্তা।

অত্র ইত্থমনুপযোগিনী বর্ণনা খল্বলাবুলম্বিতস্তনী বাতপরিপীবরশরীরা মীদনারীব নিতরাং বিরক্তিমাবহতি প্রকৃতরসিকানাম্।

[ন] অথাবনীপতীন্ বিশেষয়ন্নাহ সেবেতি। সেবাঞ্জলয় এব আনুগত্যপ্রদর্শনায় ললাটে করযুগলসংযোগা এব কমলমুকুলানি পদ্মকলিকা অথবা সেবাঞ্জলয়ঃ কমলমুকুলানীব, তৈর্দন্তুরাণি বিষমাণি তৈঃ। অত্র বাধক-সাধকপ্রমাণাভাবাদুপমারূপকয়োঃ সন্দেহসঙ্করঃ। শিরোভির্মস্তকৈর্বিশিষ্টাঃ। চরণনখময়ূখৈস্তারাপীড়স্য পদ-নখরকিরণৈঃ গ্রথিতা নমস্কারকালে সংস্পৃষ্টাঃ মুকুটানাম্ অবনীপতীনামেব কিরীটানাং পত্রলতাগ্রন্থয়ঃ পত্রলতা-কারাযদ্বিশিবন্ধনানি যেষাং তে। ভয়েন চকিতা অধীরাঃ তরলা ভাস্বরাঃ, "তরলো ভাস্বরে চলে" ইত্যাদি হৈমঃ,

---

অনেক স্থান সিক্ত হইয়াছিল। (ধ) আবার উত্তরদিকে গন্ধমাদনপর্ব্বত হইতে আরম্ভ করিয়াও সমস্ত রাজগণ আসিয়া যে তারাপীড়কে প্রণাম করিতেন। যে গন্ধমাদনপর্ব্বত নর ও নারায়ণ ঋষির চরণচিহ্নে চিহ্নিত বদরিকাশ্রমদ্বারা মনোহর; আর কুবেরের রাজধানী অলকানগরীস্থিত রমণীগণের অলঙ্কারের শব্দে যাহার শৃঙ্গগুলি শব্দায়মান, এবং সপ্তর্ষিগণ সন্ধ্যোপাসনা করায় যাহার নির্ঝরজল পবিত্র হইতেছে আর ভীমসেনকর্ত্তৃক কহ্লারবন (সুঁদি নাপলার বন) দলিত হওয়ায় যাহার মধ্যভাগ সৌরভময় হইয়াছিল। (ন) নমস্কার করিবার সময়ে সেই সকল রাজগণ ললাটদেশে কমলকলিকার ন্যায় অঞ্জলিবন্ধন করিলে তাঁহাদের মস্তক উঁচু নীচু হইয়া যাইত, তারাপীড়ের চরণনখের কিরণে তাঁহাদের কিরীটের পত্রলতা-গ্রন্থিগুলি সংস্পৃষ্ট হইত, আর ভয়ে উজ্জ্বল নয়নের তারাগুলি কাঁপিতে থাকিত; কারণ— তাঁহারা সকলেই তারাপীড়ের বাহুবলে নির্জ্জিত হইয়াছিলেন।

---

(১)···সণ্ডাৎ। (২) মুকুলৈর্দন্তুরৈঃ। (৩)···নখচ্ছায়···। (৪)···তার···। (৫) অবনিপাঃ।

येन चानेकरत्नांशुजाल-(१) पल्लविते व्यालम्बिमुक्ताफलजालके (२) दिग्गजेनेव कल्पतरावाक्रान्ते सिंहासने भरेण शिलीमुखव्यतिकम्पिता लता इव नेमुरायामिन्यः सर्वा दिशः (३)। (प)

यस्मै च मन्येऽनन्यसाधारणशक्तिसम्पदे (४) सुरपतिरपि स्पृहयाञ्चकार। (फ)

यस्माच्च धवलीकृतभुवनतलः सकल-लोक-हृदयानन्दकारी क्रौञ्चादिव हंसनिवहो निर्जगाम गुणगणः। (ब)

---

तारका कनीनिका यासां तास्तथोक्ता दृश्यवर्त्मानि येषां ते। भुजबलेन तारापीडस्यैव बाहुबलेन विजिता आयत्तीकृताः।

(प) येनेति। दिग्गजेन कल्पतराविव येन तारापीडेन, अनेकेषां रत्नानां खचितानां मणीनाम् अंशुजालैः किरणसमूहैः पल्लविते सर्वतः प्रसरणाद्विस्तारिते सञ्जातानेकरत्नांशुजालात्मककिसलये च, तथा व्यालम्बि लम्बमानं मुक्ताफलजालं मुक्तामाला यस्मिन् तादृशे सिंहासने आक्रान्ते आरूढे सति, भरेण तदीयभारेण, शिलीमुखानां तत्कल्पतरुत उड्डीय पततां भ्रमराणां बाणानाञ्च व्यतिकरेण सम्पर्केण कम्पिता लता इव तत्कल्पतरुसन्निहिता वल्लरी इव, आयामिन्यो दीर्घाः सम्पूर्णा इत्यर्थः सर्वा दिशो नेमुः आयत्ता अवनताश्च बभूवुः। अत्र पूर्णोपमयोर्मिथः सापेक्षत्वात् सङ्करः।

(फ) यस्मा इति। सुरपतिरिन्द्रोऽपि, अनन्यसाधारणशक्तिसम्पदे यस्मै च तारापीडाय स्पृहयाञ्चकार तथाविधामात्मनः शक्तिसम्पदमभिलषितवानित्यर्थः। इत्यहं मन्य इति वाचकशब्दसद्भावादेव वाच्या क्रियोत्प्रेक्षालङ्कारः।

(ब) यस्मादिति। क्रौञ्चात् पर्वतात् हंसनिवह इव। गुणगणो दयादाक्षिण्यादिः। निर्जगाम समनुविकीर्णो जनानां हृदय इति शेषः। अत्रोपमालङ्कारः। पुरा किल भार्गवो भगवतो महेश्वराद्धनुर्वेदं

---

(प) কোন দিগ্‌হস্তী কল্পবৃক্ষকে আক্রমণ করিলে তাহা হইতে ভ্রমরগণ যাইয়া বসিলে তাহাদের ভরে কম্পিত হইয়া নিকটবর্ত্তী লতাসমূহ যেমন অবনত হইয়া পড়ে; সেইরূপ, বহুতর রত্নকিরণে বিস্তৃত এবং লম্বমান মুক্তামালাসংযুক্ত সিংহাসনে মহারাজ তারাপীড় আরোহণ করিলে তাঁহার ভরে এবং বাণপ্রহারের ভয়ে কম্পিত হইয়া সকল দিক্ তাঁহার নিকট সম্পূর্ণরূপে অবনত হইয়াছিল।

(ফ) আমি মনে করি—স্বয়ং দেবরাজ ইন্দ্রও, তারাপীড়ের অসাধারণ শক্তি ও সম্পদ দেখিয়া তদনুরূপ শক্তি ও সম্পদ লাভ করিবার ইচ্ছা করিতেন।

(ব) পূর্ব্বকালে ক্রৌঞ্চপর্ব্বত হইতে হংসগণ যেমন নির্গত হইয়াছিল, সেইরূপ দয়াদাক্ষিণ্য

---

(१) अंशुकजाल, अंशुजाल…। (२)…मुक्ताजालके। (३) सर्वदिशः। (४) मन्ये सुर…।

यस्य चामृतामोद-सुरभिपरिमलया मन्दरोद्धत-(१) बहुल-दुग्धसिन्धु-फेनलेखयेव धवलीकृतसुरासुरलोकया दशसु दिक्षु मुखरितभुवनमभ्रम्यत (२) कीर्त्त्या। (भ) यस्य चातिदुःसह-प्रताप सन्ताप-खिद्यमानेव क्षणमपि न मुमोचातपत्रच्छायां (३) राजलक्ष्मीः। [म] तथा च यस्य [४] दिष्टिवृद्धिमिव शुश्राव, उपदेशमिव जग्राह, मङ्गलमिव [५] बहु मेने, मन्त्रमिव जजाप, आगममिव [६] न विसस्मार चरितं जनः। [य]

खिद्यमानः कदाचित् कार्त्तिकेयेन स्पर्द्धमानः शरेण क्रौञ्चगिरिं विदारयामास, तच्छिद्रेण हंसा निर्गता इति प्रसिद्धं वर्त्तवार्त्ता।

(भ) यस्येति। अमृतामोदवत् सुधागन्धवत् मथनोत्थितामृतामोदेन च सुरभिर्घ्राणतर्पणः परिमलो गन्धो यस्यास्तया, तथा धवलीकृताः सुरासुरलोकाः जगद्व्यापनात् देवलोकदानवलोकाः मथनप्रवृत्ता देवदानवाश्च यया तया। मन्दरेण घूर्णितमन्दराचलेन उद्धृता उत्तोलिता बहुला या दुग्धसिन्धोः क्षीरोदसागरस्य फेनलेखा तयेव, यस्य कीर्त्त्या, मुखरितं स्वकीयालोचनाशब्दैः आलोड़नशब्दैश्च शब्दायमानीकृतं भुवनं यस्मिन् कर्म्मणि तत् यथा तथा दशसु दिक्षु अभ्रम्यत। अत्र पूर्णोपमालङ्कारः। "कीर्त्त्याः सौगन्ध्यं वर्ण्यते" इति भानुचन्द्रधृतात् अमृतामोदेत्यादुक्तः कीर्त्तेः परिमलः ख्यातिविरुद्धोऽपि गुण एव। तथा च दर्पणः—"कवीनां समये ख्याते गुणः ख्यातविरुद्धता।" अभ्रम्यतेति भावे लङ्।

(म) यस्येति। राजलक्ष्मीः, अतिदुःसहः प्रतापः कोषदण्डजातं तेज एव प्रतापः सूर्य्यादितेजः तस्मादु यः सन्तापः उष्णता तेन खिद्यमानेव क्लिश्यमानेव सती क्षणमपि यस्य आतपत्रच्छायां राजच्छत्रस्य अनातपत्वस्थलं न मुमोच सूर्य्यादितापतत्स्य छायाश्रयणस्यावश्यकत्वादिति भावः। अत्र कोषदण्डजतेजः-सूर्य्यादितेजसोर्भेदेऽपि श्लेषेणाभेदाध्यवसायादतिशयोक्तिः क्रियोत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः।

(य) तथाचेति। तथाच अपिचेत्यर्थः। जनो लोकः यस्य चरितं शौर्य्यदयादिकं दिष्टिवृद्धिमिव दैवज्ञमुखात् स्वकीयभाग्योपचयमिव लोकमुखात् शुश्राव, लालसया कौतुकेन च आग्रहातिशयसम्बन्धादिति

প্রভৃতি গুণগ্রাম, সমগ্র জগৎ শুভ্রবর্ণ করিয়া এবং সকল লোকের চিত্তে আনন্দ জন্মাইয়া যে তারাপীড় হইতে নির্গত হইয়াছিল।

(ভ) আর, অমৃতসৌরভের ন্যায় নাসিকার তৃপ্তিজনক সৌরভসম্পন্ন, এবং মন্দরপর্ব্বতের আলোড়নে বহুপরিমাণে উত্থিত ক্ষীরোদসাগরের ফেনরাশির ন্যায় শুভ্রবর্ণ যাঁহার কীর্ত্তি, দেবলোক ও দানবলোককে শুভ্রবর্ণ করিয়া এবং ভুবনমণ্ডলকে নিজের আলোচনায় মুখরিত করিয়া দশ দিকে ভ্রমণ করিয়াছিল। (ম) এবং রাজলক্ষ্মী, যাঁহার অত্যন্ত দুঃসহ তেজের উত্তাপে উত্তপ্ত হইয়া ক্ষণকালের জন্যও রাজচ্ছত্রের ছায়া পরিত্যাগ করেন নাই। (য) আর লোকে যাঁহার চরিত্র, দৈবজ্ঞমুখে নিজের সৌভাগ্যবৃদ্ধির ন্যায় আগ্রহ সহকারে শুনিত, গুরুর

(१) मन्दरोद्धृत…। (२) अभ्राम्यत। (३) आतपच्छायाम्। (४) अस्य।
(५) बहुमङ्गलमिव मेने। (६) आगमवचनमिव।

यस्मिंश्च राजनि गिरीणां विपक्षता, प्रत्ययानां परत्वम्, दर्पणानामभिमुखावस्थानम्, शूलपाणिप्रतिमानां दुर्गाश्लेषः, जलधराणां चापधारणम्, [१] प्रतीहाराणामसिधारणम्, तैक्ष्ण्यमसिधाराणाम्, [२] ध्वजानामुन्नतिः, धनुषामवनतिः,

भावः गुरोरुपदेशमिव सयत्नं शिशिक्षे, उभयोरप्युन्नतिहेतुत्वादित्याशयः। मङ्गलमिव स्वकीयशुभोदयमिव बहुमानेनाद्रियते स्म सुखहेतुत्वादित्यभिप्रायः। उपास्यमन्त्रमिव जजाप असकृदुच्चारयामास, तज्जपेन तदनुकरणस्य सुकरत्वात् मन्त्रजपे च इष्टसाधनत्वादिति भावः। आगमम् अधीतवेदमिव न विसस्मार न विस्मृतवान्, एकत्र "अम्भोजभृता" इत्यादिमनुवचनेन पापोदयादन्यत्र मनोहरत्वादित्याशयः। अत्र सर्वत्रोपमालङ्कारः।

(२) यस्मिन्निति। गिरीणां पर्वतानामेव विपक्षता इन्द्रेण छेदनात् पक्षराहित्यम्, न तु लोकानां विपक्षता परस्परशत्रुता तत्कारणाभावात्। पृथिव्यामासीदिति वक्ष्यमाणक्रियया सर्वत्रान्वयः। इतः प्रभृति जलक्रीडासु शून्यगृहदर्शनमित्यन्तं यावत् सर्वत्र यथासम्भवश्लेषसङ्कीर्णा आर्थी परिसंख्यालङ्कारः। प्रत्ययानां सुप्तिङादीनामेव परत्वं प्रातिपदिकादिप्रकृतेरुत्तरवर्तित्वम्, न तु लोकानां परत्वम् अनात्मीयत्वं सर्वदा सद्व्यवहारात्। दर्पणानां मुकुराणामेव अभिमुखावस्थानं सम्मुखेऽवस्थितिः, न तु लोकानां लोकान्तरस्य प्रहारार्थमभिमुखावस्थानं तादृशविद्वेषाभावात्। शूलपाणिप्रतिमानां मृत्तिकादिनिर्मितशिवप्रतिकृतीनामेव दुर्गाणां दुर्गाप्रतिमानाम् आश्लेषः संयोगः, न तु लोकानां दुर्गेषु आश्लेषः आश्रयः, विपक्षाक्रमणशङ्काया अभावात्। जलधराणां मेघानामेव चापधारणम् इन्द्रधनुर्धारणम्, न तु लोकानां चापधारणं धनुर्धारणं युद्धाभावात्। प्रतीहाराणां द्वारपालानामेव असिधारणम्, न तु लोकानां लोकान्तरप्रहारार्थमसिधारणं शत्रुताया एवाभावात्। असिधाराणां तरवारिनिशिताग्राणामेव तैक्ष्ण्यं तीक्ष्णता, न तु लोकानां तैक्ष्ण्यम् उग्रस्वभावत्वं सुशिक्षागुणेन सर्वेषामेव मधुरस्वभावत्वात्। ध्वजानां केतूनामेव उन्नतिरुत्थितिः, न तु

উপদেশের ন্যায় শিক্ষা করিত, মঙ্গললাভের ন্যায় আদর করিত, ইষ্টমন্ত্রের ন্যায় জপ করিত এবং বেদের ন্যায় কখনও বিস্মৃত হইত না।

(র) আর যিনি রাজা হইলে পর পৃথিবীতে পর্ব্বতগণেরই বিপক্ষতা (পক্ষহীনতা) ছিল, কিন্তু লোকের মধ্যে বিপক্ষতা (পরস্পর শত্রুতা) ছিল না; সুপ্‌ ও তিঙ্‌ প্রভৃতি প্রত্যয়েরই পরত্ব (প্রকৃতির পরবর্ত্তিত্ব) ছিল, কিন্তু লোকের মধ্যে পরত্ব পরস্পর (অনাত্মীয়তা) ছিল না; দর্পণই অভিমুখে অবস্থান করিত, কিন্তু প্রহার করিবার জন্য এক ব্যক্তি অপর ব্যক্তির অভিমুখে অবস্থান করিত না; শিবের প্রতিমারই দুর্গাশ্লেষ (দুর্গাপ্রতিমার সংযোগ) ছিল, কিন্তু লোকের দুর্গাশ্লেষ (দুর্গ আশ্রয়) ছিল না; মেঘেরই চাপধারণ (ইন্দ্রধনুধারণ) ছিল, কিন্তু লোকের চাপধারণ (যুদ্ধের জন্য ধনুর্গ্রহণ) ছিল না; দ্বারপালগণেরই তরবারিধারণ ছিল; কিন্তু অপর লোকের ছিল না; তরবারির ধারেরই তীক্ষ্ণতা ছিল, কিন্তু কাহারও স্বভাবের তীক্ষ্ণতা ছিল না; ধ্বজদণ্ডেরই উন্নতি (উত্থান) ছিল, কিন্তু লোকের

(१) पद्मानां जलदित्वम्, इति क्वचिदधिकः पाठः। (२) प्रतिहाराणामित्यादिः [illegible] पाठः क्वचिन्नास्ति।

वंशानां शिलीमुखक्षतिः, (१) दैवतानां यात्रा, कुसुमानां बन्धनस्थितिः, इन्द्रियाणां निग्रहः, वनकरिणां वारिप्रवेशः, व्रतिनामग्निधारणम्, (२) ग्रहाणां तुलारोहणम्, अगस्त्योदये विषशुद्धिः, केशनखानामायतिभङ्गः, जलधर-(३) दिवसानां मलिनाम्बरत्वम्, रत्नोपलानां भेदः, मुनीनां योगसाधनम् (४) कुमार-

---

लोकानाम् उन्नतिरौद्धत्यं गर्वोक्ताभावात् । धनुषामेव अवनतिः शिक्षासमये गुणाकर्षणेनावनमनम्, न तु लोकानामवनतिः अवस्थाक्रमः सर्वेषामेव महोद्यमेन धनाद्यर्जनात् । वंशानां वेणूनामेव शिलीमुखैर्भ्रमरैः क्षतिर्विवरविधानेन हानिः, न तु लोकानां शिलीमुखैर्वाणैः क्षतिरवदारणं युद्धाभावात् । दैवतानामेव यात्रा पूजायामुत्सवः, न तु सैन्यानां यात्रा युद्धार्थं गमनं विपक्षाभावात् । "यात्रोत्सवे गतौ वृत्तौ" इति हैमः । कुसुमानां पुष्पाणामेव बन्धनेषु वृन्तेषु स्थितिः, न तु लोकानां बन्धने बन्धनगृहे कारागारे स्थितिः, अपराधाभावात् । इन्द्रियाणां मनःप्रभृतीनामेव निग्रहो योगानुष्ठानेन दमनम्, न तु लोकानां निग्रहो दमनं दुर्व्यवहाराभावात् । वनकरिणां वन्यहस्तिनामेव वारौ बन्धनस्थाने प्रवेशः शिक्षार्थं प्रवेशनम्, न तु लोकानां वारिणि जले प्रवेशः 'यद्यहं पापी स्यां तदा मग्नो भवेय'मिति शपथेनावतरणं पापाभावात् । "वारि ह्रीवेर-नीरयोः । वारिर्घट्यां सरस्वत्यां गजबन्धनभुव्यपि ।" इति हैमः । व्रतिनाम् अग्निहोत्रादिनियमवतामेव अग्निधारणं होमार्थमग्निग्रहणम्, न तु लोकानां 'यद्यहं पापी स्यां तदाग्निना दग्धहस्तो भवेय'मिति शपथेनाग्निधारणं पापाभावात् । ग्रहाणां रव्यादीनामेव तुलारोहणं तुलाराशौ गमनम्, न तु लोकानां 'यद्यहं पापी स्यां तदा नीचगामी भवेय'मिति शपथेन तुलादण्डारोहणं पापाभावात् । अगस्त्योदये सौरभाद्रमासशेषे अगस्त्यनक्षत्रोदय एव विषाणां जलानां शुद्धिर्निर्मलता, न तु पापोदयसंशये लोकानां विषेण 'यद्यहं पापी स्यां तदा विषपानेनाचेतनो भवेय'मिति शपथपूर्वकविषपानेन शुद्धिर्निष्पापताख्यापनं पापसंशयाभावात् । "विषन्तु गरले तोयेऽतिविषायाञ्च योषिति ।" इति मेदिनी । केशनखानामेव आयतेर्दैर्घ्यताया भङ्गश्छेदेन विलोपः,

---

উন্নতি (ঔদ্ধত্য) ছিল না, ধনুকেরই অবনতি (গুণাকর্ষণের সময় নমন) হইত, কিন্তু লোকের অবস্থার অবনতি হইত না ; বাঁশেরই শিলীমুখদ্বারা (ভ্রমরদ্বারা) ক্ষতি হইত, কিন্তু লোকের মধ্যে কাহারও শিলীমুখদ্বারা ক্ষতি (বাণদ্বারা বিদারণ) হইত না ; দেবগণেরই পূজাদি উপলক্ষে যাত্রা (উৎসব) হইত, কিন্তু যুদ্ধার্থ সৈন্যগণের যাত্রা (প্রস্থান) হইত না ; পুষ্পসমূহেরই বন্ধনে (বৃন্তে বোঁটায়) অবস্থান ছিল, কিন্তু লোকের বন্ধনে (কারাগারে) অবস্থান ছিল না ; ইন্দ্রিয়গণেরই দমন ছিল, কিন্তু লোকের দমন ছিল না ; বন্যহস্তিগণকেই বারিতে (বন্ধনস্থানে) প্রবেশ করান হইত, কিন্তু পাপের শপথপূর্ব্বক কোন লোকের জলপ্রবেশ হইত না ; ব্রতিগণেরই অগ্নিগ্রহণ ছিল, কিন্তু পাপের শপথপূর্ব্বক কোন লোকের অগ্নিগ্রহণ ছিল না ; গ্রহগণেরই তুলারোহণ (তুলারাশিতে গমন) ছিল, কিন্তু পাপের শপথপূর্ব্বক কোন লোকের তুলারোহণ (তুলাদণ্ডে আরোহণ) ছিল না ; অগস্ত্যনক্ষত্রের উদয়ে বিষশুদ্ধি (জলের নির্ম্মলতা)

---

(१) शिलीमुखसुखक्षतिः । (२) क्वचित्, व्रतिनामसिधाराधारणम् इति पाठः, क्वचिदेव पाठो नास्ति ।
(३) जलद··· । (४) योगधारणम् ।

স্তুতিষু তারকোদ্ধরণম্, উষ্ণরশ্মের্গ্রহণাশঙ্কা, (১) শশিনো জ্যেষ্ঠাতিক্রমঃ, মহাভারতে দুঃশাসনাপরাধাকর্ণনম্, (২) বয়ঃপরিণামে দণ্ড-গ্রহণম্, অসি-পরিবারেষু

ন তু লোকানামায়তেরুত্তরকালস্য উত্তরকালবর্ত্তিনঃ সুখস্য ভঙ্গো নাশঃ, শুভাদৃষ্টবত্ত্বাৎ। জলধরদিবসানাং মেঘাচ্ছন্নদিনানামিব মলিনাম্বরত্বং মেঘাবৃতত্বাৎ মলিনাকাশত্বম্, ন তু লোকানাং মলিনাম্বরত্বং মলিনবসনত্বং সমৃদ্ধিমত্তয়া সর্ব্বদা সুপরিষ্কৃতপরিচ্ছদত্বাৎ। রত্নোপলানাং মণীনামিব ভেদো গ্রথনসূত্রপ্রবেশায় বিদারণং ছিদ্রকরণম, ন তু লোকানাং ভেদো ভেদনীতিপ্রয়োগঃ, শত্রুতাঽভাবেনাবশ্যকত্বাভাবাৎ। মুনীনামিব যোগসাধনং চিত্তবৃত্তিনিরোধানুষ্ঠানম, ন তু লোকানাং যোগসাধনং লোকান্তরহত্যার্থং বিশ্বস্তঘাতকনিয়োজনম্, তাদৃশক্রূরস-ব্যবহারাভাবাৎ। "যোগো বিস্রম্ভঘাতিনি" ইত্যাদি হৈমঃ। কুমারস্তুতিষু কার্ত্তিকেয়স্তবেষ্বেব তারকস্য তদাখ্যস্য তেন নিহতস্য অসুরবিশেষস্য উদ্ধরণমুদাহরণম, ন তু দণ্ডেষু কস্যচিদপি তারকোদ্ধরণং নয়নতারোৎপাটনম্, তাদৃশাপরাধাভাবাৎ দণ্ডয়িতুরানৃশংসত্বাৎ। উষ্ণরশ্মেঃ সূর্য্যস্যৈব গ্রহণাশঙ্কা উপরাগসম্ভাবনা, ন তু কস্যচিদপি জনস্য গ্রহণাশঙ্কা অপরাধবশাৎ রাজপুরুষৈর্বলাৎকারগ্রহণাতঙ্কঃ, অপরাধাভাবাৎ। শশিনশ্চন্দ্রস্যৈব জ্যেষ্ঠাতিক্রমঃ জ্যেষ্ঠানক্ষত্রমুল্লঙ্ঘ্য মূলাদৌ গমনম্, ন ত্বপরস্য জ্যেষ্ঠানাং বয়োবৃদ্ধানাং ভ্রাত্রাদীনামতিক্রমঃ অবমাননা, শিষ্টত্বাৎ। মহাভারতে গ্রন্থ এব দুঃশাসনস্য দুর্য্যোধনকনিষ্ঠভ্রাতুঃ অপরাধাকর্ণনং দ্রৌপদ্যাঃ কেশাম্বরাকর্ষণাপরাধশ্রবণম্, ন ত্বন্যত্র দুঃশাসনেন ন্যায়ধর্ম্মানভিজ্ঞতয়া দূষিতশাসনেন অপরাধাকর্ণনং রাজপুরুষাণামপরাধশ্রবণম, রাজানুশাসনেন তেষাং সর্ব্বত্রৈব সুশাসনাৎ। বয়ঃপরিণামে বার্দ্ধক্য এব দণ্ডগ্রহণং অবলম্বনায় যষ্টিধারণম্, ন ত্বপরাধে দণ্ডগ্রহণং ধনদানাদিদণ্ডস্বীকারঃ, অপরাধাভাবাৎ। পরিপ্রিয়ন্তে আচ্ছাদ্যন্তে

হইত, কিন্তু পাপের শপথপূর্ব্বক কোন লোকের বিষশুদ্ধি (বিষপান করিয়া নিষ্পাপতা প্রকাশ) হইত না; কেশ ও নখসমূহেরই আয়তিভঙ্গ (ছেদন করায় বৃদ্ধির ব্যাঘাত) হইত, কিন্তু লোকের আয়তিভঙ্গ (পরবর্ত্তিকালে সুখভোগের অভাব) হইত না; মেঘাচ্ছন্ন দিনেই মলিনাম্বরত্ব (আকাশ মলিন) হইত, কিন্তু লোকের মলিনাম্বরত্ব (বস্ত্র মলিন) ছিল না; মণিগণেরই ভেদ (ছিদ্র করা) হইত, কিন্তু লোকের মধ্যে ভেদ (পরস্পর মনোবাদ স্থাপন) হইত না; মুনিগণেরই যোগসাধন (যোগাভ্যাস) ছিল, কিন্তু লোকের হত্যার নিমিত্ত যোগসাধন (গুপ্তঘাতক প্রেরণ) ছিল না; কার্ত্তিকের স্তবের সময়েই তারকোদ্ধরণ (তারকাসুরের উল্লেখ) হইত, কিন্তু দণ্ডের সময় কাহারও তারকোদ্ধরণ (নয়নের তারা উৎপাটন) হইত না; সূর্য্যেরই গ্রহণাশঙ্কা (রাহুকর্ত্তৃক গ্রহণের সম্ভাবনা) ছিল, কিন্তু লোকের গ্রহণাশঙ্কা (রাজানুচরকর্ত্তৃক বলক্রমে ধারণের আশঙ্কা) ছিল না; চন্দ্রেরই জ্যেষ্ঠাতিক্রম [জ্যেষ্ঠানক্ষত্র অতিক্রম করিয়া যাওয়া] ছিল, কিন্তু কোন লোক কর্ত্তৃক জ্যেষ্ঠাতিক্রম [জ্যেষ্ঠভ্রাতাপ্রভৃতির অবমাননা] ছিল না; মহাভারতেই দুঃশাসনের [দুর্য্যোধনের কনিষ্ঠ ভ্রাতার] অপরাধ শুনা যাইত, কিন্তু রাজ্যের মধ্যে কোন স্থানে রাজপুরুষদিগের দুঃশাসনের [অন্যায্য শাসনের] অপরাধ শুনা যাইত না; বৃদ্ধকালেই দণ্ডগ্রহণ [যষ্টিধারণ] হইত, কিন্তু অপরাধের জন্য কাহারও দণ্ড-

(১) গ্রহণশঙ্কা। (২) দুঃশাসনাপরাধঃ।

কলঙ্কযোগ:, (১) কামিনী-কুচপত্রভঙ্গেষু বক্রতা, (২) করিণাং দান-বিচ্ছিত্তিঃ, অক্ষ-ক্রীড়াসু শূন্যগৃহ-দর্শনম্, পৃথিব্যামাসীৎ। (ৱ)

তস্য চ রাজ্ঞঃ (৩) নিখিল-শাস্ত্র-কলাবগাহ-গম্ভীরবুদ্ধিঃ, (৪) আশৈশবাদুপারূঢ়-নির্ভর-প্রেমরসঃ, নীতিশাস্ত্র-প্রয়োগ-কুশলঃ, ভুবনরাজ্যভারনৌ-(৫) কর্ণধারঃ, মহত্স্বপি কার্য্যসঙ্কটেষ্ববিষণ্ণধীঃ, (ল) ধাম ধৈর্য্যস্য, স্থানং স্থিতেঃ,

---

এভিরিতি পরিবারাঃ করণে ঘঞ্। অসিপরিবারেষু নরবারীণাং কোষেষ্বেব কলঙ্কযোগঃ পরিষ্কারণাভাবেন মলচিহ্নসম্পর্কঃ, ন তু লোকানাং পরিবারেষু স্ত্রীপুত্রাদিপরিজনেষু কলঙ্কযোগঃ অপবাদসম্বন্ধঃ, নির্দোষত্বাৎ। কামিনীনাং কুচয়োঃ পত্রভঙ্গেষু পত্রাকাররেখাসু বক্রতা কুটিলতা, ন তু লোকচিত্তেষু বক্রতা কুটিলতা সর্বেষামেব সরলচিত্তত্বাৎ। করিণাং হস্তিনামেব দানৈঃ স্বমদজলৈঃ বিচ্ছিত্তিরঙ্গরাগঃ, ন তু ধনিনাং দানবিচ্ছিত্তিঃ ধনবিতরণবিচ্ছেদঃ, "অহরহর্দদ্যা"দিতি শ্রুতেস্তেষাং প্রতিদিনমেব দানাৎ। অক্ষক্রীড়াস্বেব শূন্যগৃহস্য গুটিকারহিতকোষ্ঠস্য দর্শনম্, ন তু নগরগ্রামেষু শূন্যগৃহস্য লোকরহিতভবনস্য দর্শনম্, সর্বাবধোপদ্রবাভাবেন সর্বদৈব লোকপূর্ণত্বাৎ।

(ল) তস্যেতি। কিঞ্চেতি চার্থঃ। শুকনাসো নাম ব্রাহ্মণঃ তস্য রাজ্ঞোঽমাত্য আসীদিতি বক্ষ্যমাণক্রিয়য়াঽন্বয়ঃ। অত্র প্রথমান্তপদানি শুকনাসস্য বিশেষণানি। শাস্ত্রাণি বেদাদীনি চ কলা নৃত্যগীতাদিকলাবিদ্যাশ্চ তাঃ। নিখিলাসু শাস্ত্রকলাসু অবগাহেন প্রবেশেন লব্ধশিক্ষয়েত্যর্থঃ গম্ভীরা অগাধা বুদ্ধির্যস্য সঃ। আশৈশবাৎ উপারূঢ়ো রাজন্যুৎপন্নঃ নির্ভরঃ অতিমাত্রঃ প্রেমরসঃ স্নেহানুরাগো যস্য সঃ। ভুবনরাজ্যস্য ভারঃ শাসনব্যাপার এব নৌর্নৌকা তস্যাঃ কর্ণধারো নাবিকঃ। অত্র পরম্পরিতরূপকমলঙ্কারঃ। কার্য্যসঙ্কটেষু কার্য্যসঙ্কটেষু অবিষণ্ণা অকুণ্ঠিতা ধীর্বুদ্ধির্যস্য সঃ।

---

গ্রহণ [দণ্ড দিতে স্বীকার করিতে] হইত না; অসিপরিবারেই [তরবারির কোষেই] কলঙ্কযোগ [মলচিহ্নের সম্পর্ক] ছিল, কিন্তু লোকের স্ত্রীপুত্রাদি পরিজনবর্গের মধ্যে কলঙ্কযোগ [অপবাদের সম্পর্ক] ছিল না; রমণীগণের স্তনের উপর পত্রাকার রেখাতেই বক্রতা ছিল, কিন্তু লোকের চিত্তে বক্রতা [কুটিলতা] ছিল না; হস্তিগণেরই দানবিচ্ছিত্তি [স্বকীয় মদজলদ্বারা অঙ্গরাগ] হইত, কিন্তু ধনিগণের দানবিচ্ছিত্তি [ধনবিতরণের বিরাম] হইত না; আর অক্ষক্রীড়াতেই শূন্যগৃহ [গুটীশূন্য কোঠ] দেখা যাইত, কিন্তু নগরে বা গ্রামে শূন্যগৃহ [মানুষশূন্য ঘর] দেখা যাইত না।

[ল] শুকনাস নামে এক ব্রাহ্মণ সেই মহারাজ তারাপীড়ের মন্ত্রী ছিলেন। বেদাদি সকল শাস্ত্রে ও নৃত্যগীতাদি সকল কলাবিদ্যায় সম্পূর্ণ শিক্ষালাভ করায় তাঁহার বুদ্ধি অপরিসীম হইয়াছিল; বাল্যকাল হইতে রাজার উপরে তাঁহার অত্যন্ত প্রণয়ানুরাগ জন্মিয়াছিল;

---

(১) অসিপরিবারেষু কুশলযোগঃ, অসিধারাসু কোষগুপ্তিঃ। (২) কামিনীনাং কুচভঙ্গেন, কামিনীকুচভঙ্গেন।
(৩) তস্য রাজ্ঞঃ। (৪) কলাকলাপাবগাহনগম্ভীরবুদ্ধিঃ, নিখিলশাস্ত্রকলাপাবগাহনগম্ভীরবুদ্ধিঃ।
(৫) ভারকর্ণী।

सिन्धुः (१) सत्यस्य, गुरुर्गुणानाम्, आचार्य्य आचाराणाम्, धाता धर्म्मस्य, (व) शेषाहिरिव सकलमही-(२) भारधारणक्षमः, (श) सलिलनिधिरिव महासत्त्व-निवासः, (ष) जरासन्ध इव घटित-(३) सन्धिविग्रहः, (स) त्र्यम्बक इव प्रसाधित-दुर्गः, (ह) युधिष्ठिर इव धर्म्मप्रभवः, (क्ष) सकल-वेद-वेदाङ्गवित्, अशेषराज्य-

---

(व) धामेति। धाम आश्रयः। स्थितेर्मर्य्यादायाः स्थानमाधारः। सिन्धुर्महाश्रयः। गुणानां दया-विनयादीनां गुरुः शिक्षयिता। आचाराणां शिष्टव्यवहाराणाम् आचार्य्य उपदेशकः। धाता धारयिता।

(श) शेषेति। शेषाहिरनन्तनाग इव, सकलाया मह्याः पृथिव्याः, भारः शासनव्यापारस्तस्य धारणे परिचालने, अन्यत्र तु भारो गुरुत्वरूपगुणविशेषस्तस्य धारणे वहने क्षमः समर्थः। अत्र पूर्णोपमालङ्कारः।

(ष) सलिलेति। सलिलनिधिः समुद्र इव, महासत्त्वस्य अत्यन्ताध्यवसायस्य महासत्त्वानां मकरादिविशाल-जलजन्तूनाञ्च निवास आश्रयः। पूर्णोपमा।

[स] जरेति। जरासन्धः स्वनामख्यातो राजेव, घटितौ प्रयोजितौ, सामप्रयोगपूर्वकधनादिदानेन विपक्षस्य मित्रीकरणं सन्धिः, विग्रहो युद्धञ्च तौ येन सः, अन्यत्र तु घटितो विहितः सन्धिकमययखण्डयोः संयोगो यस्य स तादृशो विग्रहः शरीरं यस्य सः। पूर्णोपमा। पुरा किल बृहद्रथो नाम राजा पुत्रार्थमाराधितेन मुनिना चण्डकौशिकेनापितमाम्रफलमेकं पत्नीभ्यां भोक्तुं ददौ, विभज्य भुक्तवतीभ्याञ्च ताभ्यां कालान्तरे बाल-शरीरस्यैकैकखण्डं प्रसूतम्, दृष्ट्वा च राजा दुःखितः श्मशाने न्यक्षिपत्, अथ जरा नाम श्मशानवासिनी काचन राक्षसी यावदेव तत् खण्डद्वयं सन्दधौ तावदेव तं जीवितमवलोक्य बृहद्रथाय ददाविति महाभारतवार्त्ता। केचित्तु प्रकारान्तरमिदमुपाख्यानमाचक्षते।

(ह) त्र्यम्बक इति। त्र्यम्बकः शिव इव, प्रसाधितानि निष्पादितानि दुर्गाणि येन सः पक्षे प्रसाधिता अलङ्कृता दुर्गा पार्वती येन सः। पूर्णोपमा।

[क्ष] युधीति। धर्म्माणां पुण्यानां प्रभवो यागादिना उत्पत्तिर्यस्मात् सः, पक्षे धर्म्मात् प्रभव उत्पत्तिर्यस्य सः। पूर्णोपमा। युधिष्ठिरस्य धर्म्मादुत्पत्तिकथा महाभारतेऽनुसन्धेया।

---

তিনি নীতিশাস্ত্রে ও নীতিপরিচালনায় অত্যন্ত দক্ষ এবং জগতের রাজ্যশাসনকার্য্যরূপ নৌকার কর্ণধার ছিলেন; [ব] আর তিনি ধৈর্য্যের আধার, মর্য্যাদার আশ্রয়, সত্যের সাগর, গুণের শিক্ষক, সদাচারের উপদেশক এবং ধর্ম্মের আশ্রয় ছিলেন; [শ] অনন্তনাগ যেমন সমগ্র পৃথিবীর ভার বহন করিতে সমর্থ, তিনিও তেমন সমগ্র পৃথিবীর শাসনকার্য্যের পরিচালনায় সমর্থ ছিলেন; [ষ] সমুদ্র যেমন মকর প্রভৃতি বৃহৎ জলজন্তুসমূহের আশ্রয়, তিনিও তেমন অত্যন্ত অধ্যবসায়ের আশ্রয় ছিলেন; [স] জরা নামে রাক্ষসী যেমন জরাসন্ধের শরীরের দুই খণ্ড সঙ্ঘটিত করিয়াছিল, তিনিও তেমন যথাস্থানে সন্ধি ও বিগ্রহ সঙ্ঘটিত করিতেন; [হ] মহাদেব যেমন দুর্গার ভূষণক্রিয়া সম্পাদন করিতেন, তিনিও তেমন নানা স্থানে দুর্গনির্ম্মাণক্রিয়া সম্পাদন করিতেন; [ক্ষ] যুধিষ্ঠির যেমন ধর্ম্ম প্রভব [ধর্ম্মরাজ হইতে উৎপন্ন]

---

[१] सेतुः। [२] मही...। [३] सङ्घटित...।

মণ্ডলৈকসারঃ, (১) (ক) বৃহস্পতিরিব সুনাসীরস্য, কবিরিব বৃষপর্ব্বণঃ, বশিষ্ঠ ইব দশরথস্য, বিশ্বামিত্র ইব রামস্য, ধৌম্য ইবাজাতশত্রোঃ, দমনক ইব ভীমস্য, সুমতিরিব নলস্য, (২) সর্ব্বকার্য্যেষ্বাহিতমতিঃ (৩) অমাত্যো ব্রাহ্মণঃ শুকনাসো নামাসীৎ (৪)। (খ)

যো নরকাসুর-শস্ত্রপ্রহার-ভীষণে (৫) ভ্রমন্মন্দর-নিতম্ব-নির্দ্দয়-(৬) নিষ্পেষ-কঠিনাংসপীঠে নারায়ণবক্ষঃস্থলেঽপি স্থিতামদুষ্করলাভামমন্যত প্রজ্ঞাবলেন লক্ষ্মীম্। (গ)

---

(ক) সকলেতি। "শিক্ষা কল্পো ব্যাকরণং নিরুক্তং ছন্দসাং চিতিঃ। জ্যোতিষামযনঞ্চৈব বেদাঙ্গানি বদন্তি ষট্।" অশেষে সমস্তে রাজ্যমণ্ডলে একোঽদ্বিতীয়ঃ সারঃ শ্রেষ্ঠঃ, সর্ব্বগুণাকরত্বাদিতি ভাবঃ।

(খ) বৃহেতি। শোভনো নাসীরো বীর ইতি সুনাসীর ইন্দ্রস্তস্য। "হরিহয়বাঃ সুনাসীরঃ পুরুহূতঃ পুরন্দরঃ।" ইত্যমরঃ। বৃষপর্ব্বণঃ স্বনামপ্রসিদ্ধস্যাসুররাজস্য, কবিঃ শুক্রাচার্য্য ইব। অজাতশত্রোর্যুধিষ্ঠিরস্য ভীমস্য বিদর্ভাধিপতের্দময়ন্তীপিতুঃ। আহিতমতিঃ স্থাপিতবুদ্ধিঃ। শুকস্যেব নাসা নাসিকা যস্যেতি সঃ।

(গ) য ইতি। যঃ শুকনাসঃ প্রজ্ঞাবলেন বুদ্ধিসামর্থ্যেন, নরকাসুরস্য শস্ত্রপ্রহারেণ ভীষণে ক্ষতচিহ্ন-শালিতয়া ভয়ঙ্করে, তথা ভ্রমতঃ সমুদ্রমথনসময়ে ঘূর্ণমানস্য মন্দরস্য পর্ব্বতস্য যো নিতম্বো মধ্যদেশস্তস্য নির্দ্দয়নিষ্পেষেণ নিষ্ঠুরঘর্ষণেন কঠিনে অংসপীঠে পীঠবদ্বিশালং স্কন্ধদ্বয়ং যস্য তাদৃশে, নারায়ণস্য বক্ষঃস্থলে স্থিতামপি লক্ষ্মীং অদুষ্করো লাভো যস্যাস্তাং সুলভামিত্যর্থঃ অমন্যত। অত্র নরকাসুরঃ শস্ত্রপ্রহারেণাপি যাং লব্ধুম্ নাশকত, যা চ মন্দরনিষ্পেষণেনাপি ন যযৌ, তামপি লক্ষ্মীমদুষ্করলাভামমন্যত, ইত্যর্থস্য প্রথমবিশেষণদ্বয়েন সূচনাৎপুষ্টার্থত্বদোষঃ। কৃষ্ণেন ভূমিপুত্রো নরকাসুরো নিহত ইতি হরিবংশবার্ত্তা। সমুদ্রমথনবৃত্তান্তস্তু জ্ঞাতঃ।

---

ছিলেন, তিনি ও তেমন ধর্ম্মপ্রভব (যাগাদি দ্বারা ধর্ম্মের উৎপাদক) ছিলেন। (ক) আর তিনি সকল বেদ ও বেদাঙ্গ জানিতেন এবং সমস্ত রাজ্যের মধ্যে অদ্বিতীয় প্রধান ব্যক্তি ছিলেন। (খ) বৃহস্পতি যেমন ইন্দ্রের, শুক্রাচার্য্য যেমন অসুররাজ বৃষপর্ব্বার, বশিষ্ঠ যেমন দশরথের, বিশ্বামিত্র যেমন রামচন্দ্রের, ধৌম্য যেমন যুধিষ্ঠিরের, দমনকমুনি যেমন ভীমরাজার, এবং সুমতি যেমন নলরাজার মন্ত্রী ছিলেন, শুকনাসও তেমনই তারাপীড়ের মন্ত্রী ছিলেন, আর তিনি সকল কার্য্যেই বুদ্ধিপ্রয়োগ (মনোনিবেশ) করিতেন।

(গ) নরকাসুরের অস্ত্রপ্রহারের ক্ষতচিহ্নে যে বক্ষঃস্থল ভয়ঙ্কর হইয়াছিল এবং সমুদ্র-মন্থনের সময় ঘূর্ণমান মন্দরপর্ব্বতের নিষ্ঠুর ঘর্ষণে যে বক্ষঃস্থলের নিকটবর্ত্তী স্কন্ধদ্বয় কঠিন হইয়াছিল, লক্ষ্মীদেবী নারায়ণের সেই বক্ষঃস্থলে বাস করিলেও যিনি বুদ্ধিবলে তাঁহাকে লাভ করাও দুষ্কর নহে বলিয়া মনে করিতেন।

---

(১)···মণ্ডলৈকসারঃ। (২) দমনক ইব নলস্য। (৩) অপ্রতিহতমতিঃ।
(৪) অভবৎ। (৫) শস্ত্রভীষণে।···মন্দরনির্দ্দয়···।

যস্য সমাসাদ্য (১) দর্শিতানেকরাজ্যফলা লতেব মহাপাদপম্ (২) অনেক-প্রতানগহনা বিস্তারমুপযযৌ (৩) প্রজ্ঞা। (ঘ)

যস্য চানেক-(৪) সহস্র চারপুরুষ সঞ্চার-নিচিতে (৫) চতুরুদধি-বলয়-পরিখা-(৬) প্রমাণে ধরণীতলে (৭) ভবন ইবাবিদিতমহরহঃ সমুচ্ছ্বসিতমপি রাজ্ঞাং নাসীৎ। (ঙ)

স রাজা বাল এব সুর কুঞ্জর-কর-পীবরেণ রাজলক্ষ্মী (৮) লীলোপধানেন, সকল-জগদভয়-প্রদান-শৌণ্ডেন, রণ-যজ্ঞ-দীক্ষাযূপেন, (৯) স্ফুরদসিলতা-

---

(ঘ) যস্যেতি। লতা মহাপাদপং বিশালবৃক্ষমিব, প্রজ্ঞা বুদ্ধিঃ, যস্য শুকনাসং সমাসাদ্য প্রাপ্য, দর্শিতানি অনেকানি রাজ্যানি নূতনানেকরাজ্যলাভা ইত্যর্থঃ ফলানীব যয়া সা। লতেবেত্যুপমানুসারাদুপমিতসমাস এব ন্যায্যঃ। তথা অনেকৈঃ প্রতানৈঃ পল্লবৈঃ গহনা নিবিড়া, বুদ্ধিপক্ষে তু অনেকেষু বিষয়েষু প্রতানেন প্রসারেণ গহনা অপরৈর্দুর্গমা, সতী। অত্র লুপ্তোপমাসঙ্কীর্ণা পূর্ণোপমালঙ্কারঃ।

(ঙ) যস্যেতি। অনেকস্য চারপুরুষাণাং গুপ্তচরাণাং সহস্রস্য সঞ্চারেণ বিচরণেন নিচিতে ব্যাপ্তে, চত্বারি উদধিবলয়ানি মণ্ডলীভূতসমুদ্রা এব পরিখাস্তাভিঃ প্রমাণং পরিমাণং যস্য তস্মিন্ সমস্ত ইত্যর্থঃ, ধরণীতলে ভবনে ইব স্বগৃহে ইব রাজ্ঞামন্যেষাং নৃপতীনাম্ অহরহঃ সমুচ্ছ্বসিতমপি প্রতিদিনং নিশ্বাসত্যাগোঽপি যস্য চ শুকনাসস্য অবিদিতং অজ্ঞাতং নাসীৎ, গুপ্তচরৈঃ সর্ব্বমেব বৃত্তান্তং শুকনাসোঽবগতবানিত্যর্থঃ। অন্যোপমালঙ্কারঃ।

(চ) স ইতি। স রাজা তারাপীড়ঃ কর্ত্তব্যমেবমপরমপশ্যদিতি পরেণান্বয়ঃ। সুরকুঞ্জরস্য ঐরাবতস্য করবৎ শুণ্ডাবৎ পীবরেণ স্থূলেন। অত্র লুপ্তোপমালঙ্কারঃ। রাজলক্ষ্ম্যাঃ লীলোপধানেন বিলাসোপবর্হস্বরূপেণ।

---

(ঘ) এবং কোন লতা বৃহৎ একটী বৃক্ষ পাইয়া তাহার অবলম্বনে ফল জন্মাইয়া নূতন নূতন পল্লবে নিবিড় হইয়া যেমন ক্রমে বিস্তার লাভ করে, সেইরূপ বুদ্ধি, যে শুকনাসকে পাইয়া নূতন নূতন রাজ্যলাভ দর্শন করাইয়া এবং বহুতর বিষয়ে প্রবেশ করায় অন্যের দুর্জ্ঞেয় হইয়া ক্রমে বিস্তার লাভ করিয়াছিল।

(ঙ) আর নিজের গৃহে কোন ঘটনা ঘটিলে তাহা যেমন লোকের অজ্ঞাত থাকে না, সেইরূপ পরিখাস্বরূপ চারিটি সমুদ্র-পরিবেষ্টিত সমগ্র পৃথিবীতে বহুতর গুপ্তচর বিচরণ করায় অন্যান্য রাজগণের প্রতিদিন নিশ্বাসত্যাগও যে শুকনাসের অজ্ঞাত ছিল না।

(চ) সেই রাজা তারাপীড়, বালক অবস্থাতেই ঐরাবতহস্তীর শুণ্ডের ন্যায় স্থূল, রাজ-লক্ষ্মীর লীলোপধান (সুখের বালিস) স্বরূপ, সমগ্র জগতের অভয়দানে মত্ত, যুদ্ধরূপ যজ্ঞারম্ভের

---

(১) যমাসাদ্য। (২) পাদপম্। (৩) উপাযযৌ। (৪) যস্যানেক···।
(৫)···পরিচিতে, বিচিতে। (৬) পরিধিপ্রমাণে, পরিক্ষেপপ্রমাণে।
(৭) ধরণিতলে। (৮) রাজ্যলক্ষ্মী···। (৯) সকলজগদভয়দানযজ্ঞদীক্ষাযূপেন।

मरीचिजाल-जटिलेन, निखिलाराति-कुल-प्रलयधूमकेतुना, बाहुदण्डेन (१) विजित्य सप्तद्वीपवलयां (२) वसुन्धरां तस्मिन् शुकनासनाम्नि मन्त्रिणि सुहृदीव राज्यभारमारोप्य सुस्थिताः प्रजाः कृत्वा कर्त्तव्यशेषमपरमपश्यत् (३)। प्रशमिताशेषविपक्षतया विगताशङ्कः शिथिलीकृत-वसुन्धराव्यापारः (४) प्रायशो यौवनसुखमनुबभूव (५)। (च)

तथाहि कदाचिदुल्लसत्कठोर-कपोल-पुलक-जर्जरित-कर्णपल्लवानां प्रणयि-

अत्र निरङ्गकेवलरूपकमलङ्कारः। सकलानां जगताम् अभयप्रदाने शौण्डो मत्तस्तेन। "मत्ते शौण्डोत्कट-क्षीबाः" इत्यमरः। रणो युद्धमेव यज्ञः क्षत्रियाणां धर्मजनकत्वादुत्सवरूपत्वाच्चेति भावः, तस्य दीक्षायामारम्भे यूपेन पशुबन्धनकाष्ठस्वरूपेण। अत्र रणे यज्ञत्वारोपो राजबाहौ यूपत्वारोपे निमित्तमित्यश्लिष्टशब्दनिबन्धनं परम्परितरूपकमलङ्कारः। स्फुरन्त्याः दीप्यमानायाः असिलतायाः लतावल्लम्बमानतरवारेः मरीचिजालेन किरणसमूहेन जटिलो व्याप्तस्तेन। तथा निखिलस्य अरातिकुलस्य शत्रुगणस्य प्रलये विनाशे धूमकेतुना तत्-स्वरूपेण, अथवा धूमकेतुरिव तेन, विनाशसूचकेनेत्यर्थः। अत्र साधकबाधकप्रमाणाभावान्निरङ्गकेवलरूपक-लुप्तोपमयोः सन्देहसङ्करः। सप्त द्वीपवलयानि द्वीपमण्डलानि यस्याः ताम्। सुहृदीव सख्याविव। अतीव-विश्वस्ततया अतिशङ्काभावादिति भावः। श्रौतोपमालङ्कारः। प्रशमिताः शान्तिं प्रापिताः अशेषाः समस्ता विपक्षाः शत्रवो येन तस्य भावस्तया हेतुना, विगताशङ्को निरातङ्कः, तथा शिथिलीकृतो मन्दीकृतः वसुन्धराव्यापारः पृथिवीशासनकार्य्यं येन सः।

(छ) यौवनसुखानुभवप्रकारमेव दर्शयति तथाहीति। कदाचित् अनङ्गपरवशः कामाधीनः सन् राजा सुरतमाततानेति परेणान्वयः। उल्लसद्भिः प्रकाशमानैः कठोरैर्ध्वंधमयोग्यत्वात् परुषैः, कपोलयोर्गण्डयोः पुलकै रोमाञ्चैः जर्जरितानि गण्डोपरि पतनात् जीर्णीकृतानि कर्णपल्लवानि यासां तासाम्, प्रणयिनीनां प्रियाणां चन्दनजलस्य छटाभिर्विन्दुसमूहैरिव, स्मितं ईषत् हास्यं सुधा अमृतमिव स्मितमेव सुधेति वा, तस्याः छविभिः

যূপকাষ্ঠস্বরূপ, দেদীপ্যমান তরবারির কিরণজালে ব্যাপ্ত এবং ধূমকেতুর ন্যায় সকল শত্রুগণের বিনাশসূচক বাহুদণ্ডদ্বারা সপ্তদ্বীপা পৃথিবীকে জয় করিয়া সুহৃদের ন্যায় অত্যন্ত বিশ্বাসী সেই শুকনাসনামক মন্ত্রীর উপরে রাজ্যভার অর্পণ করিয়া প্রজাদিগকে সুস্থ করিয়া অপর কর্ত্তব্যের অবশিষ্ট দেখিয়াছিলেন। পরে পৃথিবীর শাসনকার্য্যে বিশেষ লিপ্ত না থাকিয়া এবং সকল শত্রুগণ শান্তভাব অবলম্বন করায় নিঃশঙ্কচিত্ত হইয়া প্রায়ই যৌবনসুখ অনুভব করিতেছিলেন।

(ছ) কখনও রাজা, চন্দনজল-বিন্দুসমূহের ন্যায় প্রণয়িনীগণের সুধাময় ঈষৎ হাস্যের শোভা-জলে অভিষিক্ত হইতে থাকিতেন, তখন সেই রমণীগণেরও গণ্ডের উপরে অত্যন্ত

(१)…धूमकेतुर्दण्डेन बाहुना। (२) सकलद्वीपवलयाम्। (३) अपश्यन्।
(४) विगताशङ्कः। शिथिलितपृथ्वीव्यापारः, शिथिलितपृथिवीव्यापारः। (५) प्रायो यौवनसुखान्यनुबभूव।

तालुनि विन्यस्त-(१) गौरसर्षपोन्मिश्र भूतिलेखः (२) गोरोचनाचिचित-(३) कण्ठसूत्रग्रन्थिः उत्तानशयो दशनशून्य स्मितानन: पुत्रको जनयिष्यति मे हृदयाह्लादम्। (भ) कदा गोरोचनाकपिलद्युतिरन्तःपुरिका-करतल-परम्परा-सञ्चार्य्यमाणमूर्त्तिरशेषजनाभिनन्दितः (४) मङ्गलप्रदीप इव मे शोकान्धकारमुन्मूलयिष्यति चक्षुषोः। (म) कदा च क्षितिरेणु-(५) धूसरो मण्डयिष्यति मम हृदयेन दृष्ट्या च सह परिभ्रमन् भवनाङ्गनम्। (य) कदा केशरि-किशोरक इव सञ्जात-

(भ) कदेति। सर्वौषधिभिः "कुष्ठमांसीहरिद्राभिर्वचाशैलेयचन्दनैः। सुराचन्दनकर्पूरैर्मुस्ता: सर्वौषधिः स्मृतः।" इति राजनिर्घण्टोक्तै र्द्रव्यविशेषैः पिञ्जराः पिङ्गलवर्णाः, जटिला जटावत् संसक्ताश्च केशा यस्य सः। रक्षार्थं घृतमिति रक्षाघृतम्, तथा च निहितः स्थापितः रक्षाघृतस्य बिन्दुः कणो यस्मिन् तस्मिन् तथोक्ते तालुनि तालुदेशे विन्यस्ता अर्पिता गौरसर्षपेण श्वेतसर्षपेण उन्मिश्रा संयुक्ता भूतिलेखा भस्मरेखा यस्य सः। गोरोचनया चित्रितः कण्ठसूत्रग्रन्थिर्यस्य सः। अत्र मस्तकादौ सर्वौषधिप्रभृतिविन्यासो रक्षार्थः। तत्प्रमाणन्तु मत्स्यपुराणादावनुसन्धेयम्। उत्तान ऊर्द्धाननः शेत इत्युत्तानशयः "शीङोऽधिकरणे च" इति चकारात् कर्त्तर्य्युपपदे शयतेरच्। दशनशून्यं दन्तरहितम् अथच स्मितं प्रफुल्लम् आननं यस्य सः। पुत्रक इत्यनुकम्पायां कप्रत्ययः।

(म) कदेति। गोरोचनावत् कपिला पिङ्गलवर्णा द्युतिः कान्तिर्यस्य सः। अन्तःपुरिकाणाम् अन्तःपुरस्थानां स्त्रीणां करतलपरम्परया पाणिश्रेण्या सञ्चार्य्यमाणा एकस्या हस्तादपरस्या हस्ते नीयमाना मूर्त्तिर्यस्य सः। अशेषैः समस्तैर्जनैः अभिनन्दितः राजपुत्रतया माङ्गलिकतया च अभ्यर्थितः। शोकः पुत्राभावनिबन्धनो विषाद एवान्धकारस्तम्। अत्र पूर्णोपमालङ्कारो निरङ्गकेवलरूपकेण सङ्कीर्य्यते।

(य) कदेति। क्षितिरेणुभिर्भूतलधूलिभिः धूसरः गात्रेषु लग्नतया धूसरवर्णः। मण्डयिष्यति

ক্রোড়ে করিয়া আমাকে আনন্দিত করিবে? (ভ) চুলগুলি সর্ব্বৌষধ লেপন করায় পিঙ্গলবর্ণ ও জটিল হইবে, তালুতে রক্ষাঘৃতের বিন্দু সিক্ত থাকিবে এবং শ্বেতসর্ষপসংযুক্ত ভস্মের রেখা দেওয়া হইবে, এবং গোরোচনাদ্বারা কণ্ঠের সূত্র চিত্রিত থাকিবে—এই অবস্থায় উত্তানশায়ী (চিৎ হইয়া শোওয়া) এবং দন্তবিহীন-প্রফুল্ল-বদন পুত্র, কবে আমার চিত্তের আহ্লাদ জন্মাইবে? (ম) গোরোচনার ন্যায় পীতবর্ণ-কান্তিসম্পন্ন হইবে, অন্তঃপুরবাসিনী রমণীগণের মধ্যে এক এক জন অপরাপরের হস্ত হইতে নিতে থাকিবে এবং সকল লোকে দেখিয়া অভিনন্দন করিবে—এইরূপ পুত্র, মাঙ্গলিক প্রদীপের ন্যায় কবে আমার নয়নযুগলের শোকরূপ অন্ধকার দূর করিবে? (য) পুত্ররত্ন ধূলিতে ধূসরবর্ণ হইয়া আমার মন ও নয়নের সহিত বিচরণ করতঃ

(१)…घृतलवबिन्दुतालुविन्यस्त…। (२)…भूतिलेश:।
(३)…चित्र…। (४)…वन्दितः। (५) क्षितितलरेणु…।

जानु-चङ्क्रमणारम्भः (१) सञ्चरिष्यतीतस्ततः स्फटिक-मणिमय-भित्त्यन्तरितान् (२) भवनमृगशावकान् जिघृक्षुः (३)। (र) कदा अन्तःपुरिका-(४) नूपुर-निनाद-सङ्कृतान् गृहकलहंसकान् (५) अनुसरन् कक्षान्तरप्रधावितः (६) कनकमेखला-घण्टिका-रवानुसारिणीमायासयिष्यति धात्रीम्। (ल) कदा कृष्णागुरु-पङ्क-लिखित-मदलेखालङ्कृत-गण्डस्थलकः, (७) कोमलमुख-रव-डिण्डिमध्वनि-जात-प्रीतिः (८)

---

भूषयिष्यति। यत्र यत्रैव स परिभ्रमिष्यति तत्र तत्रैव मम हृदयं हृष्टं कौतुकानन्दाभ्यां यास्यतीति भावः। अतएवात्र स्वभावोक्तिरलङ्कारः।

(र) कदेति। सञ्जात उत्पन्नः जानुभ्यां चङ्क्रमणारम्भः परिभ्रमणारम्भो यस्य सः। केशरिकिशोरक इव सिंहशावक इव। स्फटिकमणिमयीभिर्भित्तिभिः अन्तरितान् व्यवहितान् भवनमृगशावकान् गृहपालितहरिणशिशून् जिघृक्षुः ग्रहीतुमिच्छुः सन् इतस्ततः सञ्चरिष्यति। अत्रोपमालङ्कारः।

(ल) कदेति। अन्तःपुरिकाणाम् अन्तःपुरस्थानां स्त्रीणां नूपुरनिनादेन सङ्कृतान् उपस्थितान् हंसानां नूपुरनिनादानुसारित्वस्वभावादिति भावः, गृहकलहंसकान् गृहपालितक्षुद्रक्षुद्रकादम्बान् अनुसरन् कौतुकादनुगच्छन्, कक्षान्तरप्रधावितः हंसानामपि तत्र तत्र प्रस्थानात् तदनुसरणाय प्रकोष्ठात् प्रकोष्ठान्तरं द्रुतं गतः, कनकमेखलायास्तस्यैव सुवर्णमयकाञ्चीदाम्नः घण्टिकाः किङ्किण्यस्तासां रवं शब्दम् अनु लक्षीकृत्य सर्तुं गन्तुं शीलं यस्यास्ताम्, कक्षान्तरगमनेनादर्शनादिति भावः, धात्रीमुपमातरम् आयासयिष्यति सर्वत्र तदनुसरणस्यावश्यकत्वात् परिश्रमयिष्यति। अत्र स्वभावोक्तिरलङ्कारः।

(व) कदेति। कृष्णागुरुपङ्केन घनेन कालागुरुद्रवेण लिखिता चित्रिता या मदलेखावत् लेखा रेखा तया अलङ्कृते शोभिते गण्डस्थले कपोलयुगलं यस्य सः, पक्षे कृष्णागुरुपङ्कवत् लिखिता लिप्ता या मदलेखा दानजलरेखा तया अलङ्कृतगण्डस्थलकः। कोमलो यो मुखरवः जिह्वाया विन्यासविशेषेण 'टक'

---

কবেই বা গৃহপ্রাঙ্গণ অলঙ্কৃত করিবে ? (র) জানুযুগলদ্বারা পরিভ্রমণ আরম্ভ হইলে, (হামা-গুড়ি বা হাপুর দিতে শিখিলে) স্ফটিকময় ভিত্তির অন্তরালে অবস্থিত গৃহপালিত হরিণশাবক-গণকে ধরিবার ইচ্ছায় কবেই বা সিংহশাবকের ন্যায় ইতস্ততঃ বিচরণ করিবে ? (ল) কবেই বা অন্তঃপুরবাসিনী রমণীগণের নূপুরের রব শুনিয়া উপস্থিত গৃহপালিত হংসগণের অনুসরণ করত একপ্রকোষ্ঠ হইতে অপর প্রকোষ্ঠে বেগে চলিয়া যাইবে, তখন ধাত্রী, তাহার সুবর্ণময় কাঞ্চীস্থিত কিঙ্কিণীর রব লক্ষ্য করিয়া ধাবিত হইতে হইতে পরিশ্রান্ত হইয়া পড়িবে (ব) গাঢ় কৃষ্ণাগুরু-রসের দ্বারা গণ্ডযুগলে মদরেখার ন্যায় রেখা অঙ্কিত করায় মনোহর শোভা

---

(१)…चङ्क्रमणावस्थः। (२) स्फटिकमणिभित्त्यन्तरितान्। (३) आजिघृक्षुः। (४) अन्तःपुर…।
(५) गृहहंसकान्। (६) पक्षान्तर…, प्रधावितान्। (७)…गण्डस्थलः।
(८) मुखडिण्डिमध्वनिजनितप्रीतिः।

ऊर्द्धकर विप्रकीर्ण-चन्दन चूर्णधूलि-धूसरः, कुञ्चिताङ्गुलि-शिखराङ्कुशाकर्षण-विधूत-शिराः, करियति मदमत्त गजराज-लीलाम् (१)। कदा मातुश्चरणयुगल-रागोपयुक्त (२) शेषेण पिष्टालक्तकरसेन कञ्चुकिनां (३) विडम्बयिष्यति मुखानि। (श) कदा कुतूहल-चञ्चल-[४] लोचनो मणिकुट्टिमेष्वधोदत्त-दृष्टिरनुसरिष्यति स्खलद्गतिरात्मनः प्रतिबिम्बानि। [५][ष] कदा नरेन्द्र-सहस्र-प्रसारित-भुज-युगलाभिनन्द्यमानागमनो भूषणमणि-मयूख-लेखाकुलीक्रियमाण [६] लोलदृष्टिरास्थानस्थितस्य मे [७] पुरः पर्यटिष्यति [८] सभान्तरेषु। [स] इत्येतानि चान्यानि [९]

'टक्' इत्येवं धात्र्याः सुखशब्दो डिण्डिमध्वनेरिव कोमलसुखरववत् डिण्डिमध्वनिश्च, तेन जाता प्रीतिरानन्दो यस्य सः। ऊर्द्धकराभ्याम् उत्तोलितहस्ताभ्याम् उत्तोलितमुष्ट्या च विप्रकीर्णाभिर्विक्षिप्ताभिः, चन्दनचूर्णरूप-धूलिभिः चन्दनचूर्णवत् पांशुभिश्च धूसरः। तथा कुञ्चितया वक्रीकृतया अङ्गुल्या उपमातुस्तर्जन्या इत्यर्थः शिखरम् अग्रभागः अङ्कुश इव कुञ्चिताङ्गुलिशिखरवदङ्कुशस्तेन यदाकर्षणं तेन विधूतं प्रत्यावर्त्तनासमर्थ-सूचनाय कम्पितं शिरो येन सः। मदमत्तस्य गजराजस्य लीलां व्यवहारं करिष्यति। अत्र लीलामिव लीला-मिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धरूपा निदर्शनालङ्कारः श्लेषेण सङ्कीर्य्यते।

(श) कदेति। मातुर्जनन्याः चरणयुगलस्य यो रागो रञ्जनं तत्र उपयुक्तात् पर्य्याप्तात् शेषेण अवशिष्टेन, पिष्टालक्तकरसेन घनत्वाद्द्रवेण तल्लेपनेनेत्यर्थः कञ्चुकिनां सन्निहितवृद्धब्राह्मणानां मुखानि विडम्बयिष्यति विरूपीकरिष्यति।

[ष] कदेति। कुतूहलेन चञ्चले लोचने यस्य सः, मणिमयभूमिषु स्वप्रतिबिम्बदर्शनादिति भावः। मणिकुट्टिमेषु मणिबद्धसभाभूमिषु। स्खलन्ती भूमेरतिस्निग्धतया भग्नन्ती गतिर्गमनं यस्य सः। आत्मनः स्वस्य।

(स) कदेति। नरेन्द्रसहस्रेण राजसमूहेन कर्त्रा प्रसारितेन भुजयुगलेन करेण अभिनन्द्यमान'

ধারণ করিয়া, ডিণ্ডিমশব্দের ন্যায় ধাত্রীর মনোহর সুখশব্দে আনন্দিত হইয়া, হস্তযুগল উত্তোলন করিয়া গাত্রে চন্দনচূর্ণ নিক্ষেপপূর্ব্বক ধূসরবর্ণ হইয়া, অঙ্কুশের ন্যায় বক্রীকৃত ধাত্রীর তর্জ্জনীর আকর্ষণে মস্তক কম্পিত করিয়া কবে মদমত্ত হস্তিরাজের অনুকরণ করিবে? (শ) মাতার চরণযুগল রঞ্জিত করিলে পর যে ঘন আল্‌তার রস অবশিষ্ট থাকিবে, তাহা লেপিয়া দিয়া কবে কঞ্চুকিগণের মুখ বিকৃত করিয়া দিবে? (ষ) কৌতুকবশতঃ মণিময় ভূমিতে দৃষ্টি-নিক্ষেপপূর্ব্বক চঞ্চলনেত্র হইয়া স্খলিতগতিতে কবে নিজের প্রতিবিম্বসমূহের অনুসরণ করিবে? (স) আর কবেই বা আমি সভামধ্যে উপবিষ্ট থাকিব, রাজগণ বাহুযুগল প্রসারিত

(१) मत्तगजराजलीलाक्रीडाः, मत्तगजक्रीडाम्, मत्तगजराजलीलाम, मत्तगजराजलीलः क्रीडाम्, मत्तगजराजलीलाः। (२) चरणरागोपयुक्त…। (३) वृद्धकञ्चुकिनाम्। (४) लोल…। (५) प्रति-बिम्बितानि। (६)…मयूखाकुलीक्रियमाण…। (७) मम। (८) सर्पिष्यति (९) इत्येतानि च, इत्येतानि मनो…।

মনোরথশতানি চিন্তয়তোঽন্তঃ সন্তপ্যমানস্য প্রযান্তি (১) রজন্যঃ। (চ) মামপি দহত্যেবায়মহর্নিশমনল ইবানপত্যতাসমুদ্ভবঃ সন্তাপঃ (২)। (ছ) শূন্যমিব (৩) মে প্রতিভাতি জগৎ, অফলমিব পশ্যামি রাজ্যম্ (৪)। (জ) অপ্রতিবিধেয়ে তু বিধাতরি কিং করোমি, তন্মুচ্যতাং দেবি! শোকানুবন্ধঃ, আধীয়তাং ধৈর্য্যং ধর্ম্মে চ ধীঃ, ধর্ম্মপরায়ণানাং হি সদা সমীপসঞ্চারিণ্যঃ কল্যাণসম্পদো ভবন্তি" ইত্যেবম্ (৫) অভিধায় সলিলমাদায় স্বয়ং করতলে-

---

আদরাদভ্যর্থ্যমানম্ আগমনং যস্য সঃ। অতএব ভূষণমণীনাং রাজ্ঞামাভরণীভূতরত্নানাং ময়ূখজালৈস্তয়া কিরণসংহত্যা আকুলীক্রিয়মাণা দর্শনৌৎসুক্যাৎ ব্যস্তীক্রিয়মাণা অতএব লোলা চঞ্চলা দৃষ্টির্যস্য সঃ, আস্থানস্থিতস্য সভায়ামুপবিষ্টস্য মে মম পুরঃ অগ্রতঃ সভান্তরেষু রাজসভামধ্যদেশেষু পর্য্যটিষ্যতি বিচরিষ্যতি। অত্র স্বভাবোক্তিরলঙ্কারঃ।

ঙ] চিন্তয়তীতি। ইত্যেতানি পূর্ব্বোক্তানি পুত্রবিষয়াণি, অন্যানি চানুক্তানি মনোরথশতানি আশাবিষয়ীক্রিয়মাণানি পুত্রস্য শিশুচাতুর্য্যাদিবিষয়াণি। অন্তঃ সন্তপ্যমানস্য তাদৃশপুত্রানুৎপত্ত্যা অন্তঃকরণ এব বিষীদতঃ, অধীরতাপ্রকাশাপবাদভয়াদ্বহিরপ্রকাশয়ত ইতি ভাবঃ। মমেতি শেষঃ। অত্র বৃত্ত্যনুপ্রাসোঽলঙ্কারঃ।

(চ) মামিতি। ন কেবলং ত্বাম্, মামপীত্যপেরর্থঃ। অত্রোপমালঙ্কারঃ।

(ছ) শূন্যমিতি। জগৎ শূন্যমিব প্রতিভাতি তাদৃশাবলম্বনাভাবাদিত্যাশয়ঃ। রাজ্যম্ অফলমিব পশ্যামি ভাবিনো ভোক্তুরভাবাদিত্যভিপ্রায়ঃ।

(জ) সর্ব্বৈরিহ সন্তাপনিবৃত্তয়ে কোঽপ্যুপায়ঃ ক্রিয়তামিত্যাহ অপ্রতীতি। বিধাতরি বিধৌ প্রাতিকূল্যে ইত্যর্থঃ: অপ্রতিবিধেয়ে নানুবর্ত্তিতয়া প্রতিবিধাতুমশক্যে সতি। প্রতিকূলবিধিকৃত এবায়মস্মাকং সন্তাপ ইতি ভাবঃ। তন্মাৎ। মুচ্যতাং ত্যজ্যতাম্। শোকানুবন্ধঃ অনপত্যতানিবন্ধনা বিষাদপরম্পরা। আধীয়তাং স্থাপ্যতাম্। ধর্ম্ম এব পরমুৎকৃষ্টম্ অয়নমাশ্রয়ো যেষাং তে ধর্ম্মপরায়ণা ধার্ম্মিকাস্তেষাম্। অভিনবপল্লবেনেব রক্তেনেতি ভাবঃ,

---

করিয়া তাহার আগমনের অভিনন্দন করিবেন, তাঁহাদের আভরণস্থ রত্নসমূহের কিরণজালে তাহার নয়নযুগল আকুল করিয়া তুলিবে—এই অবস্থায় সেই পুত্ররত্ন আমার সম্মুখে সভামধ্যে বিচরণ করিবে। (ঙ) এই সকল, আরও বহুতর আকাঙ্ক্ষার বিষয় চিন্তা করিতে করিতে আমার মনে অত্যন্ত সন্তাপ উপস্থিত হইতে থাকে—সেই অবস্থায় প্রতিদিন রাত্রি অতীত হইয়া যায়। (চ) নিঃসন্তানতানিবন্ধন এই সন্তাপ অগ্নির ন্যায় দিবারাত্রি আমাকে দগ্ধ করিতেছে। (ছ) জগৎসংসার আমার নিকট শূন্য বলিয়া বোধ হইতেছে; এই রাজ্য নিষ্ফল বলিয়া মনে করিতেছি। (জ) কিন্তু বিধাতার প্রতিকূলতাচরণের প্রতিবিধান করা যায় না, সুতরাং করিব কি? অতএব দেবি! এই নিরবচ্ছিন্ন মনস্তাপ পরিত্যাগ কর, ধৈর্য্য ও ধর্ম্মে

---

(১) যান্তি। (২) শোকঃ। (৩) শূন্যমেব। (৪) অফলমিবাখিলং পশ্যামি জীবিতং রাজ্যঞ্চ।
(৫) ইত্যম্, এবম্।

नाभिनवपल्लवेनेव विकचकमलतुल्यम् (१) आननमस्याः साश्रुलेखं ममार्ज । (ख) पुनः पुनश्च प्रियतममधुराभिः शोकापनोदन-(२) निपुणाभिर्धर्म्मोपदेशगर्भाभिर्वाग्भिराश्वास्य सुचिरं स्थित्वा (३) नरेन्द्रो निर्जगाम । (ग)

निर्गते च तस्मिन् मन्दीभूतशोकवेगा (४) विलासवती यथाक्रियमाणाभरण-परिग्रहादिकमुचितं (५) दिवसव्यापारमन्वतिष्ठत् (६) । (घ) ततः प्रभृति सुतरां देवताराधनेषु ब्राह्मण-पूजासु गुरुजनसपर्य्यासु चादरवती (७) बभूव । यद् यच्च किञ्चित् कुतश्चित् शुश्राव व्रतं (८) तत्तदर्भककाम्यया (९) सर्वं चकार । (ङ) न महान्तमपि क्लेशमजीगणत् । अनवरत-दह्यमान-

---

करतलेन पाणिना । अश्रुलेखया नयनजलरेखया सहेति साश्रुलेखम्, विकचकमलतुल्यं प्रस्फुटपद्मसमानम् अस्या विलासवत्या आननं ममार्ज । अत्र प्रथमा श्रौती द्वितीया चार्थी उपमेत्यनयोरङ्गाङ्गिभावेन सङ्करः ।

(ग) पुनरिति । नरेन्द्रो राजा । प्रियतमं चाटु चाटुर्य्यं मधुरा मनोहरास्ताभिः । धर्म्मोपदेशो गर्भे मध्ये यासां ताभिः ।

(घ) निर्गत इति । यथा पूर्वं प्रकारेण क्रियमाणो आभरणपरिग्रहः अलङ्कारधारणम् आदौ यस्य तम्, उचितं योग्यं दिवसव्यापारं दिनकार्य्यम् अन्वतिष्ठत् अकरोत् ।

(ङ) तत इति । गुरुजनानां सपर्य्यासु पूजासु च । सुतरां नितान्तं यथा तथा । कुतश्चित् यस्मात् कस्माश्चित् जनात् । अर्भककाम्यया बालकस्पृहया पुत्रलाभेच्छयेत्यर्थः ।

(च) नेति । अनवरतं दह्यमानानां गुग्गुलूनां धूमैरन्धकारितेषु । सञ्जातान्धकारेषु । धवलाम्बरा

---

মতি সংস্থাপন কর, কারণ মঙ্গল সম্পদ সর্ব্বদাই ধার্ম্মিকগণের নিকটে বিচরণ করিয়া থাকে” এইরূপ বলিয়া, অঙ্গ লইয়া রাজা নিজেই, নূতন পল্লবের ন্যায় করতলদ্বারা নয়নজলের রেখা-সংযুক্ত এবং প্রস্ফুটিত পদ্মের তুল্য রাণীর মুখমণ্ডল মার্জ্জনা করিয়া দিলেন। (গ) এবং শোক দূর করিতে নিপুণ, ধর্ম্মোপদেশ-পূর্ণ ও চাটুগর্ভ বিবিধ মধুর বাক্যে বারংবার রাণীকে আশ্বস্ত করিয়া, সে স্থানে বহুসময় অবস্থান পূর্ব্বক চলিয়া গেলেন।

(ঘ) রাজা চলিয়া গেলে তাঁহার উপদেশেই শোকের আবেগ কমিয়া যাওয়ায় রাণী বিলাসবতী, পূর্ব্বের ন্যায় অলঙ্কারধারণপ্রভৃতি দিবসের কর্ত্তব্য কার্য্য করিতে লাগিলেন। (ঙ) আর তদবধি দেবতাগণের আরাধনাতে এবং ব্রাহ্মণ ও গুরুজনের পূজাতে সমধিক যত্নবতী হইলেন। আর যে কোন ব্যক্তির নিকট যে যে ব্রত-নিয়ম শুনিতে লাগিলেন, পুত্রলাভের

---

(१) कमलतुल्यम् । (२) शोकापनोद··· । (३) क्वचित् 'स्थित्वा' इति नास्ति ।

(४) मन्दीभूतशोका । (५) यथाक्रियमाणम्, आभरणपरिग्रहादिकं समुचितम्, आभरणपरिग्रहादिसमुचितम् । (६) आदरव्यापारमकरोत् । (७) ब्राह्मणपूजासु चादरवती, गुरुजनपरिचर्य्यासु च, अधिकमादरवती । (८) कुत्रचित् 'व्रतं' इति न दृश्यते । (९) गर्भेच्छया ।

गुग्गुलु-धूमान्धकारितेषु (१) चण्डिका-गृहेषु धवलाम्बरा (२) शुचि-मूर्त्तिरुपोषिता हरितकुशोपच्छदेषु (३) मुसलशयनेषु (४) सुष्वाप। (च) पुण्यसलिलपूर्णैः (५) विविध-कुसुमफलोपेतैः क्षीरतरु-पल्लव-लाञ्छनैः सकलरत्नगर्भैः शातकुम्भ-कुम्भैः गोकुलेषु वृद्धगोपवनिताकृतमङ्गलानां (६) लक्षणसम्पन्नानां गवामधः सस्नौ। (छ) प्रतिदिवसमुत्थाय (७) सर्व्वरत्नोपेतानि हैमानि तिलपात्राणि ब्राह्मणेभ्यो ददौ। (ज) महानरेन्द्र-लिखित-मण्डल-मध्यवर्त्तिनी विविध-बलिदाना-नन्दित-दिग्देवतानि बहुल-(८) चतुर्दशीनिशासु चतुष्पथे (९) स्नानमङ्गलानि (१०)

श्वेतवस्त्रा, शुचिमूर्त्तिः स्नानेन पवित्रदेहा, उपोषिता कृतोपवासा सती। हरिताः पालाशवर्णा नूतना इत्यर्थः कुशा उपच्छदा आस्तरणानि येषु तादृशेषु मुसलशयनेषु अशोभावेन पातितमुसलशय्यासु सुस्वाप शयितवती। पुत्रलाभाय तदानीन्तनशिष्टाचारादमी खल्वाचाराः प्रत्येतव्याः, इदानीन्तनकालाकर्ण्यरुद्रपूजाप्रकरणीयपद्धतिः-सांनाचारवत्। क्वचित्तु पौराणिकप्रमाणमप्युपलभ्यते तत्तु ग्रन्थगौरवाशङ्कया नोदाहृतम्।

(छ) पुण्येति। पुण्यसलिलपूर्णैः पवित्रजलपूरितैः। क्षीरतरूणाम् आम्रवटादीनां पल्लवा एव लाञ्छनानि उपरितनचिह्नानि येषां तैः। शातकुम्भकुम्भैः सुवर्णकलशैः। गोकुलेषु गोष्ठेषु। वृद्धाभिः गोपवनिताभिः कृतानि मङ्गलानि सिन्दूरचन्दनमाल्यार्पणादिरूपाणि यासां तासां लक्षणसम्पन्नानां सम्पूर्णकृष्णवर्णादि-सुलक्षणानां गवां धेनूनाम् अधस्तले सस्नौ स्नातवती।

(ज) प्रतीति। हैमानि सुवर्णमयानि।

(झ) महेति। महानरेन्द्रेण प्रधान-भूतवैद्येन लिखितम् अङ्कितं यत् मण्डलं वर्त्तुलरेखा तस्य

ইচ্ছায় সে সমস্তই করিতে লাগিলেন। (চ) তখন গুরুতর কায়ক্লেশও গণনা করিতেন না। উপবাসী থাকিয়া শুভ্রবর্ণ বস্ত্র পরিধানপূর্ব্বক পবিত্রদেহে, অবিশ্রান্ত দহ্যমান গুগ্‌গুলুর ধূমের অন্ধকারে পরিপূর্ণ চণ্ডীমণ্ডপে নূতন কুশের আস্তরণ-সংযুক্ত মুসলময় শয্যার উপরে শয়ন করিতেন। (ছ) গোষ্ঠে যাইয়া বৃদ্ধ গোপরমণীগণকর্ত্তৃক সিন্দূর, চন্দন ও মাল্যাদিদ্বারা ভূষিত সুলক্ষণসম্পন্ন গরুর নীচে বসিয়া, পবিত্রজলপরিপূর্ণ, নানাবিধ পুষ্প ও ফলসংযুক্ত, আম্র ও বটপ্রভৃতি ক্ষীরিবৃক্ষের পল্লবসমন্বিত ও সকল রত্ন-পূর্ণ সুবর্ণময় কলসের জলে স্নান করিতেন। (জ) প্রতিদিন নিদ্রা হইতে উঠিয়া, নানাবিধ রত্নের সহিত বহুতর তিলপাত্র ব্রাহ্মণদিগকে দান করিতেন। (ঝ) কৃষ্ণপক্ষের চতুর্দ্দশীর রাত্রিতে চতুষ্পথে

(१)...गुग्गुलबहलधूपान्धकारितेषु। (२) धवलाम्बरेण, धवलाम्बर...(३) हरितकुश,...हरित-कुशोपच्छन्नेषु। (४) मुसलशयनेषु। (५) पूरितैः, पूर्णैः। (६)...मङ्गला। (७) उत्थायोत्थाय। (८) बहुलपक्ष...। (९) चतुष्पथेषु। (१०) स्नपन...।

ভেজে। (ঞ) সিদ্ধায়তনানি কৃত বিবিধ দেবতোপযাচিতকানি (১) সিষেবে। (ঞ) দর্শিতপ্রত্যয়ানি (২) সন্নিহিতমাতৃকা-(৩) ভবনানি জগাম। (ট) প্রসিদ্ধেষু নাগকুল-হ্রদেষু মমজ্জ। (ঠ) অশ্বত্থপ্রভৃতীনুপপাদিতপূজান্মহাবনস্পতীন্ কৃতপ্রদক্ষিণা ববন্দে। (ড) দোলায়মান-বলয়েন (৪) পাণিযুগলেন স্নাতা (৫) স্বয়মখণ্ড-সিক্থ-সম্পাদিতং (৬) রজতপাত্র-(৭) পরিগৃহীতং বায়সেভ্যো দধ্যো-

---

মধ্যবর্ত্তিনী সতী, বহুলপক্ষস্য কৃষ্ণপক্ষস্য চতুর্দশীনিশাসু, চতুর্ণাং পথাং সমাহারঃ সম্মিলনস্থানমিতি চতুষ্পথং তস্মিন্, বিবিধানাং নানাপ্রকারাণাং বলীনামুপহারাণাং দানেন আনন্দিতাঃ দিগ্দেবতা দিক্পালা যৈষু তানি, স্নানরূপাণি মঙ্গলানি ভেজে বিহিতবতী।

(ঞ) সিদ্ধেতি। কৃতানি অর্পিতানি বিবিধানি দেবতাভ্য উপযাচিতকানি 'যদি মে পুত্রলাভঃ স্যাত্তদা পরমস্মৈ বলিং প্রদাস্যম্" ইত্যঙ্গীকারপূর্ব্বকোপহারা যেষু তানি, সিদ্ধায়তনানি যোগিসেবাণি সিষেবে ভক্তিপূর্ব্বকমাশ্রিতবতী। "দীয়তে যত্তু দেবেভ্যো মনোরাজ্যস্য সিদ্ধয়ে। উপযাচিতকং দিব্যং দোহদং তদ্বিদুর্বুধাঃ।" ইতি জটাধরঃ।

ট দর্শিতেতি। দর্শিতো মাতৃকাভিরেব লোকে প্রকাশিতঃ প্রত্যয়ঃ অভিলষিতফলদানেন বিশ্বাসো যেষু তানি, সন্নিহিতানি মাতৃকাণাং ব্রাহ্মীপ্রভৃতীনাং ভবনানি গৃহাণি। মাতরশ্চ—"ব্রাহ্মী মাহেশ্বরী চণ্ডী বারাহী বৈষ্ণবী তথা। কৌমারী চৈব চামুণ্ডা চর্চ্চিকেত্যষ্টমাতরঃ।"

(ঠ) প্রসিদ্ধেষ্বিতি। প্রসিদ্ধেষু মজ্জনেন বন্ধ্যায়া অপি পুত্রজনকতয়া বিখ্যাতেষু, নাগকুলস্য হ্রদেষু পন্নগানামাবাসীভূতহ্রদেষু মমজ্জ সশিরোমজ্জনং কৃতবতী।

(ড) অশ্বত্থেতি। কৃতং প্রদক্ষিণং যয়া সা, উপপাদিতা বিহিতা পূজা যেষাং তান্। মহান্তো যে বনস্পতয়ঃ পুষ্পহীনাঃ ফলবন্তো বৃক্ষাস্তান্। ববন্দে নমশ্চকার।

(ঢ) দোলায়েতি। স্নাতা কৃতস্নানা সতী, স্বয়মাত্মনৈব, দোলায়মানে চপলে বলয়ে যস্য তেন। অখণ্ড-

---

যাইয়া, প্রধান ভূতবৈদ্য ( ওঝা ) কর্তৃক অঙ্কিত মণ্ডলের মধ্যে থাকিয়া, নানাবিধ উপহারে দিক্পালগণকে সন্তুষ্ট করিয়া মাঙ্গলিক স্নান করিতেন। (ঞ) 'আমার যদি পুত্র হয়, তবে পুনরায় এইরূপ উপহার প্রদান করিব", এইরূপ মানসিক করিয়া দেবতাদিগকে নানাবিধ উপহার প্রদানপূর্ব্বক ভক্তিপূর্ণচিত্তে সিদ্ধক্ষেত্রের সেবা করিতেন। (ট) মাতৃগণ লোকের অভীষ্ট ফল প্রদান করিয়া যেখানে বিশ্বাস জন্মাইয়া দিয়াছেন, নিকটবর্ত্তী সেই সকল ব্রাহ্মী প্রভৃতি মাতৃকাগণের মন্দিরে গমন করিতেন। (ঠ) বিখ্যাত সর্পময় হ্রদে স্নান করিতেন। (ড) পূজা ও প্রদক্ষিণ করিয়া অশ্বত্থপ্রভৃতি মহাবৃক্ষদিগকে নমস্কার করিতেন। (ঢ) স্নান করিয়া নিজেই, রূপার পাত্রে করিয়া অক্ষত-ধান্য-সংযুক্ত ও দধিমিশ্রিত অন্নের উপহার কাক-

---

(১) কৃতবিধিব···কৃতবিবিধদেবতোপ···।

(২) প্রত্যাদেয়ানি। (৩) সন্নিধানমাতৃকা···, সন্নিহিতমাতৃ···। [৪]---মণিবলয়েন।

(৫) কৃতস্নানা। [৬] সহ অক্ষতসিক্থকুসুম···। [৭] রজতপাত্রে।

दन-बलिमदात्। (ढ) अपरिमित कुसुम-धूपविलेपापूप (१) पलल-पायस-लाज-(२) कलितामहरहरम्बादेवी-(३) सपर्य्यामाततान। (ण) स्वयमुपहृत-(४) पिण्डपात्रान् भक्तिप्रवणेन मनसा सिद्धादेशान्नग्नक्षपणकान् पप्रच्छ। (त) विप्रश्निकादेशवचनानि बहु मेने। (थ) निमित्तज्ञानुपचचार। (द) शकुनज्ञानविदामादरमदर्शयत्। (ध) अनेकवृद्धपरम्परासमागतानि

---

रक्तैः सिक्थैर्धान्यपुलाकैः सम्पादितं निष्पादितम्। दध्योदनबलिं दधिमिश्रितान्नरूपमुपहारम्। वाय-सेभ्यः काकेभ्यः।

(ढ) अपरेति। अहरहः प्रतिदिनं अपरिमितैर्बहुभिः कुसुमैः, धूपैः, विलेपैश्चन्दनादिविलेपनद्रव्यैः, अपूपैः पिष्टकैः, पललैर्मांसैः, पायसैः परमान्नैः, लाजैर्धानाभिश्च कलिता सम्पादिता अम्बादेव्या दुर्गायाः सपर्य्या पूजाम् आततान कृतवती।

(ण) स्वयमिति। भक्तिप्रवणेन भक्तियुक्तेन मनसा, स्वयमात्मनैव, उपहृतानि उपढौकितानि पिण्डपात्राणि अन्नभाजनानि येभ्यस्तान्, सिद्धाः सफलाः आदेशा आज्ञावाक्यानि येषां तान्, नग्नक्षपणकान् दिगम्बरान् बौद्ध-विशेषान्, पप्रच्छ पुत्रो मे भवेन्न वा इति जिज्ञासितवती। 'अचिरमेव पुत्रस्ते भवेत्' इति यदमी वदेयुस्तदाऽमीषां सिद्धादेशतया अभीष्टसिद्धिः स्यादित्याशयेनेति भावः।

(त) विप्रेति। विप्रश्निकानां शुभाशुभगणनाकारिणीनां स्त्रीणाम् आदेशवचनानि आज्ञावाक्यानि बहु मेने आदृतवती। "विप्रश्निका त्वीक्षणिका दैवज्ञा" इत्यमरः।

(थ) निमित्तेति। निमित्तानि शुभाशुभसूचकानि नयनस्पन्दनादीनि जानन्ति ये ते तथोक्तास्तान्, उपच-चार उपययौ, तदवगमार्थमिति भावः।

(द) शकुनेति। शकुनज्ञानं वसन्तराजीयादिकं पक्षिचेष्टादर्शनेन शुभाशुभनिर्णायकं शास्त्रं विदन्ति जानन्ति ये तेषाम् आदरं बहुमानम् अदर्शयत्। पक्षिचेष्टादर्शनेन तेभ्योऽपि शुभाशुभज्ञानार्थमिति भावः।

---

দিগকে দিতেন, তথন তাঁহার হস্তের বলয় চলিতে থাকিত। (ণ) প্রতিদিন অপরিমিত পুষ্প, ধূপ, অনুলেপন, পিষ্টক, মাংস, পায়স ও খই দ্বারা দুর্গাদেবীর পূজা করিতেন। (ত) নিজেই ভক্তিযুক্তচিত্তে অন্নের পাত্র উপঢৌকন দিয়া সত্যবাদী উলঙ্গ বৌদ্ধ সন্ন্যাসীদিগকে জিজ্ঞাসা করিতেন (যে আমার পুত্র হইবে কি না)। (থ) দৈবজ্ঞস্ত্রীলোকের আদেশবাক্যের বিশেষ আদর করিতেন। (দ) চক্ষুঃস্পন্দনপ্রভৃতি শুভাশুভলক্ষণ জানা লোকের নিকট যাইতেন। (ধ) শাকুনশাস্ত্রজ্ঞ লোকের প্রতি আদর দেখাইতেন। (ন) বহুতর প্রাচীন

---

(१) अपरिमितधूपविलेपाम् (२) पायसबलिम्, पायसबलिलाज...। (३)...र्य्यं म्बादेवी...।
(४) उपाहृत..., उपाहृत...।

(১) রহস্যানি চকার (২)। (ন) দর্শনাগত-দ্বিজগণান্ (৩) আত্মজদর্শনোৎসুকা বেদশ্রুতীরকারয়ৎ। (প) অনবরত-(৪) বাচ্যমানাঃ পুণ্যকথাঃ (৫) শুশ্রাব। (ফ) গোরোচনা-লিখিত ভূর্জপত্রগর্ভান্ মন্ত্রকরণ্ডকান্ (৬) উবাহ (ব)। রক্ষাপ্রতিসরোপেতানি [৭] ওষধিসূত্রাণি [৮] ববন্ধ। [ভ] পরিজনোঽপি চাস্যাঃ সততমুপশ্রুত্যৈ নির্জগাম, তন্নিমিত্তানি চ জগ্রাহ, শিবাভ্যো মাংসবলিপিণ্ডমনুদিনং নিশ্চক্রাম(?)সসর্জ, [৯] স্বপ্নদর্শনান্যার্য্যাচার্য্যাণামাচচক্ষে, চত্বরেষু শিবাবলিম্ [১০] উপজহার। [ম]

---

(ন) চকেতি। রহস্যানি গুপ্তমন্ত্রসাধনাদীনি।

(প) দর্শনেতি। আত্মজদর্শনোৎসুকা পুত্রদর্শনায়োৎকণ্ঠিতা, দর্শনায় স্বসাক্ষাৎকারায় আগতা যে দ্বিজগণা ব্রাহ্মণসমূহাস্তান্, বেদানাং শ্রূয়ন্তে ইতি শ্রুতয়ো ব্যক্তপাঠাস্তান্ অকারয়ৎ। "বা হ্রক্রোঃ" রিত্যনেন দ্বিজগণানিতি প্রযোজ্যকর্ত্তুঃ কর্ম্মত্বম্।

(ফ) অনেতি। পুণ্যকথাঃ শ্রীকৃষ্ণাদিজন্মবৃত্তান্তান্।

(ব) গোরোচনেতি। গোরোচনয়া লিখিতং ভূর্জপত্রং গর্ভে মধ্যে যেষাং তান্, মন্ত্রকরণ্ডকান্ নৃসিংহাদি-মন্ত্রযুক্তপিটকান্, উবাহ ধারয়ামাস।

(ভ) রক্ষেতি। রক্ষাপ্রতিসরেণ রক্ষার্থং কঙ্কণেন উপেতানি যুক্তানি, ওষধিসূত্রাণি গর্ভোৎপাদকৌষধিযুক্ত-সূত্রাণি, ববন্ধ হস্তে ইতি শেষঃ। "ভবেৎ প্রতিসরো মন্ত্রভেদে মাল্যে চ কঙ্কণে।" ইত্যাদি মেদিনী।

(ম) পরীতি। উপশ্রুত্যৈ দৈবপ্রশ্নায় দৈবজ্ঞেভ্যঃ শুভাশুভশ্রবণায়েত্যর্থঃ। "নক্তং নির্গত্য যৎকিঞ্চিচ্ছু-ভাশুভকরং বচঃ। শ্রূয়তে তদ্বিদুর্ধীরা দৈবপ্রশ্নমুপশ্রুতিম্।" ইতি হারাবলী। তন্নিমিত্তানি দৈবজ্ঞস্য শুভা-শুভলক্ষণবচনানি, জগ্রাহ যত্নেনাদত্ত, বিলাসবত্যৈ বক্তুমিতি ভাবঃ। অনুদিনং প্রতিদিনং মাংসবলিপিণ্ডং মাংসরূপমুপহারং শিবাভ্যঃ শৃগালেভ্যঃ। স্বপ্নদর্শনান্যাশ্চর্য্যস্বপ্নানিত্যর্থঃ, আচার্য্যাণাং মহাচার্য্যাণাং সমীপে আচচক্ষে উবাচ, তৈভ্যস্তেষাং শুভাশুভত্বমবগন্তুমিতি ভাবঃ। চত্বরেষু গৃহাঙ্গনেষু, শিবাভ্যো বলিমুপ-হারম্ উপজহার দদৌ। অয়মুপহারস্তু দিবস ইতি ন পূর্ব্বেণ সহ পৌনরুক্ত্যম্।

---

পরম্পরায় প্রচলিত গুপ্তমন্ত্র সাধন করিতেন। (প) পুত্রলাভের নিমিত্ত উৎকণ্ঠিত হইয়া, সাক্ষাৎ করিবার জন্য উপস্থিত ব্রাহ্মনগণদ্বারা বেদপাঠ করাইতেন। (ফ) কথকদিগের নিকট সর্ব্বদা পুণ্যোপাখ্যান শুনিতেন। (ব) গোরোচনাদ্বারা লিখিত ভূর্জ্জপত্র-পূর্ণ মন্ত্রের মাদুলী ধারণ করিতেন। (ভ) হস্তে রক্ষাকঙ্কণ ও ঔষধযুক্ত সূত্র বন্ধন করিতেন। (ম) তাঁহার পরিজনবর্গও দৈবজ্ঞের নিকট শুভাশুভ বাক্য শুনিবার নিমিত্ত নির্গত হইত এবং

---

(১) আগমাগমানি, গমানি। (২) অঙ্গীচকার, অঙ্গীকরোতি স্ম। (৩) দর্শনাগতং দ্বিজজনম্। (৪) অনবরতম্। (৫) পুণ্যাঃ কথাঃ। (৬) মন্ত্রগণ্ডকান্, মন্ত্রদণ্ডকান্। (৭) রক্ষাপরিসরোপেতানি। (৮) ঔষধিসূত্রাণি, ঔষধীসূত্রাণি। (৯) সমুৎসসর্জ। (১০) শিববলিম্।

এবং [১] গচ্ছতি কালে কদাচিদ্রাজা ক্ষীণভূয়িষ্ঠায়াং রজন্যামল্পাবশেষ-[২] পাণ্ডুতারকে জরৎপারাবতপক্ষধূসরে [৩] নভসি স্বপ্নে সৌধশিখর-[৪] স্থিতায়া বিলাসবত্যাঃ করিণ্যা ইব বিসবলয়-[৫] মাননে সকলকলাপূর্ণ-[৬] মণ্ডলং শশিনং প্রবিশন্তম্ [৭] অদ্রাক্ষীৎ। [য] প্রবুদ্ধশ্চোত্থায় হর্ষবিকাশ-স্ফীততরেণ চক্ষুষা ধবলীকৃতবাসভবনস্তস্মিন্নেব ক্ষণে সবহুমানং শুকনাস-মাহূয় তং [৮] স্বপ্নমকথয়ৎ। (র)

সমুপজাতহর্ষঃ স তং প্রত্যুবাচ—"দেব! সম্পন্নাঃ সুচিরাদস্মাকং প্রজানাঞ্চ

---

(য) এবমিতি। ক্ষীণভূয়িষ্ঠায়াং অতীতপ্রায়ায়াম্ রজন্যাম্। নভসি আকাশে চ, অল্পাবশেষাঃ পাণ্ডুবর্ণাস্তারকা নক্ষত্রাণি যস্মিন্ তস্মিন্; জরতো বৃদ্ধস্য পারাবতস্য কপোতস্য পক্ষবৎ পতত্রবৎ ধূসরে ধূসরবর্ণে চ ইতি। সৌধশিখরস্থিতায়াঃ প্রাসাদোপরিগতায়াঃ বিলাসবত্যা আননে মুখে, করিণ্যা হস্তিন্যা আননে বিসবলয়ং মৃণালমণ্ডলমিব, সকলাভিঃ কলাভিঃ পূর্ণং মণ্ডলং বিম্বং যস্য তম্, শশিনং চন্দ্রম্। অত্র প্রথমা লুপ্তোপমা দ্বিতীয়া চ শ্রৌত্যুপমা, অনয়োঃ পরস্পরনিরপেক্ষতয়া সংসৃষ্টিঃ।

(র) প্রবুদ্ধ ইতি। প্রবুদ্ধো জাগরিতঃ। হর্ষেণ আনন্দেন যো বিকাশ উন্মীলনং তেন স্ফীততরম্ অতীব বিস্তৃতং তেন, ধবলীকৃতং বাসভবনং শয়নগৃহং যেন সঃ। সবহুমানং সাদরম্।

[ল] সমুপেতি। সমুপজাতো হর্ষ আনন্দো যস্য সঃ, স শুকনাসঃ, তং রাজানম্। সম্পন্নাঃ সফলা

---

যত্নপূর্ব্বক তাঁহাদের বাক্য শুনিত, প্রতিদিন রাত্রিতে শিবাদিগকে মাংস উপহার দিত, গ্রহাচার্য্যগণের নিকট আশ্চর্য্য স্বপ্নের বৃত্তান্ত বলিত আর গৃহ প্রাঙ্গণে দিনেও শিবাবলি দিত।

(য) এই ভাবে সময় চলিয়া যাইতে লাগিলে একদিন রাত্রির অধিকাংশই অতীত হইয়াছে, আকাশও বৃদ্ধ কপোতের পক্ষের ন্যায় ধূসরবর্ণ হইয়া আসিয়াছে, এবং নক্ষত্রগণও পাণ্ডুবর্ণ হইয়া অল্পমাত্র অবশিষ্ট রহিয়াছে—এমন সময়ে রাজা স্বপ্নে দেখিলেন যে—হস্তিনীর মুখে মৃণালবলয়ের ন্যায়, প্রাসাদের উপরিস্থিত বিলাসবতীর মুখমণ্ডলে সমগ্র কলাপরিপূর্ণ চন্দ্রমণ্ডল প্রবেশ করিতেছে। (র) রাজা তৎক্ষণাৎ জাগরিত হইয়া শয্যা হইতে উঠিয়া আনন্দ-বিস্ফারিতনেত্রের আলোকে শয়ন-গৃহ শুভ্রবর্ণ করিয়া সেই সময়েই আদরের সহিত মন্ত্রী শুকনাসকে আহ্বান করিয়া আনিয়া সেই স্বপ্নের বৃত্তান্ত বলিলেন।

(ল) শুকনাসও আনন্দিত হইয়া রাজাকে কহিলেন—"মহারাজ! বহুকালের পর

---

[১] এবঞ্চ। [২] অল্পশেষ…। [৩] জরৎপারাপতপক্ষধূম্রে। [৪] স্থিতপ্রাসাদশিখর…।
[৫] বিসপল্লবম্, বিসকিসলয়ম্। [৬]…পরিপূর্ণং। [৭] বিশন্তম্। [৮) শুকনাসং সমাহূয় স্বপ্নম্। সমাহূয় শুকনাসায় তম্।

मनोरथाः! कतिपयैरेवाहोभिरसंशयमनुभविष्यति [१] स्वामी सुतमुखकमलावलोकनसुखम्। अद्य खलु मयापि निशि स्वप्ने धौतधवल-[२] वाससा शान्तमूर्त्तिना [३] दिव्याकृतिना द्विजेन विकचं चन्द्र-[४] कलावदात-दलशतम्, आलोलकेसरसहस्रजटालं, मकरन्द-(५) बिन्दु सन्दोहवर्षि-(६) पुण्डरीकमुत्सङ्गे देव्या मनोरमाया निहितं दृष्टम्। [व] आवेदयन्ति हि प्रत्यासन्नमानन्दमग्रजातानि (७) शुभानि निमित्तानि (८)। (श) किञ्च (९) अन्यदानन्दकारणमतो भविष्यति [१०]। अवितथफला हि (११) प्रायो निशावसानसमय-

---

जाताः। स्वामी अधिपतिर्भवान्। धौतं क्षालितम् अतएव धवलं वासो वसनं यस्य तेन, दिव्या मनोहरा आकृतिर्यस्य तेन, द्विजेन केनचित् ब्राह्मणेन। विकचं प्रस्फुटम्, चन्द्रकलावत् अवदातं श्वेतं दलानां शतं यस्य तत्, आलोलेन चञ्चलेन केसरसहस्रेण किञ्जल्कसमूहेन जटालं जटिलं सहस्रकेसररूपजटाविशिष्टमित्यर्थः। प्राचुर्य्यादातो मत्वर्थे आलच्। मकरन्दविन्दूनां मधुकणानां सन्दोहं समूहं वर्षतीति तत्, पुण्डरीकं श्वेतपद्मम्। मनोरमायास्तदाख्याया निजभार्य्यायाः, उत्सङ्गे क्रोडे निहितं स्थापितम्। इति मयापि स्वप्ने दृष्टमित्यन्वयः। अत्र चन्द्रकलावदातेति लुप्तोपमालङ्कारः।

(व) आवेदयन्तीति। अग्रजातानि प्रथमोत्पन्नानि शुभानि निमित्तानि लक्षणानि प्रत्यासन्नम् अचिरभाविनम् आनन्दम् आवेदयन्ति सूचयन्ति।

(श) किञ्चेति। अतोऽन्यत् किमानन्दकारणं भविष्यतीत्यन्वयः। ननु स्वप्नदर्शनमात्रमेव कथमीदृगानन्दकारणमित्याह अवितथेति। हि यस्मात्। प्रायो बाहुल्येन अवितथं सत्यम् अवश्यम्भावीत्यर्थः फलं येषां ते,

---

আমাদের ও প্রজাবর্গের অভিলাষ পূর্ণ হইয়াছে ; কারণ—অল্প দিনের মধ্যেই আপনি নিঃসংশয় পুত্রের মুখকমল দর্শনের সুখ অনুভব করিতে পারিবেন। আমিও আজ রাত্রিতে স্বপ্নে দেখিয়াছি যে—প্রক্ষালিত-শ্বেতবর্ণ-বস্ত্রপরিধায়ী, শান্তমূর্ত্তি এবং সুন্দরাকৃতি এক ব্রাহ্মণ, প্রকাশিত চন্দ্রকলার ন্যায় শ্বেতবর্ণ শতদল-সমন্বিত, জটার ন্যায় চঞ্চল কেশরসমূহ-সংযুক্ত এবং প্রচুর মধুবিন্দুবর্ষী প্রস্ফুটিত একটী শ্বেতপদ্ম, মনোরমাদেবীর ক্রোড়ে সংস্থাপন করিয়াছেন। (ব) বহুতর শুভলক্ষণ পূর্ব্বেই প্রকাশ পাইয়া অচিরভাবী কোন বিশেষ আনন্দের সূচনা করিয়া থাকে। (শ) ইহা অপেক্ষা আনন্দের কারণ আর কি হইতে পারে? রাত্রিশেষে

---

(१) असन्देहम्। (२) धौतसकल..., धौतसकलधवल...। (३) प्रशान्तमूर्त्तिना।
(४) विकचचन्द्र...। (५) जटालमकरन्द..., जटिलमकरन्द...। (६) विन्दुसीकरवर्षि।
(७) अग्रजातानि, आनन्दवातीनि, अग्रपातीनि अग्रयातीनि। (८) शुभनिमित्तानि।
(९) किं वाऽन्यत् प्रियतरं परमानन्द अधिकानन्द...। (१०) विद्यते। (११) च।

दृष्टाः (१) भवन्ति स्वप्नाः । (य) सर्वथा नचिरेणैव (२) मान्धातारमिव धौरेयं राजर्षीणां (३) भुवनानन्दहेतुमात्मजं जनयिष्यति देवी । (र) शरत्कालकमलिनीव (४) अभिनवकमलोद्गमेन गन्धगजमाह्लादयिष्यति देवम् । (ल) येनेयं दिग्गजमदलेखेवाविच्छिन्नसन्ताना क्षितिभारधारणोचिता भविष्यति कुलसन्ततिः स्वामिनः" इत्येवमभिदधानमेव तं करेण गृहीत्वा नरेन्द्रः प्रविश्याभ्यन्तरमुभाभ्यामपि ताभ्यां स्वप्नाभ्यां विलासवतीमानन्दयाञ्चकार (५) । (व)

कतिपयदिवसापगमे च देवताप्रसादात् सरसीमिव प्रतिमागतो विवेश

---

(य) अतएवाह सर्वथेति । देवी विलासवती, मान्धातारं युवनाश्वपुत्रं सूर्यवंशीयराजविशेषमिव, राजर्षीणां धौरेयं धुरन्धरं श्रेष्ठम् । अत्रोपमालङ्कारः । नचिरेणेति "नभिकर्णीकृतनकारोऽहता" इत्यादिवत् "नञ्जाजादिषु नञ् प्रसज्ये"ति नलोपाभावः । स्वप्नवृत्तान्ता तु प्रसव एव मत्स्यपुराणादावनुसन्धेयाः ।

(र) शरदिति । शरत्कालस्य कमलिनी पद्मिनी, अभिनवानां कमलानां पद्मानाम् उद्गमेन उत्पादनेन गन्धगजं पूर्वोक्तस्वप्नक हस्तिनं सम्प्रेष्टमिव, देवी अभिनवायाः कमलायाः लक्ष्म्याः पुत्रसम्पद इत्यर्थः, उद्गमेन उत्पादनेन देवं भवन्तम् । अत्र पूर्णोपमालङ्कारः । उद्गमेनेति हेतिनन्तादगमधातोरल् ।

(ल) येनेति । येन हेतुना, इयम् उत्पत्स्यमाना, स्वामिनो भवतः कुलस्य वंशस्य सन्ततिः पुत्ररूपमपत्यम्, दिग्गजस्य मदलेखा दानजलरेखेव अविच्छिन्नो विच्छेदमप्राप्तः सन्तानो वंशः प्रवाहश्च यस्याः सा तादृशी सती, क्षितिभारस्य धारणे उचिता योग्या समर्था । अत्रोपमालङ्कारः । तं शुकनासम् । नरेन्द्रो राजा । अभ्यन्तरमन्तःपुरम् । स्वप्नाभ्यां स्वप्नवृत्तान्तकथनेनेत्यर्थः ।

(व) कतीति । प्रतिमागतो प्रतिबिम्बभूतश्चन्द्रः सरसीं सरोवरमिव, गर्भो विलासवतीं विलासवत्या

---

যে সকল স্বপ্ন দেখা যায়, তাহার ফল প্রায়ই সত্য হইয়া থাকে। (য) অতএব মহিষী বিলাসবতী, অচিরকালমধ্যেই নিশ্চয় মান্ধাতার ন্যায় রাজর্ষিদিগের মধ্যে শ্রেষ্ঠ জগতের আনন্দের কারণ পুত্র জন্মাইবেন। (র) শরৎকালের পদ্মিনী যেমন নূতন পদ্ম জন্মাইয়া গন্ধহস্তীকে আহ্লাদিত করে, সেইরূপ বিলাসবতীও নূতন পুত্রসম্পদ জন্মাইয়া আপনাকে আহ্লাদিত করিবেন। (ল) যেহেতু, দিক্‌হস্তীর মদজলরেখা যেমন অবিচ্ছিন্ন ধারায় বহিত হইতে থাকে, সেইরূপ আপনার এই পুত্রসন্তান অবিচ্ছিন্নভাবে বংশরক্ষা করিয়া পৃথিবীর ভার বহন করিতে সমর্থ হইবে" শুকনাস এইরূপ বলিতে লাগিলে, রাজা হস্তদ্বারা তাঁহার হস্ত ধারণ করিয়া অন্তঃপুরে প্রবেশ করিয়া সেই দুই স্বপ্নের বৃত্তান্ত বলিয়া বিলাসবতীকে আনন্দিত করিলেন।

(ব) তাহার পর কিছু দিন অতীত হইলে দেবতাদের অনুগ্রহে সরোবরমধ্যে চন্দ্রের

---

(१) समर्थो दृष्टाः । (२) नचिरेण, अचिरेण । (३) सर्वराजर्षीणाम् । (४) शरत्कमलिनीव । (५) विनोदयाञ्चकार ।

गर्भो विलासवतीम्। (क) येन च नन्दनवनराजिरिव (१) पारिजातेन, मधुसूदनवक्षःस्थलीव कौस्तुभमणिना सा सुतरामराजत, (२) दर्पणश्रीरिव च (३) गर्भच्छलेन संक्रान्तमवनिपालप्रतिबिम्बमुवाह, शनैः शनैश्च (४) प्रतिदिनम् (५) उपचीयमानगर्भा (६) निर्भर-परिपीत-सागर-सलिल-भर-मन्थरेव मेघमाला मन्दं मन्दं सञ्चचार। (ख) मुहुर्मुहुरनुबद्धजृम्भिकम् (७) आजिह्मितलोचनम् (८) सालसं निशश्वास (९)। (ग) तथावस्थायाश्च तामभिनन्दितपानभोजना

उदरमित्यर्थः। अत्रोपमालङ्कारः। प्रतिमामयो विशति गर्भस्तु विवेश इति कालभेदादुपमातो भग्नप्रक्रमता-दोषः, स तु यथा प्रतिमामयो दर्पणं विशति तथा विवेश गर्भो विलासवतीमिति पाठेन समाधेयः। एवमुत्तरत्रापि बोध्यम्।

(क) येनेति। येन च गर्भेण। सा विलासवती, सुतरां नितान्तम्, अराजत अशोभत। अत्रोपमयोः परस्परनिरपेक्षतया संसृष्टिः। दर्पणश्रीर्मुकुरलक्ष्मीरिव। संक्रान्तम् आत्मनि पतितम्, अवनिपालस्य राज्ञस्तारापीडस्य प्रतिबिम्बं प्रतिरूपम् उवाह धारयामास "आत्मा वै जायते पुत्र" इति श्रुतेरिति भावः। अत्रोपमापह्नुत्योरङ्गाङ्गिभावेन सङ्करः। उपचीयमानो वर्द्धमानो गर्भो यस्याः सा। निर्भरमतिमात्रं परिपीतानां सागरसलिलानां भरेण भारेण, मन्थरा अलसा मेघमाला मेघश्रेणीव। अत्रोपमालङ्कारः।

(ख) मुहुरिति। अनुबद्धा कृता जृम्भिका जृम्भा यस्मिन् कर्म्मणि तद्यथा तथा, आजिह्मिते ईषत् कुटिलीकृते निद्रावेशात् सङ्कुचिते लोचने नयनद्वयं यस्मिन् कर्म्मणि तद्यथा तथा, अलसेन आलस्येन सहेति सालसं भावप्रधानोऽयं निर्देशः। निशश्वास निश्वासं त्यक्तवती। गर्भस्वभावोऽयम्।

(ग) तथेति। इङ्गितेषु आन्तरिकभावबोधकचेष्टितेषु कुशलोऽभिज्ञः परिजनः सेवकवर्गः, अनभिनन्दितम् अनादृतं पानं भोजनञ्च यया ताम्, गर्भावस्थायां योषितामाहारेष्वरुचिसम्भवादिति भावः। श्यामं वर्षाकाल-

প্রতিবিম্বের ন্যায় গর্ভ, বিলাসবতীর উদরে প্রবেশ করিল। পারিজাতবৃক্ষদ্বারা নন্দনবন-শ্রেণীর ন্যায় এবং কৌস্তুভমণিদ্বারা নারায়ণের বক্ষঃস্থলের ন্যায়, যে গর্ভদ্বারা বিলাসবতী অত্যন্ত শোভা পাইতেছিলেন। দর্পণ যেমন প্রতিবিম্ব ধারণ করে, সেইরূপ বিলাসবতীও, গর্ভচ্ছলে অন্তরে প্রবিষ্ট রাজার প্রতিবিম্ব ধারণ করিতে লাগিলেন; এবং ধীরে ধীরে প্রতিদিন তাঁহার গর্ভ বৃদ্ধি পাইতে লাগিল, তখন, সমুদ্রের জল অধিক পান করায় তাহার ভরে অলস মেঘশ্রেণীর ন্যায় বিলাসবতী ধীরে ধীরে গমন করিতেন। (খ) বারংবার হাই তুলিয়া নয়নযুগল সঙ্কুচিত করিয়া আলস্যের সহিত নিশ্বাস ত্যাগ করিতেন। (গ) পান ও ভোজনে তাঁহার অভিরুচি ছিল না, স্তনযুগলের অগ্রভাগ বর্ষাকালের ন্যায় শ্যামবর্ণ হইয়াছিল এবং

(१) येन नन्दनराजिरिव। (२) सुतरामराजत सा, सुतरामराजत देवी।
(३) क्वचित् चकारो नास्ति। (४) सा शनैः शनैश्च। (५) प्रतिदिवसम्।
[६] प्रतिदिनमुन्मुखा विमनायमानगर्भा। [७] मुहुरनुबद्धजृम्भिकम्। [८] लोचना। [९] निशश्वास।

(१) प्रावृषमिव श्यामायमान-पयोधरमुखीं केतकीमिव गर्भपाण्डुराम् (२) आलोक्येङ्गित-कुशलः परिजनः (३) विज्ञातवान्। (ग)

अथ तस्याः सर्वपरिजन-(४) प्रधानभूता सदा राजकुल-संवासचतुरा सर्वदा च (५) राजसन्निकर्ष-प्रगल्भा सर्वमङ्गलकुशला कुलवर्द्धना नाम महत्तरिका (६) प्रशस्ते दिवसे प्रदोषवेलायामभ्यन्तरास्थान-मण्डपगतं गन्धतैलावसेक-(७) ज्वलित-दीपिकासहस्रपरिवृतम् (८) उडु निकर-मध्यवर्त्तिनमिव पौर्णमासी-शशिनम्, उरगराज-फणा-(९) मणि-सहस्रान्तरालस्थितमिव नारायणम्, मूर्द्धाव-सिक्तैः प्रधान-नरेन्द्रैः (१०) परिमितैः परिवृतम्, अनतिदूरावस्थितपरिजनम्, अनन्तरमुक्तकुवेत्रासनोपविष्टेन धौतधवलाम्बरपरिधानेन नात्युल्वण-वेषेण (११)

मिव, श्यामायमाने श्यामलीभवन्तौ पयोधरयोः स्तनयोः मुखे उपरिभागद्वयं यस्यास्ताम्, अन्यत्र तु श्यामायमानं पयोधरमुखं मेघयुक्तप्रथमभागो यस्यास्ताम्। केतकीं तदाख्यं कुसुममिव, गर्भेण गर्भधारणेन पाण्डुरा श्वेताङ्गी ताम् अन्यत्र तु गर्भे मध्यदेशे पाण्डुरा स्वभावतः श्वेता ताम्, आलोक्य विज्ञातवान् गर्भवत्तया विदितवान्, ताद्दशलक्षणवत्त्वादिङ्गितकुशलत्वाच्चास्येति भावः। अत्र पदार्थहेतुकं काव्यलिङ्गं पूर्णोपमाद्वयञ्चैषां मिथो निरपेक्षतया संसृष्टिः। गर्भलक्षणमाह स्म वाभटः…

"आलस्यं गरिमा कुक्षेर्मूर्च्छा छर्दिररोचकम्। जृम्भाप्रसेकः सदनं रोमराज्याः प्रकाशनम्।"

भावप्रकाशश्च—"स्तनयोर्मुखकार्ष्ण्यं स्याद्रोमराज्युद्गमस्तथा" इत्यादि।

[घ] अथेति। अथ कुलवर्द्धना राज्ञो भूमिपालमुपसृत्य विलासवतीगर्भवृत्तान्तं विदितमकार्षीदित्यन्वयः। राजकुले राजगृहे संवासेन अवस्थानेन चतुरा सर्वकार्य्याणामवसराभिज्ञा, राज्ञः सन्निकर्षेऽपि सन्निधावपि प्रगल्भा धृष्टा, तथा सर्वमङ्गलेषु सर्वविधशुभकार्य्येषु कुशला निपुणा। महत्तरिका शूद्रजातीया दासी। "शूद्रः स्यात् पादजो दासो ग्रामकूटो महत्तरः।" इति त्रिकाण्डशेषः। अभ्यन्तरास्थानमण्डपगतं मध्यवर्त्ति सभा-

গর্ভধারণ করায় কেতকীকুসুমের ন্যায় শরীর শ্বেতবর্ণ হইয়াছিল—এই অবস্থায় তাঁহাকে দেখিয়া তিনি যে গর্ভবতী হইয়াছেন—ইহা ইঙ্গিতজ্ঞ পরিজনবর্গ সকলেই বুঝিতে পারিয়াছিল।

(ঘ) তদনন্তর তাঁহার পরিজনবর্গের মধ্যে প্রধানা, সর্ব্বদা রাজগৃহে বাস করায় সুচতুরা এবং রাজার নিকটেও প্রগল্‌ভস্বভাবা ও সকল প্রকার মঙ্গলকার্য্যে নিপুণা কুলবর্দ্ধনা নামে শূদ্রজাতীয়া কোন দাসী, কোন প্রশস্ত দিনে প্রদোষকালে মধ্যবর্ত্তী সভামণ্ডপে উপবিষ্ট রাজার নিকটে উপস্থিত হইয়া তাঁহার কাণে আস্তে আস্তে রাণী বিলাসবতীর গর্ভবৃত্তান্ত নিবেদন করিল। তখন রাজার সকল দিকে সুগন্ধি তৈলসংসিক্ত বহুতর প্রদীপ জ্বলিতেছিল,

(१) अत्रत्ये: स्वयमनेकरसवाञ्छितदानभोजनाम्। (२) गर्भच्छविपाण्डुराम्। (३) अन्तःपुरिकाजनः।
(४) सर्वसेवकवर्ग…। (५) सदा च। [६] महान्तःपुरिका सा। [७] अभिषेक…।
[८] परिवारम्। [९]…फण। [१०] नरेन्द्रैः [illegible]। [११] अनुल्बणवेषेण।

जलनिधिनेवागाधगाम्भीर्य्येण समुपारूढ़-विस्रम्भनिर्भरास्तास्ताः कथाः शुकनासेन सह (१) कुर्व्वाणम्, भूमिपालमुपसृत्य रहः कर्णमूले विदितं (२) विलासवती-गर्भवृत्तान्तमकार्षीत्। (घ)

तेन तु तस्या वचनेनाश्रुतपूर्व्वेणासम्भाव्येनामृतरसेनेव सिक्तसर्व्वाङ्गस्य सद्यः-प्ररूढ़-(३) रोमाञ्च-निकर-कण्टकिततनोरानन्दरसेन विह्वलीक्रियमाणस्य स्मित-विकसित कपोलस्थलस्य (४) परिपूरितहृदयातिरिक्तं हर्षमिव (५) दशनांशु-

---

मण्डपास्थितम्। गन्धतैलानाम् अवसेकेन प्रक्षेपेण ज्वलितानां दीपिकानां प्रदीपानां सहस्रेण समूहेन परिवृतं परिवेष्टितम्। अतएव उड़ुनिकरस्य नक्षत्रसमूहस्य मध्यवर्त्तिनं पौर्णमासीशशिनमिव स्थितम्। उरगराजस्य सहस्रमस्तकस्य अनन्तनागस्य यत् फणामणीनां सहस्रं तस्य अन्तराले मध्ये स्थितं नारायणमिव। अत्रोपमयोः परस्परनिरपेक्षतया संसृष्टिः। परिमितैरल्पसङ्ख्यकैः, मूर्द्धावसिक्तैः, कृताभिषेकैः, प्रधाननरेन्द्रैः श्रेष्ठैः भूपतिभिः। अनतिदूरे अवस्थिताः परिजनाः परिचारका यस्य तम्। अनन्तरम् अदूरं स्थानं प्राप्य उत्तुङ्गे अत्युच्चे वेत्रासने उपविष्टेन, धौतं प्रक्षालितं धवलम् अम्बरं वस्त्रं परिधानम् अधोंशुकं यस्य तेन, नात्युल्वणो नात्युज्ज्वलो वेषो यस्य तेन, जलनिधिना समुद्रेणेव, अगाधम् अन्यैरग्राह्यम् अतलस्पर्शञ्च गाम्भीर्य्यं धैर्य्यं गम्भीरता च यस्य तेन। अत्र पूर्णोपमालङ्कारः। समुपारूढ़ः समुत्पन्नः विस्रम्भनिर्भरो विश्वासातिशयो यासु ताः, तास्ता विविधा इत्यर्थः कथा आलापान्। भूमिपालं राजानं तारापीड़म्। रहो गुह्यम् अन्यैरग्राह्यं यथा स्यात्तथा।

(ङ) तेनेति। तस्याः कुलवर्द्धनायाः। असम्भाव्येन अचिन्तनीयेन। अमृतरसेन पीयूषद्रवेण सिक्तानि सर्व्वाणि अङ्गानि यस्य तादृशस्येव सतः। अत्रोत्प्रेक्षालङ्कारः। सद्यः प्ररूढ़ेन तत्क्षणादुत्पन्नेन रोमाञ्चनिकरेण कण्टकिता सञ्जातकण्टका तनुः शरीरं यस्य तस्य। स्मितेन ईषद्धास्येन विकसिते स्फीते कपोलस्थले गण्डद्वयं यस्य तस्य। दशनांशुना दन्तकिरणानां वितानच्छलेन विस्तारव्याजेन परिपूरितहृदयात् अतिरिक्तम् उद्गतं

---

সুতরাং নক্ষত্রসমূহের মধ্যবর্ত্তী চন্দ্রের ন্যায় এবং সহস্রশিরা অনন্তনাগের সহস্রসংখ্যক ফণা-মণির অন্তর্গত নারায়ণের ন্যায় রাজাকে দেখা যাইতেছিল, অভিষিক্ত কয়েক জন প্রধান রাজা তাঁহাকে পরিবেষ্টন করিয়া অবস্থান করিতেছিলেন, পরিজনবর্গও অনতিদূরে অবস্থান করিতেছিল, আর নিকটে উচ্চ বেত্রাসনে উপবিষ্ট, ধৌত, শ্বেতবস্ত্র-পরিধায়ী, কিঞ্চিৎ উজ্জ্বলবেষ এবং সমুদ্রের ন্যায় অগাধগাম্ভীর্য্যশালী মন্ত্রিপ্রবর শুকনাসের সহিত রাজা নানা-বিধ বিশ্রম্ভালাপ করিতেছিলেন।

(ঙ) অশ্রুতপূর্ব্ব ও অভাবনীয় কুলবর্দ্ধনার সেই বাক্য শুনিয়া রাজার সকল অঙ্গ যেন অমৃত-রসে সিক্ত হইয়া গেল, তৎক্ষণাৎ রোমাঞ্চসমূহ উৎপন্ন হইয়া তাঁহার সকল শরীর কণ্টকিত করিল, আনন্দে তাঁহাকে বিহ্বল করিয়া ফেলিল, ঈষৎ হাস্য করায় গণ্ডযুগল বিস্ফারিত হইল,

---

(१) क्वचित् सहशब्दो न दृश्यते। (२) विदितविलासवती···। (३)···प्रकट···।
(४)···मूलस्य। (५)···अतिरिक्तहर्षमिव।

বিতানচ্ছলেন বিকিরতো রাজ্ঞঃ শুকনাসমুখে লোলতারকমানন্দজলবিন্দুক্লিন্ন-পক্ষ্মমালং তৎক্ষণং পপাত চক্ষুঃ। (ঙ)

অনালোকিতপূর্ব্বং তু (১) হর্ষপ্রকর্ষমভিসমীক্ষ্য (২) ভূপতেঃ, কুলবর্দ্ধনাঞ্চ স্মিতবিকসিতমুখীমাগতাং দৃষ্ট্বা তস্য চার্থস্য সততং মনসি বর্ত্তমানত্বাৎ (৩) অবিদিতবৃত্তান্তোঽপি তৎকালোচিতমপরমতিমহতো হর্ষস্য কারণমপশ্যন্ শুকনাসঃ স্বয়মুৎপ্রেক্ষ্য সমুৎসর্পিতাসনঃ সমীপতরমুপসৃত্য নাতিপ্রকট-(৪) মাবভাষে—(চ) "দেব! কিমস্তি (৫) কিঞ্চিত্তস্মিন্ (৬) স্বপ্নদর্শনে সত্যম্? অত্যন্তমুৎফুল্ললোচনা (৭) হি কুলবর্দ্ধনা দৃশ্যতে, দেবস্যাপীদং প্রিয়বচনশ্রবণ-

---

হর্ষম্ আনন্দম্, বিকিরত ইব নিক্ষিপত ইব সতঃ। অত্র সাপহ্নবোৎপ্রেক্ষালঙ্কারঃ। লোলে চপলে তারকে কনীনিকাদ্বয়ং যস্য তৎ, আনন্দজলবিন্দুভিঃ আনন্দাশ্রুকণৈঃ ক্লিন্না আর্দ্রীকৃতা পক্ষ্মমালা লোমশ্রেণির্যস্য তৎ তথোক্তং চক্ষুর্নয়নদ্বয়ং শুকনাসমুখে পপাত।

(চ) অনেতি। ভূপতেস্তারাপীড়স্য, হর্ষপ্রকর্ষমানন্দাধিক্যম্ অভিসমীক্ষ্য দৃষ্ট্বা। তস্যা বিলাসবত্যা গর্ভধারণরূপস্য, অর্থস্য বিষয়স্য, সততং মনসি বর্ত্তমানত্বাৎ রাজ্ঞঃ স্বপ্নবৃত্তান্তশ্রবণেনেতি ভাবঃ। উৎপ্রেক্ষ্য 'কুলবর্দ্ধনা বিলাসবত্যা গর্ভধারণবৃত্তান্তমিবাহ' ইতি সম্ভাব্য, সমুৎসর্পিতং ত্যক্তম্ আসনং যেন সঃ, সমীপতরমতিনিকটম্। নাতিপ্রকটম্ অনতিস্পষ্টং সন্দিগ্ধতয়া সর্ব্বেষাং শ্রবণানৌচিত্যাদিতি ভাবঃ।

(ছ) দেবেতি। ননু বিষয়ান্তরমপহায় কথং তৎস্বপ্নবিষয় এব পৃচ্ছ্যতে ইত্যাহ অত্যন্তমিতি। হি যস্মাৎ উৎফুল্ললোচনা আনন্দেন বিস্ফারিতনেত্রা। তৎস্বপ্নবিষয়ভূতরাজ্ঞীগর্ভধারণবৃত্তান্তমন্তরেণ কুলবর্দ্ধনায়া ঈদৃ-মানন্দাসম্ভবাদিতি ভাবঃ। তৎসম্ভবনায়া এব ইত্যন্তরমাহ দেবস্যাপীতি। প্রিয়বচনশ্রবণকুতূহলাদিবেতি

---

হস্তের প্রভা-প্রকাশ-চ্ছলে তিনি যেন পরিপূর্ণ চিত্ত হইতে উদ্‌বৃত্ত আনন্দ ছড়াইতে লাগিলেন, নয়নের তারা দুইটি চঞ্চল হইল এবং আনন্দাশ্রুজলে নয়নের লোমগুলি ভিজিয়া গেল, এইরূপ তাঁহার নয়নযুগল তৎক্ষণাৎ শুকনাসের মুখে পতিত হইল।

(চ) পূর্ব্বে যাহা কখনও দেখা যায় নাই—এহেন রাজার আনন্দাতিশয় দর্শন করিয়া কুলবর্দ্ধনাকেও হাস্য প্রফুল্লমুখে উপস্থিত দেখিয়া এবং সেই স্বপ্নবৃত্তান্ত শুনিয়া অবধি রাণীর গর্ভধারণের কথা সর্ব্বদা মনে পড়ায় শুকনাস, প্রকৃত বৃত্তান্ত জানিতে না পারিয়াও, সেই সময়ে অত্যন্ত আনন্দের জন্য উপযুক্ত কারণ দেখিতে না পাইয়া, নিজেই মনে মনে ধারণা করিয়া, আসন পরিত্যাগপূর্ব্বক রাজার অতিনিকটে যাইয়া অনতিস্পষ্টভাবে জিজ্ঞাসা করিলেন— (ছ) "মহারাজ! সেই স্বপ্ন দেখার বিষয় কিছু সত্য হইয়াছে কি? কারণ—কুল-

---

(১) অনালোকিতপূর্ব্বং তু তম্। (২) অভিবীক্ষ্য। (৩) পরিবর্ত্তমানত্বাৎ বিপরিবর্ত্তমানত্বাৎ।
(৪) নাতিপ্রকাশম্…। (৫) অস্তি। (৬) ক্বচিৎ 'তস্মিন্' ইতি নাস্তি।
(৭) অত্যন্তোৎফুল্ললোচনা, উৎফুল্ললোচনা।

কুতূহলাদিব শ্রবণমূলমুপসর্পদুপরচয়দিব নীলকুবলয়-কর্ণপূর-শোভাম্, আনন্দ-জল-পরিপ্লুতং তরলতারকং (১) বিকসদাবেদয়তি মহৎ প্রহর্ষ-(২) কারণমীক্ষণযুগলম্, উপারূঢ়মহোৎসব-শ্রবণ-কুতূহলমুৎসুকোৎসুকং (৩) ক্লাম্যতি মে মনঃ। তদাবেদয়তু দেবঃ কিমিদম্”। (ছ)

ইত্যুক্তবতি তস্মিন্ রাজা বিহস্যাব্রবীৎ—“যদি সত্যমনয়া যথা কথিতম্, তদা (৪) সর্বমবিতথং স্বপ্নদর্শনম্। অহন্তু ন শ্রদ্দধে কুতোঽস্মাকমিয়তী ভাগ্যসম্পৎ, অভাজনং হি বয়মীদৃশানাং প্রিয়বচনশ্রবণানাম্। অবিতথবাদিনী-মপ্যহং কুলবর্দ্ধনামিবংবিধানাং কল্যাণানামসম্ভাবিতমাত্মানং মন্যমানো বিপ-

---

হেতূৎপ্রেক্ষালঙ্কারঃ। শ্রবণয়োঃ কর্ণয়োঃ মূলং সমীপম্ উপসর্পৎ গচ্ছৎ। কুলবর্দ্ধনাতঃ সুনয়নাভ্যাং কর্ণাভ্যামিব তদ্বৃত্তান্তশ্রবণমভিবাঞ্ছিতি ভাবঃ। অতএব নীলকুবলয়স্য নীলোৎপলরূপস্য কর্ণপূরস্য কর্ণাভরণস্য শোভাম্ উপরচয়দিব জনয়দিব। অত্র ক্রিয়োৎপ্রেক্ষালঙ্কারঃ। আনন্দজলেন আনন্দাশ্রুণা পরিপ্লুতং সিক্তম্, তরলে চঞ্চলে তারকে কনীনিকাদ্বয়ং যস্য তৎ, বিকসৎ বিস্ফারং প্রাপ্নুবৎ ইদং দেবস্য ভবতোঽপি ঈক্ষণযুগলং নয়নদ্বয়ং কর্তৃ, মহদিত্যাদ্য প্রহর্ষস্য বিশেষানন্দস্য কারণম্ আবেদয়তি সূচয়তি। নতু তথাপি কিমত্র, ইত্যাহ উপারূঢ়েতি। উপারূঢ়মুৎপন্নং মহোৎসবশ্রবণায় বিশালানন্দবার্ত্তাকর্ণনায় কুতূহলং কৌতুকং যত্র তৎ, উৎসুকোৎসুকং নিতান্তোৎকণ্ঠিতং মে মম মনঃ ক্লাম্যতি ক্লিশ্যতি।

(জ) ইতীতি। তস্মিন্ শুকনাসে। অনয়া কুলবর্দ্ধনয়া যথা কথিতং তদ্যদি সত্যমিত্যর্থঃ। অবিতথম্ অমিথ্যাভূতং সত্যম্। শ্রদ্দধে বিশ্বসিমি। হি যস্মাৎ। অভাজনম্ অপাত্রম্ অযোগ্যা ইত্যর্থঃ। অবিতথ-

---

বর্দ্ধনাকে আনন্দে অত্যন্ত উৎফুল্লনেত্রা দেখিতেছি, আপনারও এই নয়নযুগল প্রিয়বাক্য শুনিবার জন্য কৌতুকবশতই যেন কর্ণের নিকটে উপস্থিত হইতেছে, তাহাতে যেন নীলোৎপলময় কর্ণাভরণের শোভা জন্মাইতেছে, আনন্দাশ্রুজলে সিক্ত ও বিস্ফারিত হইতেছে, তারা দুইটিও চঞ্চল হইয়াছে, সুতরাং (এই নয়নযুগলই) গুরুতর আনন্দের কারণ প্রকাশ করিতেছে। গুরুতর আনন্দের সংবাদ শুনিবার জন্য আমারও কৌতূহল জন্মিয়াছে এবং মন অত্যন্ত উৎকণ্ঠিত হইয়া ক্লেশ ভোগ করিতেছে; অতএব আপনি বলুন—এই ব্যাপারটা কি?

(জ) শুকনাস এইরূপ বলিলে রাজা হাস্য করিয়া বলিলেন—কুলবর্দ্ধনা যাহা বলিয়াছে, তাহা যদি সত্য হয়, তবে সেই স্বপ্নবৃত্তান্ত সমস্তই সত্য; কিন্তু আমি বিশ্বাস করিতেছি না; কারণ—আমাদের এত ভাগ্যসম্পদ হইবে কোথা হইতে; যেহেতু—আমরা এই জাতীয় প্রিয়বাক্য শুনিবার পাত্র নহি। কুলবর্দ্ধনাকে পূর্ব্ব হইতেই সত্যবাদিনী বলিয়া জানি; কিন্তু আমি যে এই জাতীয় মঙ্গলসম্পদের পাত্র হইব, ইহা অসম্ভব মনে করিয়া আজ উহাকে

---

(১)···প্লুতনয়নতারকম্। (২) প্রহর্ষ···। (৩) উৎসুকম্। (৪) তথা।

रीतामिवाद्य पश्यामि । तदुत्तिष्ठ, स्वयमेव गत्वा किमत्र सत्यमिति देवीं पृष्ट्वा ज्ञास्यामि ।” (ज)

इत्यभिधाय विसृज्य (१) सकलनरेन्द्रलोकम्, उन्मुच्य स्वाङ्गेभ्यो भूषणानि कुलवर्द्धनायै दत्त्वा, तया च दत्तप्रसादानन्तरमवनितलाश्लिष्टललाटरेखया शिरःप्रणामेनाभ्यर्च्चितः, सह शुकनासेनोत्थाय हर्षविशेषनिर्भरेण त्वर्य्यमाणः (२) मनसा, पवन-चलित-नील-कुवलय-दल-लीला-विडम्बकेन दक्षिणेनाक्ष्णा परिस्फुरताऽभिनन्द्यमानः (३) तत्काल-सेवा-समुचितेन विरलविरलेन परिजनेनानुगम्यमानः पुरःसर्पिणीनामनिललोलशिखानां (४) प्रदीपिकानामालोकेन समुत्सार्य्यमाणकक्षान्तरतिमिरम् (५) अन्तःपुरमयासीत् । (झ)

वादिनीमपि पूर्व्वमादेव सत्यवादिनीमपि । असम्भावितम् आस्पदत्वेन अनिर्द्धारितम् । विपरीताम् अवितथवादिनीभिन्नरूपां मिथ्यावादिनीमित्यर्थः । अत्र अस्या उक्तिविषये ।

(झ) इतीति । विसृज्य विदाय । उन्मुच्य अवतार्य्य । दत्तो यः प्रसीदत्यनेनेति प्रसादोऽनुग्रहदानं तत्प्रसादनन्तरम्, अवनितलेन भूतलेन आश्लिष्टा प्रणामकाले स्पृष्टा ललाटरेखा भालदेशो यस्यास्तया, तया कुलवर्द्धनया शिरःप्रणामेन मस्तकावनमनेन अभ्यर्च्चितो वन्दितः । हर्षविशेषेण आनन्दबाहुल्येन निर्भरं परिपूर्णं तेन, मनसा त्वर्य्यमाणः अन्तःपुरगमने सत्वरीक्रियमाणः । पवनेन वायुना चलितं कम्पितं यत् नीलकुवलयं नीलोत्पलं तस्य लीलां शोभां विडम्बयति अनुकरोतीति तत्तथोक्तं तेन । अत्रार्थोपमालङ्कारः । परिस्फुरता अतीवस्पन्दमानेन, दक्षिणेन अक्ष्णा चक्षुषा अभिनन्द्यमानः अभीष्टलाभसूचनेन सन्तोष्यमाणः । तथाचोक्तम् “अङ्गविस्फुरणं पुंसां दक्षिणं सर्व्वकामदं । तदेव शस्यते सद्भिर्नारीणामप्रदक्षिणम् ।” तत्कालसेवायां अन्तःपुरगमनकालीनपरिचर्य्यायां समुचितेन योग्येन, विरलविरलेन अल्पाल्पेन । पुरःसर्पिणीनाम् अग्रगामिनीनाम्, अनिलेन वायुना लोलाश्चञ्चलाः शिखा यासां तासां प्रदीपिकानां दीपानां

পূর্ব্বের বিপরীত (মিথ্যাবাদিনী) বলিয়া বোধ করিতেছি । অতএব উঠ, নিজেরাই যাইয়া, এ বিষয়ে যথার্থ ঘটনা কি' ইহা মহিষীকে জিজ্ঞাসা করিয়া জানি ।”

(ঝ) এই কথা বলিয়া উপস্থিত রাজগণকে বিদায় দিয়া, নিজের অঙ্গ হইতে আভরণ উন্মুক্ত করিয়া কুলবর্দ্ধনাকে দিলেন, সেও সেই অনুগ্রহদানের পর মস্তক অবনমনপূর্ব্বক ললাটদ্বারা ভূতল স্পর্শ করিয়া রাজাকে নমস্কার করিল ; রাজা শুকনাসের সহিত উঠিলেন, অত্যন্ত আনন্দ-পরিপূর্ণ চিত্ত, তাঁহাকে, অন্তঃপুরে যাইবার নিমিত্ত দ্রুত পরিচালিত করিতে লাগিল, বায়ুকম্পিত নীলোৎপলের অনুকরণকারী দক্ষিণ-চক্ষু স্পন্দিত হইয়া তাঁহাকে সন্তুষ্ট করিতে লাগিল, সেই সময়ে পরিচর্য্যা করিবার উপযোগী অল্প অল্প পরিজন তাঁহার পশ্চাৎ

(१) विसृज्य । (२) तूर्य्यमाणः । (३) अभिवन्द्यमानः । (४) अनिललोलोच्छलच्छिखानाम् ।
(५) प्रदीपकानाम्,···कक्षान्तरतिमिरसंहतिः ।

তত্র চ সুকৃত-(১) রক্ষাসংবিধানে, নবসুধানুলেপন-(২) ধবলিতে, প্রজ্বলিত-মঙ্গলপ্রদীপে, (৩) পূর্ণকলসাধিষ্ঠিতপক্ষকে, (৪) প্রত্যগ্রলিখিত-মঙ্গল্যালেখ্যোজ্জ্বলভিত্তিভাগ-(৫) মনোহারিণি, সমুপরচিত-সিত-বিতান-পর্য্যন্তাববদ্ধ-মুক্তাগুণে, (৬) মণিপ্রদীপ প্রহত-(৭) তিমিরে বাসভবনে, (৮) (ঞ) ভূমি-(৯)

---

আলোকেন প্রভয়া, সমন্তমাধ্যমানা স দূরীক্রিয়মাণানি কক্ষান্তরাণাম্ অগ্রায়বর্ত্তিনামন্যেষাং প্রকোষ্ঠানাং তিমিরাণ্যন্ধকারা যস্মিন্ তৎ।

(ঞ) তত্রেতি। তত্র অন্তঃপুরে বাসভবনে শয়নতলমধিশয়ানাং বিলাসবতীং রাজা দদর্শেত্যন্বয়ঃ। সুকৃতাদীনি সপ্তম্যন্তানি পদানি বাসভবন ইত্যস্য বিশেষণানি। সুষ্ঠু সম্যক্ কৃতং মণিমন্ত্রৌষধাদিনা বিহিতং রক্ষাসংবিধানং ভাবিশত্রুাদিভ্যো গর্ভরক্ষণবিধির্যস্মিন্ তস্মিন্। নবেন নূতনেন সুধানুলেপনেন চূর্ণাদিদ্রব্যলেপনেন ধবলিতে শুভ্রীকৃতে। "সুধা প্রাসাদভাগদ্রব্যং সুধা বিদ্যাৎ সুধাঽমৃতম্।" ইত্যাদ্যনেকার্থধ্বনিমঞ্জরী। প্রজ্বলিতো মঙ্গলপ্রদীপো যস্মিন্ তস্মিন্। মঙ্গলার্থঃ প্রদীপ ইতি মঙ্গলপ্রদীপঃ "শাকপার্থিবাদয়শ্চ" ইতি মধ্যপদলোপী সমাসঃ। পূর্ণকলসেন জলপূর্ণকুম্ভেন অধিষ্ঠিত আশ্রিতঃ পক্ষকো দ্বারপার্শ্বো যস্য তস্মিন্। "পক্ষকস্তু পুমান্ পার্শ্বদ্বারে চ পার্শ্বমাত্রকে।" ইতি মেদিনী। প্রত্যগ্রং নূতনং যথা স্যাত্তথা লিখিতানি চিত্রিতানি যানি মঙ্গল্যানি ইতস্ততঃ মঙ্গলজনকানি আলেখ্যানি চিত্রাণি তৈরুজ্জ্বলো যো ভিত্তিভাগস্তেন মনোহারিণি। সমুপরচিতস্য উপরি যোজিতস্য সিতবিতানস্য শুভ্রচন্দ্রাতপস্য পর্য্যন্তেষু প্রান্তদেশেষু অববদ্ধো গ্রথিতো মুক্তাগুণো মুক্তামালা যস্মিন্ তস্মিন্। তথা মণয় এব প্রদীপাস্তৈঃ প্রহতানি নাশিতানি তিমিরাণি অন্ধকারা যস্মিন্ তস্মিন্। বাসভবনে নিবাসগৃহে।

---

পশ্চাৎ যাইতে লাগিল, বায়ু কম্পিত-শিখা সমন্বিত অগ্রগামী প্রদীপসমূহের আলোকে অন্যান্য প্রকোষ্ঠের অন্ধকার দূর করিতে লাগিল, এই অবস্থায় রাজা অন্তঃপুরে গমন করিলেন।

(ঞ) রাজা অন্তঃপুরে যাইয়া দেখিলেন—রাণী বিলাসবতী বাসগৃহে, শয্যার উপরে শয়ন করিয়া রহিয়াছেন। মণি, মন্ত্র ও ঔষধাদিদ্বারা সেই বাসগৃহে সম্পূর্ণ রক্ষাবিধান করা হইয়াছিল, এবং নূতন চূর্ণলেপন করিয়া সেই বাসগৃহকে শুভ্রবর্ণ করা হইয়াছিল, তাহার মধ্যে মঙ্গলপ্রদীপ জ্বলিতেছিল, দ্বারের পার্শ্বে পূর্ণকুম্ভ স্থাপিত ছিল, দেওয়ালে নূতন চিত্রিত মঙ্গলকর চিত্রসমূহে সে ঘরখানি সুন্দর দেখাইতেছিল, উপরে একখানি শ্বেতবর্ণ চন্দ্রাতপ খাটাইয়া তাহার চারিদিকে মুক্তার ঝালর ঝুলান হইয়াছিল, আর মণিময় প্রদীপের

---

(১) তত্র বসুকৃত…, তত্র বহুকৃত। (২) নবসুধালেপ…। (৩)…দীপে। (৪)…অধিষ্ঠিতে…দ্বার-পক্ষকে। (৫)…মঙ্গল্যালেখ্য…উজ্জ্বলিত…ভাগে। (৬)…সিতবিতানে বিতান,…পর্য্যন্তগ্রথিতমুক্তাগণে। (৭)…প্রনিহত…। [৮] বাসভুবনে। [৯] ভূমি…।

লিখিত-পত্রলতা-কৃত-রক্ষা-পরিক্ষেপম্, শয়ন শিরোভাগ-বিন্যস্ত ধবল-(১) নিদ্রা-কলসম্, আবদ্ধ-বিবিধৌষধি-মূল-যন্ত্র-(২) পবিত্রম্, অবস্থাপিত-রক্ষা-শক্তি-বলয়ম্, ইতস্ততো বিকীর্ণ-(৩) গৌরসর্ষপম্, অবলম্বিত-(৪) বাল-যোক্ত্র-গ্রথিত-লৌহ-পিপ্পলপত্রম্, (৫) আসক্ত-হরিতারিষ্টপল্লবম্, উত্তুঙ্গ-পাদপীঠ-(৬) প্রতিষ্ঠিতম্, ইন্দু-দীধিতি-ধবল-প্রচ্ছদ-পটম্, অচলরাজ-শিলাতল-বিশালম্, গর্ভি-

(ট) ভূমীতি। অতঃপ্রভৃতি ক্লীবলিঙ্গদ্বিতীয়ান্তপদানি শয়নতলমিত্যস্য বিশেষণানি। ভূমৌ লিখিতয়া শয্যায়া এব সমন্তাদ্বিহিতয়া পত্রলতয়া পত্রান্বিতকল্পলতয়া আলিম্পনেনেত্যর্থঃ কৃতো রক্ষাপরিক্ষেপো গর্ভরক্ষার্থং পরিবেষ্টনং যস্য তত্। শয়নে শয়নকালে যঃ শিরোভাগস্তস্মিন্ বিন্যস্তঃ স্থাপিতঃ ধবলো রৌপ্যময়ত্বাৎ শ্বেতো নিদ্রাকলসো নিদ্রাকুম্ভো যস্মিন্ তত্। আবদ্ধানি স্থাপিতানি বিবিধানি নানাপ্রকারাণি ওষধয়ো লতাবিশেষাঃ মূলানি তল্লতামূলানি যন্ত্রাণি লাঙ্গলচক্রাদীনি পবিত্রাণি গোরোচনাদিপবিত্রদ্রব্যাণি যস্মিন্ তত্। অবস্থাপিতানি রক্ষার্থং শক্তীনাং ব্রাহ্মীবৈষ্ণবীপ্রভৃতীনাং বলয়ানি মন্ত্রপূতকটকানি যস্মিন্ তত্। ইতস্ততো বিকীর্ণা বিক্ষিপ্তা গৌরসর্ষপাঃ শ্বেতসর্ষপা যস্মিন্ তত্। অবলম্বিতানি স্থাপিতানি বালযোক্ত্রেণ ক্ষুদ্ররজ্জুবিশেষেণ গ্রথিতানি গুম্ফিতানি লৌহানি লৌহখণ্ডানি পিপ্পলপত্রাণি অশ্বত্থদলানি চ যস্মিন্ তত্। "আবন্ধো যোক্ত্রং যোত্রম্।" "বোধিদ্রুমশ্চলদলঃ পিপ্পলঃ কুঞ্জরাশনঃ। অশ্বত্থে" ইতি চামরঃ। আসক্তাঃ পরস্পরলগ্নাঃ হরিতা নূতনত্বাৎ পলাশবর্ণাঃ অরিষ্টপল্লবা নিম্বকিসলয়ানি যস্মিন্ তত্। "অরিষ্টঃ ফেনিলে নিম্বে লশুনে কাককঙ্কয়োঃ।" ইতি বিশ্বঃ। গর্ভিণীশয্যায়াং শুভানাং দ্রব্যবিশেষাণাং সংস্থাপনং খলু গর্ভরক্ষার্থং তদানীন্তনমহিলাচারাদিতি বোধ্যম্। উত্তুঙ্গেষু অত্যুন্নতেষু পাদপীঠেষু পর্য্যঙ্কপাদাধারকাষ্ঠবিশেষেষু প্রতিষ্ঠিতম্ অবস্থিতম্। তেষু পর্য্যঙ্কস্য প্রতিষ্ঠিতত্বাৎ পর্য্যঙ্কোপরিপাতিতশয্যায়া অপি তৎপ্রতিষ্ঠিতত্বমুপচারাৎ। ইন্দুদীধিতিবৎ চন্দ্রকিরণবৎ ধবলঃ প্রচ্ছদপটঃ আস্তরণবস্ত্রং যস্মিন্ তত্। অত্র লুপ্তোপমালঙ্কারঃ। তথা অচলরাজস্য হিমালয়স্য শিলাতলবৎ বিশালপ্রস্তরখণ্ডবৎ বিশালং বিস্তৃতম্। অত্রাপি লুপ্তোপমা-

আলোকে সে ঘরের অন্ধকার দূর করিয়াছিল; (ট) আবার রাণী যে শয্যায় শয়ন করিয়াছিলেন, তাহার চারিদিকে মাটীতে আলিপনা দিয়া রক্ষামণ্ডল করা হইয়াছিল, শিয়রে একটি শ্বেতবর্ণ নিদ্রাকুম্ভ স্থাপিত ছিল, নানাপ্রকার ঔষধি, মূল (কুমু'রের লতা ও তাহার মূল প্রভৃতি), লাঙ্গলপ্রভৃতি যন্ত্র ও গোরোচনাপ্রভৃতি পবিত্র দ্রব্য সেই শয্যার সংস্পর্শে রাখা হইয়াছিল, গর্ভরক্ষার জন্য ব্রাহ্মী ও বৈষ্ণবীপ্রভৃতি মাতৃগণের মন্ত্রে অভিমন্ত্রিত করিয়া কতকগুলি বালা সেই শয্যার উপরে রাখা হইয়াছিল, চারিদিকে শ্বেত সরিষে ছড়ান ছিল, ছোট দড়ি দিয়া গাঁথা কতকগুলি লোহার খণ্ড ও অশ্বত্থের পাতা এবং পরস্পর সংলগ্ন হরিতবর্ণ কতকগুলি নিমের পল্লব সেই শয্যার উপরে সংস্থাপিত ছিল, উচ্চ উচ্চ কাষ্ঠখণ্ডের উপরে সেই পর্য্যঙ্কের পায়াগুলি স্থাপিত ছিল, চন্দ্রকিরণের ন্যায় শুভ্রবর্ণ একখানি আস্তরণ বস্ত্র (চাদর) তাহার উপরে পাতিত ছিল আর সেই শয্যাখানি হিমালয়ের বিশাল প্রস্তরখণ্ডের

(১)···রজতধবল···। (২)···মন্ত্র···। (৩) বিপ্রকীর্ণ···। [৪] অবলম্বি···।
(৫) বালযোক্ত্রগ্রথিত···, লৌহ, লৌহিত,···দলম্। (৬) পাদপীঠী···।

চিতং শয়নতলমধিশয়ানাম্, (ট) কনকপাত্র-পরিগৃহীতৈঃ অবিচ্ছিন্ন-(১) বিরলাবস্থিত-দধিলবৈঃ জল-তরঙ্গ-তরল-শ্বেত-(২) শালি-সিক্থ-নিকরৈঃ অগ্রথিত-কুসুম-(৩) সনাথৈঃ পূর্ণভাজনৈঃ, (ঠ) অখণ্ডিতানন-মৎস্য-পটলৈশ্চ প্রত্যগ্র-পিশিতপিণ্ড-মিশ্রৈঃ, (ড) অবিচ্ছিন্ন-সলিলধারানুগম্যমান-(৪) মার্গৈঃ, পটলকপ্রজ্বলিতৈশ্চ শীতলপ্রদীপৈঃ, (ঢ) গোরোচনামিশ্রগৌরসর্ষপৈশ্চ সলিলাঞ্জ-

---

লঙ্কারঃ। গর্ভোচিতং গর্ভবতীশয়নযোগ্যং শয়নতলং শয্যোপরিভাগম্ অধিশয়ানাম্ আশ্রিত্য শয়িতাম্। বিশাল-অস্যা বিশেষণমেতৎ।

(ঠ) কনকেতি। অত্র পূর্ণভাজনৈরিত্যন্তানি সিক্থনিকরৈরিত্যস্য বিশেষণানি। আচারেষু তদ্দেশীয়-কৌলিকব্যবহারেষু কুশলাভিজ্ঞস্তেন, অন্তঃপুরজরতীজনেন অন্তঃপুরস্থবৃদ্ধস্ত্রীলোকবর্গেণ। অতো তদন্তর্গতেন কেনচিৎ বৃদ্ধস্ত্রীজনেন কর্ত্রেত্যর্থঃ। কনকপাত্রৈ স্বর্ণভাজনৈ পরিগৃহীতৈঃ স্থাপিতৈঃ। অবিচ্ছিন্নাঃ পরস্পর-সংলগ্নাঃ, বিরলা অল্পাঃ, অবস্থিতা দধিলবা দধিবিন্দবো যেষু তৈঃ। অগ্রথিতানি সূত্রেণাগুম্ফিতানি বিকীর্ণানি যানি কুসুমানি তৈঃ সনাথাঃ সংযুক্তাস্তৈঃ। তথা পূর্ণং ব্যাপ্তং ভাজনং পাত্রং যৈস্তৈঃ। জলতরঙ্গবৎ তরলাশ্চঞ্চলাঃ, তদীয়বাষ্পস্য তরলতয়া তেষামপি তরলবদ্দৃশ্যমানত্বাদিতি ভাবঃ, শ্বেতাঃ শুভ্রাঃ, শালিসিক্থ-নিকরাঃ সদ্যঃপক্বশালিতণ্ডুলান্নসমূহাস্তৈঃ করণৈঃ। তরঙ্গশব্দস্য নানার্থতয়া বস্ত্রাদীনামপ্যভিধানাত্তদ্ব্যা-বৃত্তয়ে জলপদমিতি নাধিকপদত্বদোষঃ। শালিঃ হৈমন্তিকং ধান্যম্।

(ড) অখণ্ডিতেতি। অপরেণ কেনচিজ্জরতীজনেনেতি কর্তৃপদমাদায় যোজনীয়ম্। প্রত্যগ্রাণি নূতনানি যানি পিশিতপিণ্ডানি মাংসখণ্ডানি তন্মিশ্রৈঃ তৎসংযুক্তৈঃ অখণ্ডিতানি অচ্ছিন্নানি আননানি মুখানি যেষাং তাদৃশানাং মৎস্যানাং পটলৈঃ সমূহৈশ্চ। ক্রিয়মাণাবতারণকমঙ্গলামিত্যগ্রিমেণান্বয়ঃ।

(ঢ) অবিচ্ছিন্নেতি। অবিচ্ছিন্নয়া সলিলধারয়া অনুগম্যমানো মার্গঃ পন্থা যেষাং তৈঃ, কেনচিজ্জরতীজনেন পশ্চাৎ পশ্চাৎ ক্রিয়মাণাবিচ্ছিন্নজলধারৈরিত্যর্থঃ। পটলকেষু ক্ষুদ্রপিটকেষু তন্মধ্যেষ্বিত্যর্থঃ প্রজ্বলিতৈঃ। "পটলং তিলকে নেত্ররোগে ছদিষি সঞ্চয়ে। পিটকে পরিবারে চ"তি হৈমঃ। শীতলপ্রদীপৈশ্চ অনেকজরতীজনৈর্ধার্যমাণৈঃ কর্পূরপ্রদীপৈশ্চ করণৈঃ। ক্রিয়মাণাবতারণকমঙ্গলামিত্যনেনান্বয়ঃ। "শীতলঃ (পুং)…কর্পূরভেদঃ" ইতি শব্দকল্পদ্রুমঃ।

---

ন্যায় বিস্তৃত এবং গর্ভবতীর শয়নের উপযুক্ত ছিল। (ঠ) কোন বৃদ্ধ স্ত্রীলোক রাণীর জন্য স্বর্ণ-পাত্রে পরিপূর্ণ করিয়া শুভ্রবর্ণ শালিতণ্ডুলের অন্ন লইয়া আসিতেছিল, সেই অন্নের উপরে পরস্পর সংলগ্ন অথচ অল্প অল্প দধিবিন্দু এবং অসংলগ্নভাবে কতকগুলি পুষ্প প্রক্ষিপ্ত ছিল আর সেই অন্ন হইতে জলতরঙ্গের ন্যায় বাষ্প উঠিতেছিল, (ড) কোন বৃদ্ধ স্ত্রীলোক, কতক-গুলি অচ্ছিন্নমুখ মৎস্য নিয়া আসিতেছিল, তাহাতে নূতন মাংসখণ্ডও মিশ্রিত ছিল; (ঢ) কতকগুলি বৃদ্ধ স্ত্রীলোক, পেটড়ার (লণ্ঠনের) মধ্যে প্রজ্বলিত কতকগুলি কর্পূরের প্রদীপ

---

(১) অবিচ্ছিন্ন…। (২)…শ্বেত…। (৩)…কুসুমাঞ্জলি…। (৪)…গম্যমান…।

सूर्य्येण (१) अन्धकारेण, अघर्म्मकालोपस्थितेन भूमिगृहेण, अनुदिततारागण-निवहेन बहुलनिशाप्रदोषेण, अपतित-सलिलेन (२) जलधरसमयेन, अभ्रान्त-भुजङ्गेन (३) रसातलेन, (ल) हरिचरणेनेव संवर्द्धमानेन त्रिभुवनमलङ्घत रजसा । (व)

विकचकुवलयवनमिव नवोदकेन गगनतलमवष्टभ्यमानमलक्ष्यत क्षीरोद-

रजसो नेत्रनिमीलनहेतुतया निद्रासाम्यम् अथ च चेतनानपहरणात्ततो वैशिष्ट्यमिति भावः । अतएवात्र अधिकारूढवैशिष्ट्यरूपकमलङ्कारः । न अवगमितः अस्तगमनादवगमितः सूर्य्यो येन तेन, अन्धकारेण तिमिररूपेण । सर्वपदार्थावरणहेतुत्वादन्धकारसाम्यम् अथ च सति सूर्य्ये प्रादुर्भावात्ततो वैषम्यमिति भावः । पूर्ववदलङ्कारः । अघर्म्मकाले अग्रीष्मकाले उपस्थितेन भूमिगृहेण भूगर्भान्तर्गतगृहस्वरूपेण । ग्रीष्मकाले हि लोकैः रविकिरण-सन्तापशान्तये भूगर्भगृहमाश्रीयते, रविकिरणनिवारणहेतुतया भूगर्भगृहसाम्यम् अथ च अग्रीष्मकाले उपस्थितत्वात्ततो वैषम्यमिति भावः । पूर्ववदलङ्कारः । न उदितस्तारागणानां निवहः समूहो यत्र तेन, बहुलनिशाप्रदोषेण कृष्णपक्षरजनीमुखस्वरूपेण । निविड़ान्धकारापगमात् कृष्णपक्षरजनीमुखसाम्यं तारागणानुदयाच्च तद्वैषम्यमिति भावः । पूर्ववदलङ्कारः । ताराणामतिप्राचुर्य्यद्योतनार्थं गणनिवहेति पर्य्यायशब्दद्वयोपादानम् । न पतितं सलिलं वर्षाजलं यत्र तेन, जलधरसमयेन वर्षाकालेन । सूर्य्यावरणाद्वर्षाकालसाम्यं वृष्टिजलाभावाच्च तद्वैषम्यमिति भावः । पूर्ववदलङ्कारः । न भ्रान्ता विचरिताः भुजङ्गाः सर्पा यत्र तेन, रसातलेन पातालस्वरूपेण । गाढ़ान्धकारप्रादुर्भावात् पातालसाम्यं सर्पविचरणाभावाच्च ततो वैषम्यमिति भावः । पूर्ववदेवालङ्कारः ।

(ल) हरीति । हरेर्वामनस्य चरणेनेव संवर्द्धमानेन रजसा भूरेणुना त्रिभुवनम् अलङ्घत व्याप्यत । अत्र त्रिभुवनलङ्घनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः पूर्णोपमा चानयोरेकाश्रयानुप्रवेशरूपः सङ्करः ।

(व) विकचेति । क्षीरोदस्य सागरस्य फेनवत् पाण्डुना, नवोदकेन नूतनवृष्टिजलेन, विकचकुवलयवनमिव प्रस्फुटितनीलोत्पलवनमिव, क्षीरोदफेनपाण्डुना क्षितिक्षोदेन भूरेणुना, गगनतलम् अवष्टभ्यमानम् आश्लिष्यमाणं व्याप्यमानम्, अलक्ष्यत लोकैरिति शेषः । अत्र लुप्तोपमासङ्कीर्णा श्रौत्युपमालङ्कारः ।

ধূলিসমূহ সকলেরই নিদ্রাস্বরূপ হইয়াছিল বটে, কিন্তু কাহারও চৈতন্য হরণ করে নাই; অন্ধকারস্বরূপ প্রাদুর্ভূত হইয়াছিল বটে, কিন্তু সূর্য্যাস্তের পর প্রাদুর্ভূত হয় নাই; ভূতলের অভ্যন্তরস্থিতগৃহস্বরূপ হইয়াছিল বটে, কিন্তু গ্রীষ্মকালে উপস্থিত হয় নাই; কৃষ্ণপক্ষের প্রদোষকালস্বরূপ দেখা যাইতেছিল বটে, কিন্তু নক্ষত্রসমূহ উঠে নাই; বর্ষাকালস্বরূপ হইয়াছিল বটে, কিন্তু বৃষ্টি পড়ে নাই; পাতালস্বরূপ বোধ হইতেছিল বটে, কিন্তু সর্পগণ ভ্রমণ করে নাই, (ল) এইরূপ সেই ধূলিসমূহ, বামনদেবের চরণের ন্যায় বৃদ্ধি পাইতে পাইতে ত্রিভুবন ব্যাপ্ত করিয়াছিল।

(ব) নূতন বৃষ্টির জলে যেমন প্রস্ফুটিত নীলোৎপলবন আচ্ছন্ন করে, সেইরূপ ক্ষীরোদ সাগরের ফেনের ন্যায় শুভ্রবর্ণ ভূতলের ধূলিসমূহ গগনতল আচ্ছন্ন করিয়াছে বলিয়া লোকে

(१) अनपहृतचेतनेनानवगमितसूर्य्येण । (२) पतितसलिलेन । (३)···भुजङ्गमेन ।

फेनपाण्डुना (१) क्षितिलोठेन (व)। बहलरजोधूसरितं शिशिरकिरणबिम्बमवचूलचामरमिव निष्प्रभमभवत् (श)। दुकूलपट (२) धवला कदलिकेव कलुषतामाजगाम गगनापगा (ष) नरपालबलभरमतिगुरुमसहमाना (३) पुनरिव भारावतारणार्थममरलोकमारुरोह रजोमिषेण (४) मही (स)। निःशेष-निपीतातपम् (५) अन्तर्दह्यमानमिव जलधिजलेषु धूसरित-रवि रथ-ध्वज-पटमपतदवनिरजः (ह)। मुहूर्त्तेन च गर्भवासमिव, संहारसागरजलमिव, कृतान्तजठर-

(श) बहलेति। बहलैः रजोभिर्धूलिभिः धूसरितं धूसरवर्णीकृतम्, शिशिरकिरणबिम्बं सूर्य्यमण्डलम्, अवचूलचामरमिव ध्वजाग्रलम्बनवस्त्रबद्धं चामरमिव। उपमालङ्कारः।

(ष) दुकूलेति। दुकूलपटवत् सूक्ष्मवसनवत् धवला, गगनापगा स्वर्नदी मन्दाकिनी, कदलिका तदीयपताकेव, कलुषतामाविलताम् आजगाम प्राप, तद्रजःसम्पातादिति भावः। अत्र मन्दाकिन्याः कालुष्यप्राप्त्यसम्बन्धेऽपि तत्सम्बन्धोक्तिरतिशयोक्तिरलङ्कारो लुप्तोपमाश्रौतोपमाभ्यां सङ्कीर्य्यते।

(स) नरेति। अतिगुरुम् अत्यन्तविशालं नरपालबलभरं राजसैन्यभारम् असहमाना वोढुमशक्नुवती मही पृथिवी, भारावतारणार्थं रजोमिषेण धूलिच्छलेन, पुनरमरलोकं स्वर्गम् आरुरोहेव, रावणकंसादिभारावतारणार्थं पूर्वमारोहणवदिति भावः। अत्र सापह्नवा क्रियोत्प्रेक्षालङ्कारः।

(ह) निःशेषेति। धूसरिता धूसरवर्णीकृतो रविरथस्य ध्वजपटः पताका येन तेन, तथा निःशेषेण साकल्येन निपीतो यस्य आतपः सूर्य्यालोको येन तत्, अत एवातपपानात् अन्तर्दह्यमानमिव अभ्यन्तरे सन्तप्यमानमिव सत्, अवनिरजो भूतलधूलिः, जलधिजलेषु अपतत्, मज्जनस्य शीतक्रियायाः शान्तिकरत्वादिति भावः। अत्र तद्धूलेर्जलधिजलेषु पतनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः, पदार्थहेतुकं काव्यलिङ्गम्, क्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावेन सङ्करः।

(क्ष) मुहूर्त्तेनेति। किञ्च पृथिवी मुहूर्त्तेन क्षणेनेव गर्भवासं मातुर्गर्भाशयं विवेशेव। इत्थं सर्वत्रान्वयः

দেখিতেছিল। (শ) সেই ধূলিরাশিতে ধূসরবর্ণ সূর্য্যমণ্ডল, পতাকাবদ্ধ চামরের ন্যায় প্রভাশূন্য হইয়া গেল। (ষ) সূক্ষ্ম বস্ত্রের ন্যায় শুভ্রবর্ণ মন্দাকিনীর জল, সেই সৈন্যগণের পতাকার ধূলিরাশিতে মলিনতা প্রাপ্ত হইল। (স) রাজসৈন্যগণের গুরুতর ভার বহন করিতে অসমর্থ হইয়া পৃথিবী যেন, সেই ভার নামাইবার জন্য ধূলিচ্ছলে পুনরায় স্বর্গে আরোহণ করিতে লাগিল। (হ) সেই ধূলিরাশি সূর্য্য রথের পতাকা ধূসরবর্ণ করিয়া সূর্য্যের সমস্ত কিরণ পান করিয়াছিল বলিয়া অন্তরে যেন দগ্ধ হইতেছিল, তাই সমুদ্রের জলে যাইয়া পড়িতেছিল। (ক্ষ) এবং ক্ষণকালমধ্যে পৃথিবী যেন মাতার গর্ভে, প্রলয়কালীন সমুদ্রের জলে, যমের উদরে,

(१) क्षीरोदपाण्डुना। (२ दुकूलपट…। (३)…भरमसहमाना। (४) रजोमिषेण। (५)…पीतातपम्।

মিব, মহাকালমুখমিব, নারায়ণোদরমিব, ব্রহ্মাণ্ডমিব বিবেশ পৃথিবী (অ)। মৃন্ময় ইব বভূব দিবসঃ পুস্তময্য ইব (১) অকাশিরে ককুভঃ, (২) রেণুরূপেণ পরিণতমম্বরতলম্, (৩) একমহাভূতময়মিব ত্রৈলোক্যমাসীৎ। (ক)

অথ নিজমদোষ্মসন্তপ্তানাং দন্তিনাং (৪) দিশি দিশি করবিবরবিনিঃসৃতৈঃ (৫) অবিরলৈঃ ক্ষীরোদ ক্ষোদ-ধবলৈঃ (৬) শীকরাসারৈঃ কর্ণপল্লব-প্রহতি-বিসৃতেন (৭) চ বিসর্পতা দানজলবিন্দুদুর্দ্দিনেন, হ্রেষারববিপ্রকীর্ণৈশ্চ বাজিনাং লালা-

তদ্রজসাম্বকারিতত্বাদিতি চ ভাবঃ। সংহারে প্রলয়সময়ে যঃ সাগরস্তজ্জলম্। ব্রহ্মাণ্ডং ব্রহ্মকোষম্। অত্র প্রত্যেকবাক্যে ক্রিয়োৎপ্রেক্ষালঙ্কারঃ।

(ক) মৃন্ময় ইতি। দিবসো মৃন্ময়ো মৃদ্বিকার ইব বভূব, ককুভো দিশঃ পুস্তময্যো ধূলিলেপবিকারা ইব সত্যঃ অকাশিরে বিরেজিরে। অনয়োঃ প্রত্যেকং গুণোৎপ্রেক্ষালঙ্কারঃ। "পুস্তং (ক্লী) লেপ্যাদিশিল্পকর্ম্ম···।" ইতি শব্দকল্পদ্রুমঃ। অম্বরতলং কর্ত্তৃ, রেণুরূপেণ পরিণতমিব, অত্র ক্রিয়োৎপ্রেক্ষালঙ্কারঃ। তথা ত্রৈলোক্যং কর্ত্তৃ, একমহাভূতময়মিব কেবলক্ষিতিময়মিব আসীৎ, অন্যেষাং জলাকাশাদীনাং ধূলিভিস্তিরোহিতত্বাদিতি ভাবঃ। অত্রাপি গুণোৎপ্রেক্ষালঙ্কারঃ।

অস্তো ধূলিবর্ণনমপহায় যদি তু সেনায়াঃ প্রত্যক্ষমবর্ণয়িষ্যৎ তদা খল্বিতোঽপি মহামনোরমমভবিষ্যৎ।

(খ) অথেতি। নিজমদোষ্মণা স্বকীয়তেজস্তাপেন সন্তপ্তানাম্, দন্তিনাং হস্তিনাম্। করবিবরবিনিঃসৃতৈঃ শুণ্ডাচ্ছিদ্রনির্গতৈঃ, অবিরলৈর্ঘনৈঃ, ক্ষীরোদক্ষোদধবলৈঃ ক্ষীরোদসাগরজলবিন্দুবৎ শুভ্রৈঃ শীকরাসারৈর্জলবিন্দুবৃষ্টিভিঃ, তথা, কর্ণপল্লবাভ্যাং বিস্তৃতকর্ণাভ্যাং প্রহত্যা তাড়নেন বিসৃতং বিস্তৃতং তেন, বিসর্পতা প্রসরতা, দানজলবিন্দূনাং দুর্দ্দিনেন বৃষ্ট্যা, তথা হ্রেষারবৈর্বিপ্রকীর্ণানি বিক্ষিপ্তানি তৈঃ, বাজিনামশ্বানাং যে লালাজললবা মুখনির্গতজলবিন্দবস্তেষাং জালকৈঃ সমূহৈশ্চ, রজঃ স তস্মিন্ ধূলিরাশৌ উপশমিতে নিবারিতে সতি। অত্র দৈলাহস্ত্যরজসামুপশমনাসম্বন্ধেঽপি তৎসম্বন্ধোক্তেরতিশয়োক্তিরলঙ্কারঃ। তথা হিস্তু পুনরপি জাত আলোকঃ

মহাকালের মুখে, নারায়ণের উদরে এবং ব্রহ্ম-কোষের ভিতরে প্রবেশ করিল। (ক) এবং দিনটা যেন মৃত্তিকাময় হইয়া গেল; দিক্‌সমূহ যেন মৃত্তিকালেপময় হইয়া দীপ্তি পাইতে লাগিল, আকাশ যেন ধূলিরূপে পরিণত হইল এবং ত্রিভুবন যেন কেবল পৃথিবীময় হইয়া গেল।

(খ) তদনন্তর স্বকীয় তেজের উত্তাপে উত্তপ্ত হস্তিগণের শুণ্ড হইতে, ক্ষীরোদসাগরের জলবিন্দুর ন্যায় শুভ্রবর্ণ জলবিন্দুসমূহ নির্গত হইয়া সকল দিকে পড়িতে লাগিল; বিশাল কর্ণযুগলের তাড়নে বিক্ষিপ্ত হইয়া মদজলবৃষ্টি, সকল দিকে ছড়াইয়া যাইতেছিল; আবার অশ্বগণের মুখ হইতে হ্রেষারবে বিক্ষিপ্ত হইয়া লালাময় জলবিন্দুসমূহ নির্গত হইতে লাগিল;

(১) প্রস্তময্য ইব। (২) দিশঃ। (৩) অম্বরম্। (৪) ক্বচিৎ দন্তিনামিতি পাঠো নাস্তি। (৫)···নিঃসৃতৈঃ। (৬) ক্ষীরোদধবলৈঃ। (৭)···বিসৃতেন।

जललव-आसक्ते उपशमिते रजसि, पुनरपि जातालोकासु (१) दिक्षु, सागरसलिलादिव (२) उन्मग्नमालोक्य तदपरिमाणं बलमुपजातविस्मयः सर्वतो दत्तदृष्टिर्वैशम्पायनश्चन्द्रापीड़माबभाषे। (ख)

"युवराज! किं न जितं (३) देवेन महाराजाधिराजेन तारापीड़ेन यज्जेष्यसि; का दिशो न वशीकृताः, या वशीकरिष्यसि; कानि दुर्गाणि न प्रसाधितानि यानि प्रसाधयिष्यसि; कानि द्वीपान्तराणि नात्मीकृतानि यान्यात्मीकरिष्यसि; कानि रत्नानि नोपार्जितानि यान्युपार्जयिष्यसि; (ग) के वा न प्रणता राजानः, कैर्न विरचितः शिरसि बाल-कमल कुड्मल-कोमलः सेवाञ्जलिः, कैर्न (४) मसृणीकृताः प्रतिबद्धहेमपट्टैर्ललाटैः सभाभुवः, कैर्न घृष्टाः पादपीठे चूड़ामणयः, कैर्न प्रतिपन्ना वेत्रयष्टयः, (५) कैर्नोद्धूतानि (६) चामराणि, कैर्नाशा-

प्रकाशो यासु तासु सतीषु, तत् अपरिमाणम् असंख्यं बलं सैन्यम्, सागरसलिलात् उन्मग्नम् उत्थितमिव आलोक्य, उपजातविस्मयो वैशम्पायनः, सर्वतो दत्तदृष्टिः सन् चन्द्रापीड़म् बभाषे इत्यन्वयः। अत्र क्रियोत्प्रेक्षालङ्कारः।

(ग) युवेति। प्रसाधितानि जयसाधनेनायत्तीकृतानि। प्रसाधयिष्यसि जयसाधनेनायत्तीकरिष्यसि। आत्मीयकृतानि "सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः।" इत्यादिमनुवचनात् जयेन स्वीकृतानि स्वाधीनीकृतानीत्यर्थः।

(घ) क इति। न प्रणताः, देवतारापीड़प्रभावादिति भावः। अपि तु सर्व एव प्रणता इत्यर्थः। एवमन्यत्रापि। एषु मत्येकवाक्यं अर्थापत्तिरलङ्कारः। बालं नूतनं यत् कमलकुड्मलं पद्ममुकुलं तद्वत् कोमलः, सेवा उपासना तदात्मकोऽञ्जलिः सेवाञ्जलिः। अत्रार्थापत्तिलुप्तोपमयोरङ्गाङ्गिभावेन सङ्करः। प्रतिबद्धाः अलङ्करणाय योजिताः हेमपट्टाः स्वर्णफलकं येषु तादृशैर्ललाटैः सभाभुवः, न मसृणीकृताः अच्छीकृताः। प्रतिपन्नाः प्रतिहारिभावेन गृहीताः। उद्धूतानि आन्दोलितानि। किरीटेषु यानि पत्राणि पत्राकाराणा-

তাহাতে সেই ধূলিরাশি নিবারিত হইলে এবং পুনরায় সকল দিকে আলোক প্রকাশ পাইলে, সেই অসংখ্য সৈন্য যেন সমুদ্রের জল হইতে উঠিল; এইরূপ দেখিয়া বৈশম্পায়নের বিস্ময় জন্মিল, তখন তিনি সকল দিকে দৃষ্টিপাত করিয়া চন্দ্রাপীড়কে বলিতে লাগিলেন।

(গ) "যুবরাজ! মহারাজাধিরাজ তারাপীড় কি জয় করেন নাই, যাহা তুমি জয় করিবে; কোন্ দিক্ অধিকার করেন নাই, যাহা তুমি অধিকার করিবে; কোন্ দুর্গ আয়ত্ত করেন নাই, যাহা তুমি আয়ত্ত করিবে; কোন্ দ্বীপান্তর আত্মসাৎ করেন নাই, যাহা তুমি আত্মসাৎ করিবে; কোন্ রত্ন উপার্জন করেন নাই, যাহা তুমি উপার্জন করিবে; (ঘ) এবং তাঁহার প্রতাপে কোন্ কোন্ রাজা বা অবনত হ'ন নাই, কোন্ কোন্ রাজা বা আপনার মস্তকে

[१] पुनरुपजातालोकासु। [२] सागरादिव। [३] किमजितं किं किमजितम्। [४] कैन। [५] वैत्रलताः। [६] उद्धूतानि।

रिता जयशब्दाः, केषां न पीताः किरीटपत्रमकरैः सलिलधारा इव निर्म्मलास्तच्च-रण-(१) नख-मयूख-राजयः (घ)। एते हि (२) चतुरुदधिजलावगाहदुर्ल-लित-बल-मदावलिप्ता दशरथ-भगीरथ-भरत-दिलीपालर्क-मान्धातृप्रतिमाः कुला-भिमानशालिनः सोमपायिनो मूर्द्धाभिषिक्ताः पृथिव्यां सर्वपार्थिवा रक्षाभूति-मिवाभिषेक-पयः-पात-पूतैः स्वचूडामणिपल्लवैरुद्वहन्ति मङ्गल्यां भवच्चरणरजःसंह-

स्थानि मकराः स्वनामप्रसिद्धा जलजन्तुविशेषा इव तैः, सलिलधारा इव, निर्म्मलाः, तस्य तारापीडस्य चरण-नखानां मयूखराजयः किरणश्रेणयः, न पीताः नमस्कारकाले न ग्रस्ताः, अपि तु सर्वेषामेवेत्यर्थः। अत्र लुप्तो-पमा श्रौतोपमा चार्थापत्तिश्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः।

(ङ) ईदृशेन तारापीडेन विजिता राजानो भवन्तमपि प्रणिपतन्तीत्याह एत इति। हि तथाहि। चतुर्णा-मुदधीनां समुद्राणां जलेषु यः अवगाहः द्वीपान्तरविजयगमनार्थं मवतरणं तदेव दुर्ल्ललितं हठकारिता येषां तेषां तथोक्तानां बलानां सैन्यानां मदेन दर्पेण अवलिप्ता दर्पिताः। दशरथादयः प्रसिद्धाः, अलर्को नाम दाश-शीर्षः कश्चिद्राजर्षिर्महाभारताश्वमेधपर्व्वणि प्रसिद्धः, तत्प्रतिमास्तत्तुल्याः। कुलाभिमानशालिनो महा-कुलीनत्वाहङ्कारविशिष्टाः। सोमपायिनः सोमयागं विधाय सोमरसपायिनो नियतयज्ञानुष्ठायिन इत्यर्थः। मूर्द्धसु अभिषिक्ता राज्यप्राप्तिकाले कृताभिषेकाः, पृथिव्याः सर्वपार्थिवाः, अभिषेकपयःपातेन अभिषेकीयजलसम्प-र्केण पूतैः, चूडामणिपल्लवैः विस्तृतचूडामणिभिः, रक्षाभूतिमिव रक्षार्थं कृतयज्ञीयभस्मेव, मङ्गल्यां कल्याणकारीम्, भवतस्तव चरणयोः रजःसंहतिं धूलिसमूहम् उद्वहन्ति नमस्कारकाले धारयन्ति। अत्र तेषां राज्ञां प्राधान्य-प्रतिपादनकार्य्यं प्रति बहुतरकारणोपन्यासात् समुच्चयः श्रौतोपमा चानयोरङ्गाङ्गिभावेन सङ्करः।

নূতন পদ্মকলিকার ন্যায় কোমল অঞ্জলিপুট স্থাপন করেন নাই ; কোন্ কোন্ রাজা বা স্বর্ণ-ফলকাঙ্কিত নিজ নিজ ললাটদ্বারা (নমস্কার করিয়া করিয়া) সভার ভূমিতল মসৃণ (পালিস) করেন নাই ; কোন্ কোন্ রাজা বা নমস্কার করিবার সময় মহারাজ তারাপীড়ের পাদপীঠে আপনাদের চূড়ামণি ঘর্ষণ করেন নাই ; কোন্ রাজা বা (প্রতীহারীর ন্যায়) বেত্রযষ্টি ধারণ করেন নাই ; কোন্ কোন্ রাজা বা চামর আন্দোলন করেন নাই ; কোন্ কোন্ রাজা বা জয়শব্দ উচ্চারণ করেন নাই ; এবং মকর যেমন সমুদ্রের জলধারা পান করে সেইরূপ কোন্ কোন্ রাজারই বা মুকুটের স্বর্ণপত্র-নির্ম্মিত মকরাকার অংশগুলি, মহারাজ তারাপীড়ের চরণ-নখের নির্ম্মল কিরণশ্রেণী পান করে নাই। (ঙ) যে সৈন্যগণ অন্যান্য দ্বীপ জয় করিতে যাইবার নিমিত্ত চারি সমুদ্রের জলে অবগাহন করিয়া অত্যন্ত সাহসিকতা প্রকাশ করিয়াছে, সেই সৈন্যগণের গর্ব্বে গর্ব্বান্বিত এবং দশরথ, ভগীরথ, ভরত, দিলীপ, অলর্ক ও মান্ধাতার তুল্য গুণবান্, কুলগৌরবসম্পন্ন, সোমরসপায়ী ও রাজ্যে অভিষিক্ত পৃথিবীর এই সকল রাজ-গণ, অভিষেক-জল-সংস্পর্শে পবিত্র আপন আপন চূড়ামণিদ্বারা, যজ্ঞীয় রক্ষাভস্মের ন্যায়

(१) तच्चरण···। (२) एते हि ते।

तिम् (ङ)। एभिरियमादिपर्वतैरिवापरैर्धृता धरित्री, एतानि चाप्यमीषामाक्रान्तदशदिगन्तरालानि सैन्यानि भवन्तमुपासते (च)। तथाहि पश्य, (१) यस्यां यस्यां दिशि विक्षिप्यते चक्षुः, तस्यां तस्यां रसातलमिवोद्गिरति, वसुधेव सूते, ककुभ इव वमन्ति, गगनमिव वर्षति, दिवस इव सृजति बलानि (छ)। अपरिमितबलभराक्रान्ता मन्ये स्मरति महाभारत-समर-संक्षोभस्य (२) अद्य क्षितिः (ज)। एष शिखरदेशेषु (३) परिस्खलित-(४) मण्डलो ध्वजान् गणयन्निव कुतूहलाद्भ्रमति कदलिकावनान्तरेषु मयूखमाली (झ। सर्वतश्च मदजलमुचां

(च) एभिरिति। अपरैः प्रकृतभिन्नैः आदिपर्वतैः महेन्द्रादिभिः कुलपर्वतैरिव एभिर्वर्णितपूर्वैः राजभिः, इयं धरित्री पृथिवी धृता धारिता रक्षिता च। अत्रोपमालङ्कारः। आक्रान्तानि व्याप्तानि दशानां दिशाम् अन्तरालानि मध्यभागा यैस्तानि, एतानि दृश्यमानानि अमीषां राज्ञां सैन्यानि च भवन्तम् उपासते दिग्विजयसाहाय्याय सहगमनेन सेवन्ते। एतदपि देवस्य तारापीडस्यैव प्रभावादिति भावः।

(छ) तदेव दर्शयति तथाहीति। रसातलं पातालं कर्तृ, बलानि सैन्यानि उद्गिरतीव। सीमादर्शना-भावादिति भावः। अत्र क्रियोत्प्रेक्षालङ्कारः। एवमन्यत्रापि। वसुधा बलानि सूते प्रसवतीव। ककुभो दिशो बलानि वमन्तीव। गगनं कर्तृ, बलानि वर्षतीव। दिवसो बलानि सृजति उत्पादयतीव।

(ज) अपरेति। अपरिमितबलभराक्रान्ता क्षितिः, अद्य महाभारते ग्रन्थे व्याख्यातो यः समरः कुरुपाण्डव-युद्धं स महाभारतसमरः, शाकपार्थिवादित्वान्मध्यपदलोपी समासः, तस्य संक्षोभः सम्मर्द्दस्तस्य स्मरति, इत्यहं मन्ये। तत्तुल्यभराक्रान्तत्वादिति भावः। अत्र मन्ये इत्युपादानाद्वाच्या क्रियोत्प्रेक्षालङ्कारः। संक्षोभस्येति "अधीगर्थ कर्म्मणी"ति कर्म्मणि षष्ठी।

[झ] एष इति। शिखरदेशेषु ध्वजानामग्रोपरिभागेषु परिस्खलितं प्रतिबिम्बितत्वात् पतितं मण्डलं यस्य सः, एष मयूखमाली सूर्यः, कुतूहलात् गणयन्निव ध्वजानामिव संख्यां कुर्वन्निव, कदलिकावनान्तरेषु पताका-

মঙ্গলকর তোমার চরণ-ধূলিসমূহ বহন করিতেছেন। (চ) অপর কুলপর্ব্বতগণের ন্যায় এই রাজগণই এই পৃথিবীকে রক্ষা করিতেছেন এবং ইঁহাদের এই সৈন্যগণ সকল দিক্ ব্যাপ্ত করিয়া আজ তোমার সেবা করিতেছে। (ছ) তাহাই দেখ,–যে দিকে যে দিকে দৃষ্টিপাত করিবে, সেই সেই দিকেই 'পাতাল যেন সৈন্য উদ্গিরণ করিতেছে, পৃথিবী যেন সৈন্য প্রসব করিতেছে, দিক্সমূহ যেন সৈন্য বমন করিতেছে, আকাশ যেন সৈন্য বর্ষা করিতেছে এবং দিনেই যেন সৈন্য সৃষ্টি করিতেছে' বলিয়া বোধ হইবে। (জ) আমি মনে করি—আজ পৃথিবী, তোমার অসংখ্য সৈন্যের ভারে আক্রান্ত হইয়া মহাভারতবর্ণিত সেই কুরুপাণ্ডবের যুদ্ধ-সঙ্ঘর্ষ স্মরণ করিতেছে। (ঝ) ধ্বজসমূহের উপরিভাগে নিজের প্রতিবিম্ব পতিত হওয়ায় সূর্য্য যেন কৌতুকবশতঃ গণনা করিয়া করিয়া পতাকাসমূহের অভ্যন্তরে ধ্বজগুলি বমন

(१) पश्य पश्य। (२) महाभारतस्य क्षोभस्य, महाभारतसमरस्य क्षोभस्य।

(३) मर्त्त मकरट शिखरदेशेषु। (४) स्खलित…।

করিণামেলাপরিমল-সুরভিণি বেণিকা-বাহিনি মদবারিণি নিরন্তরমগ্না (১) নিপতিত-(২) মধুকর-কুল-কলকল-কলিতা (৩) কালিন্দী-জল-কল্লোল-কলিতেব (৪) ভাতি ভূতধাত্রী [ঞ]। সৈন্যভরসংক্ষোভভয়াৎ [৫] সরিত ইব গগনতলম্ [৬] উৎপতিতা আচ্ছাদয়ন্তি (৭) এতা দিক্‌চক্রবালমিন্দুধবলা ধ্বজ-পঙ্‌ক্তয়ঃ (৮) (ট)। সর্ব্বথা চিত্রম্, যদদ্য বিঘটিত-সকল-কুল-শৈল-সন্ধি-বন্ধা (৯)

---

সমুচ্চান্তরালেষু ধ্বজান্ স্বর্ণবেষ্টনীপরিভাগান্ কর্তুম্ বমতি উদ্গিরতীব। প্রত্যেকধ্বজোপরিভাগে সূর্য্যমণ্ডলস্য প্রতিবিম্বিতত্বাৎ তে ধ্বজাঃ সূর্য্যমুদ্গীর্য্যমাণা ইব ভান্তীতি সরলার্থঃ। অত্র প্রথমা বাচ্যা ক্রিয়োৎপ্রেক্ষা দ্বিতীয়া চ প্রতীয়মানা ক্রিয়োৎপ্রেক্ষা, অনয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ। "কদলী বৈজয়ন্ত্যাঞ্চ রম্ভায়াং হরিণান্তরে।" ইত্যাদি বিশ্বঃ।

(ঞ) সর্ব্বত ইতি। কিঞ্চ সর্ব্বতঃ সমন্তাৎ, মদজলমুচাং দানজলস্রাবিণাং করিণাম্, এলায়াঃ স্থূলৈলায়াঃ পরিমলবৎ সৌরভবৎ সুরভিণি সৌরভবতি বেণিকাবাহিনি প্রবাহেণ স্রাবিণি মদবারিণি, নিরন্তরমগ্না নিরবকাশং ক্লিন্নেত্যর্থঃ, তথা নিপতিতস্য তন্মদজলোপরি গতস্য মধুকরকুলস্য ভ্রমরসমূহস্য কলকলৈঃ কোলাহলৈঃ কলিতা গহনা দুষ্প্রবেশা, ভূতধাত্রী ধরিত্রী, কালিন্দীজলস্য যমুনাজলস্য কল্লোলৈর্মহাতরঙ্গৈঃ কলিতা ব্যাপ্তেব সতী ভাতি, করিণাং মদজলপ্রবাহস্য যমুনাজলতুল্যকৃষ্ণবর্ণত্বাদিতি ভাবঃ। অত্র একত্র লুপ্তোপমা, মদজলে নিরন্তরমগ্নত্বাসম্বন্ধেঽপি তৎসম্বন্ধোক্তেরতিশয়োক্তিঃ, ক্রিয়োৎপ্রেক্ষা চ এতেষামঙ্গাঙ্গিভাবেন সঙ্করঃ। "কলিলং গহনং সমে।" ইত্যমরঃ।

(ট) সৈন্যেতি। সৈন্যভরসংক্ষোভভয়াৎ গগনতলমুৎপতিতা উড্ডীনাঃ সরিতো নদ্য ইব এতা ইন্দুধবলা ধ্বজপঙ্‌ক্তয়ঃ দিক্‌চক্রবালং দিঙ্মণ্ডলম্ আচ্ছাদয়ন্তি। অত্র লুপ্তোপমাসঙ্কীর্ণা জাত্যুৎপ্রেক্ষালঙ্কারঃ।

(ঠ) সর্ব্বথেতি। চিত্রমাশ্চর্য্যম্, যদদ্য ধরিত্রী, বলভরেণ বিঘটিতা বিশ্লেষিতাঃ সকলানাং কুলশৈলানাং সন্ধিবন্ধাঃ সংযোগবন্ধনানি যস্যাঃ সা তাদৃশী সতী, তথাপি ন শকলীভবতি ন খণ্ডখণ্ডতাং প্রাপ্নোতি।

---

করিতেছেন বলিয়া বোধ হইতেছে। (ঞ) এবং সকল দিকে মদস্রাবী হস্তিগণের, এলাচীর সৌরভের ন্যায় সৌরভযুক্ত মদজল প্রবাহিত হইতেছে, ভ্রমরগণ তাহার উপর পড়িয়া কোলাহল করিতেছে, পৃথিবী সেই মদজলে ঘনভাবে নিমগ্ন হইয়া যমুনার জলতরঙ্গে ব্যাপ্ত হইয়াই যেন বিরাজ করিতেছে। (ট) চন্দ্রের ন্যায় শুভ্রবর্ণ এই সকল ধ্বজসমূহ দিঙ্মণ্ডল আচ্ছাদন করিয়াছে, তাহাতে বোধ হইতেছে যে, কতকগুলি নদী, সৈন্যগণের পদভরে বেদনা পাইবার ভয়েই যেন আকাশে উঠিয়া অবস্থান করিতেছে। (ঠ) সর্ব্বপ্রকারে আশ্চর্য্যের বিষয় এই

---

(১) মদবারিণি মগ্না। (২) নিরন্তরনিপতিত···। (৩)···কলিতা, কলঙ্ককালিকা, ললিতা।
(৪) কলিতেব, কবলিতেব। (৫) সৈন্যসংক্ষোভভয়াৎ, ধরণিমবস্থায়।
(৬) গগনম্। (৭) সংছাদয়ন্তি। (৮) দ্বিজপঙ্‌ক্তয়ঃ। (৯) শৈলবন্ধা।

सहस्रशः शकली-भवति बलभरेण धरित्री, यद्वा बलभर-पीड़ित-वसुधा-धारण-विधुरा न चलन्ति [१] फणिनां पत्युः फणाभित्तयः ।” (ठ)

इत्येवं वदत एव तस्य युवराजः समुच्छ्रितानेकतोरणां तृणमय-प्राकार-मन्दिर-सहस्र-सम्बाधाम्, (२) उल्लासित-धवल-पट-मण्डप-शोभिनीम् (३) आवास-भूमिमवाप (ड)। तस्याञ्चावतीर्य्य राजवत् सर्वाः क्रियाश्चकार। सर्वैश्च तैः समेत्य नरपतिभिरमात्यैश्च विविधाभिः कथाभिर्विनोद्यमानस्तं दिवसमशेषमभिनव-पितृवियोगजन्मना शोकावेगेनायास्यमानहृदयो दुःखेनात्यवाहयत् (ढ)। अति-वाहितदिवसश्च यामिनीमपि स्वशयनीयस्य नातिदूरे निहितशयननिषण्णेन (४)

---

अत्र शकलीभवनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः। बलभरेण पीड़िताया वसुधाया धारणेन विधुरा विह्वलाः, फणिनां पत्युः सर्पराजस्य अनन्तस्य फणाभित्तयो विस्तृतफणामण्डलानि न चलन्ति न स्खलन्ति, तदपि चित्रमित्यर्थः। अत्रापि पूर्ववदलङ्कारः।

(ड) इतीति। वदत एव तस्येत्यनादरे षष्ठी। दिग्विजयतो निवृत्तौ तद्वचनमनादृत्येत्यर्थः। समुच्छ्रितानि अत्युच्चानि अनेकानि तोरणानि बहिर्द्वाराणि यस्यास्ताम्, तृणमये प्राकारे तन्मध्ये इत्यर्थः: मन्दिरसहस्रेण गृहसमूहेन सम्बाधा व्याप्ता ताम्, उल्लासितेन उत्थापितेन धवलेन पटमण्डपशतेन वस्त्रमयगृहसमूहेन शोभत इति ताम्, आवासभूमिं पूर्वनिर्म्मितनिवासस्थानम्।

(ढ) तस्यामिति। सर्वाः क्रियाः सैन्यपर्य्यवेक्षणसैनापतिसम्भाषणनियोगादीः। समेत्य मिलित्वा। विनोद्यमानः प्रसाद्यमानः। अभिनवात् पितृवियोगात् जन्म यस्य तेन। आयास्यमानं सन्तप्यमानं हृदयं यस्य स चन्द्रापीड़ः, अशेषं सकलं तं दिवसं दुःखेनात्यवाहयत्।

(ण) अतीति। किञ्च अतिवाहितदिवसश्चन्द्रापीड़ः। स्वशयनीयस्य निजशय्यायाः, नातिदूरे निहितं

---

যে, সৈন্যগণের পদভরে সমস্ত কুলপর্ব্বতগণের সন্ধিবন্ধন বিশ্লেষিত হওয়ায় পৃথিবী আজ সহস্র খণ্ডে বিভক্ত হইয়া যাইতেছে না এবং সৈন্যগণের পদভরে পরিপীড়িত পৃথিবীর ধারণে বিহ্বল হইয়া অনন্তনাগের ফণাগুলি, স্থানচ্যুত হইতেছে না।”

(ড) বৈশম্পায়ন এইরূপ বলিতেছেন, এই অবস্থায় যুবরাজ চন্দ্রাপীড়, পূর্ব্বনির্দ্দিষ্ট বাসস্থানে যাইয়া উপস্থিত হইলেন; সে স্থানের বাহিরের দ্বারগুলি অত্যন্ত উচ্চ ছিল, তৃণময় প্রাচীরের মধ্যস্থল, বহুসংখ্যক মন্দিরে পরিপূর্ণ ছিল এবং উত্তোলিত বহুসংখ্যক শুভ্রবর্ণ পটমণ্ডপে (তাঁবুতে) সে স্থানটি শোভা পাইতেছিল। (ঢ) চন্দ্রাপীড় সেই বাসস্থানে হস্তিনীর পৃষ্ঠ হইতে অবতরণ করিয়া রাজার ন্যায় সকল কার্য্য সম্পাদন করিলেন, এবং সেই সকল রাজগণ ও মন্ত্রিগণের সহিত মিলিত হইয়া নানাবিধ কথোপকথনে আনন্দ অনুভব করিতেছিলেন বটে, কিন্তু নূতন পিতৃবিয়োগবশতঃ শোকাবেগে হৃদয় সন্তপ্তও হইতেছিল, তাই তিনি দুঃখেতেই সেই সমস্ত দিনটা অতিবাহিত করিলেন। (ণ) দিন অতিবাহিত করিলে পর রাত্রিতে

---

(१) चलन्ति। (२)···मन्दिरसम्बाधाम्। (३)···शोभिनीम्। (४) नातिदूरनिषण्णेन।

वैशम्पायनेन, अन्यतश्च समीपे (१) क्षितितल-विन्यस्त (२) कुथप्रसुप्तया पत्रलेखया सह, अन्तरा पितृसक्ताम्, अन्तरा मातृसम्बद्धम्, अन्तरा शुकनासमयं कुर्वन्नालापं नात्युपजातनिद्रः (३) प्रायेण जाग्रदेव निन्ये (ण)। प्रत्यूषे (४) चोत्थाय तेनैव क्रमेणानवरतप्रयाणकैः प्रतिप्रयाणकमुपचीयमानेन सेनासमुदायेन जर्जरयन् वसुन्धराम्, आकम्पयन् गिरीन्, उत्सिञ्चन् (५) सरितः, रिक्तीकुर्वन् सरांसि, चूर्णयन् काननानि, समीकुर्वन् विषमाणि, दलयन् दुर्गाणि, पूरयन्निम्नानि, निम्नयन् स्थलानि प्रातिष्ठत (६) (त)।

स्थापितं यत् शयनं शय्या तत्र निषण्णेन स्थितेन। अन्यतः स्वशय्याया अन्यस्मिन् पार्श्वे। क्षितितले विन्यस्तं यत् कुथं विचित्रकम्बलं तस्मिन् प्रसुप्ता शयिता तया पत्रलेखया च सह। अन्तरा मध्ये मध्ये। पितरि चन्द्रापीड़ेन सक्तं सम्बद्धम। शुकनासमयं तद्विषयकम् आलापं कुर्वन्। न अतिरेकेण उपयाता निद्रा यस्य सः, अतएव प्रायेण बाहुल्येन जाग्रदेव सन् यामिनीमपि तां रात्रिमपि निन्ये यापयामास।

(त) प्रत्यूष इति। अनवरतप्रयाणकैरविश्रान्तप्रस्थानैः। प्रतिप्रयाणकं प्रतिदिवसीयप्रस्थानसमय इत्यर्थः। उभयत्राप्यज्ञाने कप्रत्ययः। उपचीयमानेन वर्द्धमानेन, तत्तद्भौयाधीननृपतिसैन्यसम्मेलना-दिति भावः। सेनासमुदायेन वाहिनीसमूहेन। जर्जरयन् जर्जरां कुर्वन् भरेण परिपीड़यन्नित्यर्थः। उत्-सिञ्चन् जलोत्तोलनेनाल्पजलाः कुर्वन्। रिक्तीकुर्वन् पानाद्यर्थं जलानयनादिना जलशून्यीकुर्वन्। विषमाणि उच्चावचानि स्थलानि समीकुर्वन्। दुर्गाणि दुर्गमाणि मार्गवर्त्तिपर्वतादिस्थलानि, दलयन् ध्वंसयन्। निम्नानि मार्गवर्त्ति ह्रदादीनि पूरयन् मृत्तिकादिभिः समीकुर्वन्। स्थलानि मृत्तिकास्तूपादीनि, निम्नयन् समीकरणायापेक्षिकनिम्नानि कुर्वन्। यानवाहनादीनामनायासेन गमनार्थमिति सर्वत्र भावः। प्रातिष्ठतेति "समवप्रविभ्य" इत्यात्मनेपदम्।

নিজের শয্যার অনতিদূরে সংস্থাপিত একখানি শয্যার উপরে বৈশম্পায়ন অবস্থান করিতে লাগিলেন এবং নিকটেই অপর পার্শ্বে ভূতলে একখানি বিচিত্র কম্বল পাতা ছিল, পত্রলেখা তাহার উপরে শয়ন করিয়াছিল, এই অবস্থায় চন্দ্রাপীড় তাহাদের সহিত মধ্যে মধ্যে পিতার সম্বন্ধে, মধ্যে মধ্যে মাতার সম্বন্ধে এবং মধ্যে মধ্যে শুকনাসের সম্বন্ধে কথোপকথন করিতে লাগিলেন, তাহাতে অধিক নিদ্রা হইল না, প্রায়শই জাগিয়া রহিলেন—এই ভাবে সেই রাত্রিও অতিবাহিত করিলেন। (ত) প্রভাতকালে গাত্রোত্থান করিয়া সেই ভাবেই অবিশ্রান্ত গমন করিতে লাগিলেন; প্রত্যেক দিন প্রস্থান করিবার সময়ে নূতন নূতন সৈন্য আসিয়া যোগ দিতে লাগিল, তাহাতে নিজের সৈন্য অত্যন্ত বৃদ্ধি পাইল, সেই সৈন্যসমূহদ্বারা পৃথিবীকে জর্জ্জরিত করিয়া, পর্ব্বত কাঁপাইয়া, নদী সেঁচিয়া, জলাশয়গুলিকে জলশূন্য করিয়া, বন

(१) शयनीयसमीपे। [२] क्षितितले विन्यस्त…। [३] नातिजातनिद्रः।
[४] प्रत्यूषसि। (५) उत्सिञ्चन्। (६) प्रातिष्ठत्।

শনৈঃ শনৈশ্চ স্বেচ্ছয়া পরিভ্রমন্, নময়ন্নুন্নতান্, উন্নময়ন্নবনতান্, (১) আশ্বাসয়ন্ ভীতান্, রক্ষন্ শরণাগতান্, উন্মূলয়ন্ বিটপকান্, উৎসাদয়ন্ কণ্টকান্, অভিষিঞ্চন্ স্থানস্থানেষু রাজপুত্রান্, সমর্জয়ন্ রত্নানি, প্রতীচ্ছন্নুপায়নানি, গৃহ্ণন্ করান্, আদিশন্ দেশব্যবস্থাঃ, (২) স্থাপয়ন্ স্বচিহ্নানি, কুর্ব্বন্ কীর্ত্তনানি, লেখয়ন্ শাসনানি, পূজয়ন্নগ্রজন্মনঃ, প্রণমন্ মুনীন্, পালয়ন্নাশ্রমান্, জনয়ন্ (৩) জনানুরাগম্, প্রকাশয়ন্ বিক্রমম্, আরোপয়ন্ প্রতাপম্, উপচিন্বন্ যশঃ, বিস্তারয়ন্ গুণান্, প্রখ্যাপয়ন্ সচ্চরিতম্,

(থ) বিজয়প্রকারমাহ শনৈরিতি। উন্নতান্ ধনবলদর্পোদ্ধতান্ নৃপতীন্, নময়ন্ বিজয়েনাবনতীকুর্ব্বন্। অবনতান্ স্বয়মেব বশীভূতান্ নৃপতীন্, উন্নময়ন্ দানমানাদিনা বর্দ্ধয়ন্। বিটপকান্ ধূর্ত্তাধিপান্। কুৎসায়াং কপ্রত্যয়ঃ। "বিটপো ন স্ত্রিয়াং স্তম্বশাখাবিস্তারপল্লবে। বিটাধিপে না" ইতি মেদিনী। কণ্টকান্ ক্ষুদ্রশত্রূন্। "রোমাঞ্চে ক্ষুদ্রশত্রৌ চ দ্রুমাঙ্গে কণ্টকোঽস্ত্রিয়াম্।" ইতি ত্রিকাণ্ডশেষঃ। উপায়নানি বশীভূতনৃপতিদত্তোপহারদ্রব্যাণি, প্রতীচ্ছন্ স্বীকুর্ব্বন্। দেশব্যবস্থাঃ দেশশাসননিয়মান্ আদিশন্ আয়ত্তীভূতনৃপতিভ্য ইত্যর্থঃ। স্বচিহ্নানি স্বকীয়বিজয়চিহ্নানি স্তম্ভাদীনি। কীর্ত্তনানি আত্মনো বিজয়ঘোষণাঃ। শাসনানি অধীনতাসূচকলেখ্যপত্রাণি, লেখয়ন্ বিজিতনৃপতিভিরিতি শেষঃ। অগ্রজন্মনো ব্রাহ্মণান্। আশ্রমান্ মঠমধ্যাদীন্। আরোপয়ন্ প্রবর্ত্তয়ন্। উপচিন্বন্ সদ্ব্যবহারাদিনা প্রবর্দ্ধয়ন্। বেলাবনানি সমুদ্রতীরবর্ত্তীন্যরণ্যানি আমৃদ্নন্ সম্যগ্ ভঞ্জন্। "বেলা কালে চ সীমায়ামব্ধেঃ কূলবিকারয়োঃ।"

ভাঙ্গিয়া, উঁচু নীচু জায়গা সমান করিয়া, দুর্গম পর্ব্বতগুলিকে ধ্বংস করিয়া, হ্রদগুলিকে পূরণ করিয়া, মৃত্তিকাস্তূপ নিম্ন করিয়া প্রস্থান করিতে লাগিলেন।

(থ) চন্দ্রাপীড় এই ভাবে ইচ্ছানুসারে ধীরে ধীরে পরিভ্রমণ করতঃ, বলগর্ব্বে গর্ব্বিত রাজগণকে বশীভূত করিলেন, আপনা হইতেই অবনত রাজগণকে দানমানাদিদ্বারা উন্নত করিলেন, ভীত রাজগণকে আশ্বস্ত করিলেন, শরণাগত রাজগণকে রক্ষা করিলেন, ধূর্ত্তনায়কগণকে উন্মূলিত করিলেন, ক্ষুদ্র শত্রুগণকে উৎসন্ন করিলেন, স্থানে স্থানে রাজপুত্রদিগকে অভিষিক্ত করিলেন, বহুতর রত্ন উপার্জ্জন করিলেন, বশীভূত রাজাদের নিকট হইতে উপহার গ্রহণ করিলেন, কর আদায় করিলেন, বিজিত দেশ-সমূহে শাসনের নিয়মপদ্ধতি বলিয়া দিলেন, স্থানে স্থানে নিজের বিজয়চিহ্ন স্থাপন করিলেন, সকল দেশেই আপনার জয় ঘোষণা করিলেন, বিজিত রাজগণদ্বারা অধীনতাসূচক শাসনপত্র (দলিল) লেখাইয়া লইলেন, ব্রাহ্মণদিগের সম্মান করিলেন, মুনিগণকে নমস্কার করিলেন, আশ্রমগুলির রক্ষার ব্যবস্থা করিলেন, আপনার প্রতি লোকের অনুরাগ জন্মাইলেন; সকল দেশেই বিক্রম প্রকাশ করিলেন, প্রভাব খাটাইলেন, যশ বৃদ্ধি করিলেন, গুণ বিস্তার করিলেন, সচ্চরিত্র বিখ্যাত করিলেন এবং সমু-

(১) উন্নতান্ নময়ন্ ইতিমাত্রঃ পাঠঃ ক্বচিৎ। (২)…ব্যবস্থাম্। (৩) ক্বচিৎ জনয়ন্ ইতি পাঠো নাস্তি।

(১)আমৃদ্নন্ স (২) বেলাবনানি, বলরেণুভিরাধূসরীকৃত-সকলসাগরসলিলঃ পৃথিবীং বিচচার (থ)। প্রথমং প্রাচীম্, ততস্ত্রিশঙ্কুতিলকাম্, ততো বরুণলাঞ্ছনাম্, অনন্তরঞ্চ সপ্তর্ষিতারাধবলাং দিশং বিজিগ্যে (৩) (দ)। এবং (৪) বর্ষত্রয়েণ চাত্মীকৃতাশেষদ্বীপান্তরং সকলমেব চতুরম্ভোধি (৫) খাতবলয়-পরিখা-প্রমাণং বভ্রাম মহীমণ্ডলম্ (ধ)। ততঃ ক্রমেণাবর্জিত-(৬) সকল-ভুবন-তলঃ প্রদক্ষিণী-কৃত্য বসুধাং (৭) পরিভ্রমন্, কদাচিৎ কৈলাসসমীপচারিণাং হেমকূটধাম্নাং (৮),

ইত্যাদি মেদিনী। বলরেণুভিঃ সৈন্যোত্থাপতধূলীভিঃ আধূসরীকৃতানি তীরবিচরণকালে সম্যক্ ধূসরবর্ণীকৃতানি সকলানাং সাগরাণাং সলিলানি যেন স তাদৃশশ্চন্দ্রাপীড়ঃ।

(দ) প্রথমমিতি। প্রথমং প্রাচীং পূর্বাং দিশং বিজিগ্যে বিজিতবান্। ত্রিশঙ্কুনামা রাজা তিলক ইব যস্যাঃ তাম্, দক্ষিণাং দিশম্। ত্রিশঙ্কুর্নাম রাজা স্বর্গমারোঢুম্ দেবরাজেন দক্ষিণস্যাং দিশ্যধঃ ক্ষিপ্ত ইতি রামায়ণ-বার্তা। বরুণো লাঞ্ছনং অধিপতিতয়া চিহ্নং যস্যাঃ তাম্, পশ্চিমাং দিশম্। সপ্তর্ষিতারাভির্নক্ষত্রাত্মকমরীচ্যাদিসপ্তর্ষিভিঃ ধবলাং বিশিষ্টাম্ উত্তরাং দিশম্। তথা চ বৃহৎসংহিতায়াং—"এক কস্মিন্ ঋক্ষে শতং শতং তে চরন্তি বর্ষাণাম্। প্রাগুত্তরতশ্চৈতে সদোদয়ন্তে সসাধ্বীকাঃ।"

(ধ) এবমিতি। আত্মীকৃতানি স্বস্বাস্পদীকৃতানি অশেষাণি সমস্তানি দ্বীপান্তরাণি যস্য তৎ, তথা চতুর্ণামম্ভোধীনাং সমুদ্রাণাং খাতবলয়ং খাতাশ্রমণ্ডলমিব পরিখা তয়া প্রমাণং পরিমাণং যস্য তৎ তথোক্তং সকলমেব মহীমণ্ডলং বভ্রাম। অভ্যন্তরবর্তিস্থানবিশেষপরিত্যাগশঙ্কানিরাসার্থং সকলপদমিতি নাধিকপদত্বদোষঃ।

(ন) তত ইতি। হেমকূটো নাম হিমালয়াদুত্তরাস্থিতঃ পর্বতবিশেষো ধাম আশ্রয়ো যেষাং তেষাম্, কিরাতানাং ম্লেচ্ছবিশেষাণাম। পূর্বজলনিধেঃ পূর্বসমুদ্রাৎ নাতিবিপ্রকৃষ্টম্ অনতিদূরবর্তি। জয়াদ্ধ আয়ত্তীকৃতবান্।

দ্রের তীরবর্ত্তী বনগুলিকে মর্দ্দিত করিলেন ; এই ভাবে সৈন্যগণের পদভরে উত্থিত ধূলিরাশি-দ্বারা সকল সমুদ্রের জল ধূসরবর্ণ করিয়া সমগ্র পৃথিবী বিচরণ করিলেন। (দ) প্রথমে পূর্ব্ব-দিক্, তাহার পর ত্রিশঙ্কু-শোভিত দক্ষিণদিক্, তাহার পর বরুণ-চিহ্নিত পশ্চিমদিক্ এবং তদনন্তর নক্ষত্ররূপি-সপ্তর্ষি-শোভিত উত্তরদিক্ জয় করিলেন। (ধ) এই ভাবে তিন বৎসরে অন্যান্য সকল দ্বীপ আয়ত্ত করিয়া চারি সমুদ্রের খাতরূপ পরিখাদ্বারা পরিমিত সমগ্র পৃথিবী-মণ্ডলই পরিভ্রমণ করিলেন। (ন) তাহার পর ক্রমশঃ সমগ্র ভুবনমণ্ডল জয় করিয়া, পৃথিবী প্রদক্ষিণ করিয়া, পরিভ্রমণ করতঃ সুবর্ণপুরনামে একটি স্থান জয় করিয়া আয়ত্ত করিলেন ; সেই সুবর্ণপুর, কৈলাসপর্ব্বতের নিকটে বিচরণকারী হেমকূটপর্ব্বতনিবাসী ম্লেচ্ছগণের বাস-

(১) অদ্যোতয়ৎ পীতবসম্ ইতি ক্বচিদধিকঃ পাঠঃ। (২) আমৃদ্নন্ বেলা, আমর্দ্দয়ন্ স বেলা…।
(৩) জিগ্যে। (৪) ক্বচিৎ এবমিতি নাস্তি। (৫) চতুরুদধি…। (৬) নির্জিত, আবর্জিত…।
(৭) বসুন্ধরাম্। (৮) হেমজকূটনাম্নাম্, হেমকূটনাম্নাম্।

কিরাতানাং সুবর্ণপুরং নাম • নিবাসস্থানং নাতিবিপ্রকৃষ্টং (১) পূর্ব্বজলনিধেঃ জিত্বা জগ্রাহ (ন)। তত্র চ নিখিল-ধরণিতল-(২) পর্য্যটনখিন্নস্য নিজবলস্য বিশ্রামহেতোঃ কতিপয়ান্ দিবসানতিষ্ঠৎ। (প)

একদা তু তত্রস্থ এবেন্দ্রায়ুধমারূঢ়ো মৃগয়ানির্গতঃ (৩) বিচরন্ কাননং (৪) শৈলশিখরাদবতীর্ণম্ (৫) যদৃচ্ছয়া কিন্নরমিথুনমদ্রাক্ষীৎ (ফ)। অপূর্ব্বদর্শনতয়া তু (৬) সমুপজাতকুতূহলঃ কৃতগ্রহণাভিলাষস্তৎসমীপমাদরাদুপসর্পিত-তুরগঃ (৭) সমুপসর্পন্, (৮) অদৃষ্টপূর্ব্বপুরুষদর্শনত্রাসপ্রধাবিতস্য তৎ পলায়মানমনুসরন্, অনবরতপার্ষ্ণিপ্রহারদ্বিগুণীকৃতজবেনেন্দ্রায়ুধেন একাকী নির্গত্য নিজবল-(৯) সমূহাৎ সুদূরমনুসসার (১০) (ব)। "অত্র গৃহ্যতে অত্র গৃহ্যতে

(প) তত্রেতি। তত্র তত্র সুবর্ণপুরে। নিখিলধরাতলপর্য্যটনেন খিন্নস্য পরিশ্রান্তস্য।

(ফ) একদেতি। যদৃচ্ছয়া স্বাধীনভাবেন স্বেচ্ছয়া বিচরদিতি শেষঃ। কিন্নরমিথুনং তুরঙ্গবদন-দম্পতী, অদ্রাক্ষীৎ যুবরাজ ইত্যনুকৃষ্যতে।

(ব) অপূর্ব্বেতি। অপূর্ব্বং পূর্ব্বমজাতং দর্শনং যস্য তস্য ভাবস্তয়া হেতুনা। উপসর্পিতঃ সঞ্চালিত-স্তুরগো যেন সঃ। অদৃষ্টপূর্ব্বস্য পুরুষস্য মানুষস্য অস্বাভাবিকস্য দর্শনেন যস্ত্রাসো ভয়ং তেন প্রধাবিতং বেগেন চলিতম্, তৎ কিন্নরমিথুনম্। অনবরতং যঃ পার্ষ্ণিপ্রহারঃ পাদমূলাভ্যাং তাড়নং তেন দ্বিগুণীকৃতো জবো বেগো যস্য তেন। "পার্ষ্ণিঃ কুম্ভাং অমূপৃষ্ঠং পাদমূলোন্মদস্ত্রিয়োঃ।" ইতি হেমচন্দ্রঃ।

(ভ) অত্রেতি। অত্র দ্বিবিধদায়ারস্থানে, গৃহ্যতে ময়া হৃদং কিন্নরমিথুনমিতি শেষঃ। ইতি অনয়া

স্থান ছিল এবং পূর্ব্বসমুদ্র হইতে অধিক দূরবর্ত্তী ছিল না। (প) সমস্ত পৃথিবী পর্য্যটন করায় সৈন্যগণ পরিশ্রান্ত হইয়াছিল, সুতরাং চন্দ্রাপীড় সেই সুবর্ণপুরে কয়েক দিন বিশ্রাম করিবার নিমিত্ত অবস্থান করিলেন।

(ফ) সেই সুবর্ণপুরে থাকিবার সময়েই একদিন চন্দ্রাপীড় ইন্দ্রায়ুধে আরোহণ করিয়া মৃগয়া করিবার নিমিত্ত নির্গত হইয়া বনমধ্যে বিচরণ করিতে করিতে দেখিতে পাইলেন যে, দুইটি কিন্নর পর্ব্বতের শৃঙ্গ হইতে নামিয়া ইচ্ছানুসারে বিচরণ করিতেছে। (ব) তাহাদিগকে পূর্ব্বে কখনও দেখেন নাই বলিয়া তাঁহার কৌতূহল জন্মিল এবং ধরিবার ইচ্ছা হইল, তাই তিনি যত্নপূর্ব্বক অশ্বচালনা করিয়া সেই কিন্নরদম্পতির নিকট যাইতে লাগিলেন; এদিকে তাহারাও সেই প্রথম মনুষ্য দর্শন করিয়া ভয়ে দ্রুতবেগে পলায়ন করিতে লাগিল, চন্দ্রাপীড়ও তাহাদের পশ্চাৎ পশ্চাৎ যাইতে লাগিলেন, এই ভাবে তিনি, অবিশ্রান্ত গুল্ফপ্রহার করায় দ্বিগুণবেগবান্ ইন্দ্রায়ুধে আরোহণ করিয়া একাকী নির্গত হইয়া নিজ সৈন্যগণ হইতে বহুদূরে যাইয়া পড়িলেন। (ভ) 'এইখানেই ধরিব, এইখানেই ধরিব, এই ধরিয়াছি' এই ধরিয়াছি'

(১) বিপ্রকৃতম্। (২) ধরণীতল···। (৩)···বিনির্গতঃ। (৪) কাননে। (৫) শৈলশিখরাবতীর্ণম্। (৬) অপূর্ব্বতয়া তু। (৭)···তুরঙ্গঃ। (৮) সমুপসর্পং। (৯) বলসমূহাৎ। (১০) উপসসার।

ইদং গৃহীতম্ ইদং গৃহীতম্' ইত্যতিরভসাকৃষ্টচেতা মহাজবতয়া তুরঙ্গমস্য মুহূর্ত্তমাত্রেণৈকপদমিবাসহায়স্তস্মাৎ প্রদেশাৎ পঞ্চদশযোজনমাত্রমধ্বানং জগাম (ভ)। তচ্চানুবধ্যমানং কিন্নরমিথুনমালোকয়ত এবাস্য সম্মুখাপতিতমচলতুঙ্গশিখরমারুরোহ (ম)। আরূঢ়ে চ তস্মিন্ শনৈঃ শনৈস্তদনুসারিণীং নিবর্ত্ত্য দৃষ্টিম্, অচল-শিখরপ্রস্তর-প্রতিহত-(১) গতিপ্রসরো খিন্নতুরঙ্গঃ (২) চন্দ্রাপীড়স্তস্মিন্ কালে সমারূঢ়-(৩) শ্রম-স্বেদার্দ্র-শরীরমিন্দ্রায়ুধমাত্মানঞ্চাবলোক্য (৪) ক্ষণমিব বিচার্য্য স্বয়মেব বিহস্যাচিন্তয়ৎ (য) 'কিমিতি নিরর্থকমযমাত্মা ময়া শিশুনেবায়াসিতঃ। কিমনেন গৃহীতেনাগৃহীতেন বা কিন্নরযুগলেন প্রয়োজনম্। যদি (৫) গৃহীতমিদং ততঃ কিম্,

---

ভাবনয়া অতিরভসেন মহাবেগেন মহানন্দেন বা আকৃষ্টং চেতো যস্য সঃ। একপদমিব একপদব্যবধানস্থানমিবেত্যর্থঃ। পঞ্চদশভির্যোজনৈঃ প্রমিতমিতি পঞ্চদশযোজনমাত্রম্, প্রমাণে মাত্রচ্ প্রত্যয়ঃ ষষ্টিক্রোশপরিমিতমধ্বানমিত্যর্থঃ। "স্যাদ্‌যোজনং ক্রোশচতুষ্টয়েন" ইতি লীলাবতী।

(ম) তচ্চেতি। কিঞ্চ, অনুবধ্যমানম্ অনুস্রিয়মাণম্। আলোকয়ত এবাস্য আলোকয়ন্তমিমম্ চন্দ্রাপীড়মনাদৃত্য। অনাদরে ষষ্ঠী। সম্মুখে আপতিতম্ উপস্থিতম্, অচলতুঙ্গশিখরং পর্ব্বতস্যোচ্চশৃঙ্গম্।

(য) আরূঢ় ইতি। কিঞ্চ তস্মিন্ কিন্নরমিথুনে আরূঢ়ে সতি। অচলশিখরস্য পর্ব্বতশৃঙ্গস্য প্রস্তরৈঃ প্রতিহতঃ প্রতিবদ্ধো গতিপ্রসরো গমনবেগো যস্য সঃ, অতএব খিন্নতুরঙ্গঃ। সমারূঢ়েন সমুৎপন্নেন শ্রমস্বেদেন পরিশ্রমজনিতঘর্ম্মেণ আর্দ্রং ক্লিন্নং শরীরং যস্য তম্। আত্মানং স্বদেহম্।

(র) কিমিতীতি। আত্মা দেহঃ। আয়াসিতঃ দুর্গমপথাগমনেন পরিশ্রমিতঃ। ইদং কিন্নরযুগলম্।

---

এইরূপ ভাবিতে ভাবিতে অত্যন্ত আনন্দে আকৃষ্টচিত্ত হইয়া একাকী চন্দ্রাপীড়, অশ্বটা অত্যন্ত বেগগামী ছিল বলিয়া এক মুহূর্ত্তে সেই সুবর্ণপুর হইতে এক-পদ-পরিমিত স্থানের ন্যায় ষাট ক্রোশ পথ চলিয়া গেলেন। (ম) কিন্তু চন্দ্রাপীড় তাহাদের পশ্চাৎ পশ্চাৎই যাইতেছিলেন এবং দেখিতেছিলেন, এই অবস্থাতেই সেই কিন্নর দুইটি সম্মুখবর্ত্তী কোন পর্ব্বতের উচ্চ শৃঙ্গে যাইয়া আরোহণ করিল। (য) তাহারা পর্ব্বতের শৃঙ্গে আরোহণ করিলে চন্দ্রাপীড় ধীরে ধীরে সে দিক্ হইতে চোখ ফিরাইলেন এবং পর্ব্বত-শৃঙ্গের প্রস্তরে গমনবেগ রুদ্ধ হইতেছিল বলিয়া ঘোড়াটা ধরিলেন, সে সময়ে পরিশ্রমবশতঃ ঘর্ম্মজল নির্গত হইয়া শরীর আর্দ্র করিয়াছিল— এই অবস্থায় আপনাকে ও ইন্দ্রায়ুধকে দেখিয়া, ক্ষণকাল মনে মনে বিতর্ক করিয়া, আপনা আপনিই হাস্য করিয়া চিন্তা করিতে লাগিলেন—(র) 'কেন আমি বালকের ন্যায় এই শরীরকে অনর্থক পরিশ্রম করাইলাম; এই কিন্নর দুইটাকে ধরিলেই বা কোন্ ফল হইত, আর

---

[১]···প্রস্তরস্খলনপাতহত···। [২]···তুরঙ্গমঃ।

(৩) সমুপারূঢ়···। (৪) আলোক্য। (৫) ক্বচিৎ যদীতি নাস্তি।

অথ ন গৃহীতং ততোঽপি কিম্? অহো মে মূর্খতায়াঃ প্রকারঃ, অহো যৎকিঞ্চন-কারিতায়ামাদরঃ, অহো নিরর্থকব্যাপারেষ্বভিনিবেশঃ, অহো বালিশচরিতেষ্বা-সক্তিঃ (র)। সাধুফলং কর্ম্ম ক্রিয়মাণং বৃথা জাতম্। অবশ্যকর্ত্তব্যা (১) ক্রিয়া প্রস্তুতা বিফলীভূতা। সুহৃৎকার্য্যমুপপাদ্যমানং নোপপন্নম্। রাজধর্ম্মঃ প্রবর্ত্তিতো ন নিষ্পন্নঃ। গুর্ব্বর্থঃ প্রারব্ধো ন পরিসমাপ্তঃ। বিজিগীষুব্যাপার-(২) প্রযত্নো ন সিদ্ধঃ (ল)। কস্মাদহমাবিষ্ট ইবোৎসৃষ্টনিজপরিবার এতাবতীম্ (৩) ভূমিমায়াতঃ (ব)। কস্মাচ্চ ময়া নিষ্প্রয়োজনমিদমনুসৃতমশ্বমুখ-দ্বয়মিতি বিচার্য্যমাণে সত্যয়ম্ (৪) আত্মৈব মে পর ইব হাসমুপজনয়তি (শ)।

আশ্চর্য্যে অহোশব্দঃ। প্রকারো বিশেষঃ। যৎকিঞ্চন নিষ্প্রয়োজনং যৎকিঞ্চিৎ কার্য্যং করোতীতি স তস্য ভাবস্তস্যাম্, আদরো মহাযত্নঃ। অভিনিবেশ আগ্রহঃ। বালিশচরিতেষু মূঢ়জনব্যবহারেষু আসক্তিরেকাগ্রতা।

(ল) সাধ্বিতি। সাধু উৎকৃষ্টং ফলং যস্য তত্তাদৃশং ক্রিয়মাণং কর্ম্ম দিগ্বিজয়রূপম্, বৃথা জাতম্, ইতঃ প্রতিনিবৃত্ত্যসম্ভবেন তৎফলভোগাসম্ভবাদিতি ভাবঃ। অবশ্যকর্ত্তব্যা ক্রিয়া দুষ্টনিগ্রহশিষ্টানুগ্রহাত্মক-সুশাসনরূপা, প্রস্তুতা আরব্ধা, বিফলীভূতা, ইতো মে প্রতিনিবৃত্ত্যসম্ভবাৎ। সুহৃদাং মিত্রনৃপতীনাং কার্য্যং রাজ্যেষু সুশাসনব্যবস্থাপনরূপম্, উপপাদ্যমানং ময়ৈব নিষ্পাদ্যমানং সৎ ন উপপন্নং ন সম্পূর্ণম্ ইতো গমনা-সম্ভবাৎ। রাজধর্ম্মো দিগ্বিজয়াত্মকঃ, প্রবর্ত্তিত আরব্ধঃ, ন নিষ্পন্নঃ পুনঃ স্বদেশগমনাসম্ভবাৎ। গুর্ব্বর্থঃ পিতৃকার্য্যং তৎকীর্ত্তিপ্রসারণম্, প্রারব্ধো ন পরিসমাপ্তঃ, অত্রৈব মে বিলয়েন পরং পরাজয়ঘোষণাসম্ভবাৎ। বিজিগীষুব্যাপারায় দিগ্বিজয়াত্মকায় প্রযত্নো ন সিদ্ধঃ, পুনর্গৃহগমনাসম্ভবাৎ।

(ব) কস্মাদিতি। আবিষ্ট ইব ভূতগ্রস্ত ইব সন্। অত্র ক্রিয়োৎপ্রেক্ষালঙ্কারঃ।

(শ) কস্মাদিতি। কিঞ্চ। অশ্বমুখদ্বয় কিন্নরযুগলম্। পর ইব অন্য ইব।

না ধরায়ই বা কোন্ অনিষ্ট হইয়াছে? যদি ইহাদিগকে ধরিতে পারিতাম, তাহা হইলেই বা কি হইত, আর যে ধরিতে পারি নাই, তাহাতেই বা কি হইয়াছে? কি আশ্চর্য্য! আমার মূর্খতার রকম দেখ, যে কোন কার্য্য করিতে আমার যত্ন, অনর্থক কার্য্যে আমার আগ্রহ! এবং মূর্খের ব্যবহারে আমার আসক্তি। (ল) যাহার ফল উৎকৃষ্ট, সেই কার্য্য করিতেছিলাম; কিন্তু তাহা আজ বৃথা হইল; যাহা অবশ্যকর্ত্তব্য, সেই কার্য্য আরম্ভ করিয়াছিলাম, তাহা বিফল হইয়া গেল; মিত্রগণের কার্য্য করিতেছিলাম, সম্পন্ন হইল না; রাজার নিয়ম আরম্ভ করিয়াছিলাম, সম্পূর্ণ হইল না; পিতার কার্য্য আরম্ভ করিয়াছিলাম, সমাপ্ত হইল না; বিজি-গীষুর কার্য্যসাধনে যত্ন করিয়াছিলাম, সিদ্ধ হইল না। (ব) কেন আমি ভূতাবিষ্টের ন্যায় নিজের পরিজনদিগকে পরিত্যাগ করিয়া এত দূরে আসিলাম। (শ) বিনা প্রয়োজনে কেন আমি এই কিন্নর দুইটার অনুসরণ করিলাম, ইহার বিচার করিতে লাগিলে আমার এই

(১) কর্ত্তব্যক্রিয়া। (২) ···ব্যাপারঃ।

(৩) উৎসৃষ্টনিজপরিবারম্ উৎসৃষ্টপরিবার এব তাবতীম্। (৪ অত্র সত্যম্।

न जानै कियताध्वना विच्छिन्नमितो बलमनुयायि मे (ष)। महाजवो हीन्द्रायुधो निमेष-(१) मात्रेणातिदूरमति क्रामति (स)। न चागच्छता मया तुरङ्गवेगवशात् किन्नरमिथुने बद्धदृष्टिना (२) अस्मिन्नविरल-तरु-शत-शाखा-गुल्म-लता-सन्तान-गहने निरन्तर-निपतित-(३) शुष्क-पर्णावकीर्ण-तले महावने पन्था निरूपितः, येन प्रतिनिवृत्य यास्यामि (ह)। न चास्मिन् प्रदेशे प्रयत्नेनापि परिभ्रमता मया (४) मर्त्त्यधर्म्मा कश्चिदासाद्यते, यः सुवर्णपुरगामिनं पन्थानमुपदेक्ष्यति (क्ष)। श्रुतं हि मया बहुशः कथ्यमानम्, 'उत्तरेण सुवर्णपुरं सीमान्तलेखा पृथिव्याः सर्वजनपदानाम्, ततः परतो निर्म्मानुषमरण्यम्,

(ष) ननु कथं निर्वेदमप्रहाय गत्वा स्वजनैः सह स युज्यतामित्याह न जाने इति।

(स) अथेदानीमेवागतोऽसीति न तवातिदूरे बलमित्याह महेति। हि यस्मात्।

(ह) ननु तथापि पन्थानं पश्यन्नेवागतोऽसीति तेनैव परिचितेन पथा प्रतिगम्यतामित्याह न चेति। अविरलेन घनेन तरुशतस्य वृक्षसमूहस्य, शाखानाम्, गुल्मानां स्तम्भानाम्, लतानाञ्च सन्तानेन परम्परया गहने निविडे, तथा निरन्तरं निरवकाशं यथा स्यात् तथा निपतितैः शुष्कपर्णैः अवकीर्णम् आच्छन्नं तलं निम्नदेशो यस्य तस्मिन्। न च निरूपितः नैव सम्यग् दृष्टः। अत्र निरूपणाभावं प्रति किन्नरमिथुने बद्धदृष्टित्वं तुरगवेगः अविरलेत्यादिविशेषणद्वयार्थश्च हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः।

(क्ष) अथ वर्त्मज्ञं कञ्चिज्जनं पन्थानं पृष्ट्वा गच्छ इत्याह नचेति। मर्त्त्यधर्म्मा मानवः। प्रयत्नेनापि नासाद्यते न लब्धुं शक्यते। सुतरां जिज्ञासयापि निरूपणासम्भव इति भावः।

(क) ननु कथं मर्त्त्यधर्म्मा नासाद्यते इत्याह श्रुतमिति। हि यस्मात्। कथ्यमानं वृद्धैरिति शेषः। सुवर्णपुरम् उत्तरेण सुवर्णपुरस्यादूरे उत्तरस्यां दिशि। उत्तरेणेति "अदूरे एनोऽपञ्चम्याः" इत्येनप्रत्ययः, तद्योगे सुवर्णपुरमिति 'द्वितीयैनेन'ति द्वितीया। पृथिव्याः सर्वजनपदानां सीमान्तलेखा अवधिप्रदर्शिका।

আত্মাই অন্যের ন্যায় হাস্য জন্মায়। (ষ) জানি না—আমার অনুগামী সৈন্যগণ এ স্থান হইতে কত পথে বিভক্ত হইয়া রহিয়াছে! (স) কারণ—মহাবেগবান্ ইন্দ্রায়ুধ এক নিমেষেই বহুদূর অতিক্রম করিয়া থাকে। (হ) আমি আসিবার কালে অশ্বের বেগবশতঃ এবং কিন্নর দুইটার প্রতি নিশ্চল দৃষ্টি রাখায় এই মহাবনের পথ নিরূপণ করিতে পারি নাই যে, ফিরিয়া যাইব; বিশেষতঃ ঘন ঘন বৃক্ষসমূহ, শাখা, গুল্ম ও লতাসমূহে এই মহাবন অত্যন্ত নিবিড় ছিল এবং ঘনভাবে নিপতিত শুষ্ক পত্রসমূহে ইহার নিম্নদেশ আচ্ছন্ন ছিল। (ক্ষ) আমি এই প্রদেশে বিচরণ করিয়া বিশেষ যত্ন করিলেও এমন কোন মানুষ পাইব না, যে সুবর্ণপুরগামী পথ বলিয়া দিবে। (ক) কারণ—আমি প্রাচীনদিগকে বহুতর বলিতে শুনিয়াছি যে, 'সুবর্ণপুরের উত্তরে পৃথিবীর সমস্ত দেশের শেষ সীমার রেখা রহিয়াছে, তাহার পর মনুষ্যহীন অরণ্য এবং তাহা

(१) निमेष···। (२) निबद्धदृष्टिना। (३)···पतित···। (४) कश्चित् मर्त्त्येति नास्ति।

सञ्चातिक्रम्य कैलासगिरिरिति। अयञ्च कैलासः (क)। तदिदानीं प्रतिनिवृत्त्यैकाकिना स्वयमुत्प्रेक्ष्योत्प्रेक्ष्य दक्षिणामाशां केवलमङ्गीकृत्य गन्तव्यम् (ख)। आत्मकृतानां हि दोषाणां नियतमनुभवितव्यं फलमात्मनैव इत्यवधार्य्य वामकरतल-वलित (१) रश्मिपाशस्तुरङ्गमं व्यावर्त्तयामास। (ग)

व्यावर्त्तिततुरङ्गमश्च (२) पुनश्चिन्तितवान्='अयमुद्भासित-प्रभा-भास्वरो भगवान् भानुरधुना दिवसश्रियो रशनामणिरिव नभस्तलमध्यम् (३) अलङ्करोति (घ)। परिश्रान्तश्चायमिन्द्रायुधः, तदेनं तावदागृहीत-कतिपय दूर्वा-प्रवाल कवलं कस्मिंश्चित् सरसि शिलाप्रस्रवणे वा सरिदम्भसि वा स्नातपीतोदकमपनीतश्रमं कृत्वा स्वयञ्च सलिलं पीत्वा कस्यचित्तरोरधश्छायायां मुहूर्त्त-

---

कैलासगिरेरवस्थित इति शेषः। इति कथ्यमानमित्यन्वयः। अयञ्च साम्प्रतं दृश्यमानः स कैलासः। सुतरामत्र मानुषसम्भावनैव नास्तीति भावः।

(ख) तदिति। तत्तस्मात्। स्वयमुत्प्रेक्ष्योत्प्रेक्ष्य आत्मनैव सम्भाव्य सम्भाव्य, दक्षिणामाशां दिशम् अङ्गीकृत्य गन्तव्यत्वेन स्वीकृत्य अवलम्ब्येत्यर्थः, केवलं गन्तव्यम्। तथा च यदि स्वजनः प्राप्यत इति भावः।

(ग) आत्मेति। नियतं निश्चितम्। इत्यवधार्य्य मनसा निश्चित्य। वामकरतलेन वलित आकृष्य धृतः रश्मिपाशः प्रग्रहरज्जुर्येन सः। तुरङ्गमिन्द्रायुधम्।

(घ) व्यावर्त्तितेति। उद्भासितप्रभाभिः सन्दीपितद्युतिभिः भास्वरो विशेषेण दीप्तिमान्, भानुः सूर्य्यः, दिवसश्रियो रशनामणिरिव काञ्चीदामरत्नमिव नभस्तलस्य आकाशस्य मध्यमलङ्करोति, मध्याह्नः प्रवृत्त इत्यर्थः। अत्र श्रौत्युपमालङ्कारः।

(ङ) परीति। एनमिन्द्रायुधम्, आगृहीता मुखेन धृताः खादिता इत्यर्थः कतिपये दूर्वाप्रवालानां

---

অতিক্রম করিয়া কৈলাসপর্ব্বত অবস্থান করিতেছে'; এই সেই কৈলাসপর্ব্বত দেখা যাইতেছে। (খ) সুতরাং এখন একাকীই এখান হইতে ফিরিয়া আপনা আপনিই বিবেচনা করিয়া করিয়া দক্ষিণ দিক্ অবলম্বনপূর্ব্বক কেবলই গমন করিতে হইবে। (গ) 'নিজকৃত দোষের ফল, নিশ্চয় নিজেরই ভোগ করিতে হয়' এইরূপ মনে মনে স্থির করিয়া বামহস্তদ্বারা লাগাম টানিয়া ধরিয়া ঘোড়াটী ফিরাইলেন।

(ঘ) ঘোড়াটী ফিরাইয়া আবার চিন্তা করিতে লাগিলেন—'প্রখর কিরণসমূহে অত্যন্ত দীপ্তিমান্ এই সূর্য্যদেব, এখন দিনলক্ষ্মীর কাঞ্চীদামস্থিত মণির ন্যায় আকাশের মধ্যস্থান অলঙ্কৃত করিতেছেন। (ঙ) এই ইন্দ্রায়ুধও পরিশ্রান্ত হইয়া পড়িয়াছে, অতএব ইহাকে কয়েকটি দূর্ব্বাপল্লবের গ্রাস ভক্ষণ করাইয়া, কোন সরোবরে কিংবা পার্ব্বত্য-প্রস্রবণে অথবা নদীর জলে

---

(१)···वलित···। (२)···तुरङ्गस्य, तुरगस्य। (३) क्वचित् नभस्तलेति नास्ति।

মাত্রং বিশ্রম্য ততো গমিষ্যামি' (ঙ)। ইতি চিন্তয়িত্বা সলিলমন্বিষ্যন্ (১) মুহুর্মুহুরিতস্ততো দত্তদৃষ্টিঃ পর্য্যটন্ নলিনীজলাবগাহোত্থিতস্যাচিরাদপক্রান্তস্য চ মহতো গিরিবরস্য বনগজযূথস্য চরণোত্থাপিতৈঃ (২) পঙ্কপটলৈরার্দ্রীকৃতম্, করাবকৃষ্টৈশ্চ সমৃণালমূলনালৈঃ (৩) কমলকলাপৈঃ কল্মাষিতম্, আর্দ্রার্দ্রৈশ্চ শৈবালপ্রবালৈঃ শ্যামলিতোদ্দেশম্, উদ্দলিতৈশ্চ কুমুদ-(৪) কুবলয়-কহ্লার-কুড্মলৈরন্তরান্তরা বিচ্ছুরিতম্, উৎখাতৈশ্চ সকর্দ্দমৈঃ শালূককন্দৈরাকীর্ণম্, খণ্ডিতৈশ্চ (৫) কুসুমস্তবকশারৈর্বনপল্লবৈরাচ্ছাদিতম্, আলূনাভিশ্চ

দূর্ব্বাপল্লবানাং কবলা গ্রাসা যেন তম্। শিলাপ্রস্রবণে পর্ব্বতনির্ঝরে, সরিদম্ভসি নদীজলে বা, আদৌ স্নাতং স্নানাশ্রয়ীকৃতং পশ্চাৎ পীতম্ উদকং যেন তম্ অতএব অপনীতঃ শ্রমো যস্য তং তাদৃশম্।

(ঙ) ইতীতি। পর্য্যটন্ চন্দ্রাপীড়ো মার্গমদ্রাক্ষীদিতি পরেণান্বয়ঃ। নলিন্যাঃ পদ্মযুক্তস্য সরোবরস্য জলে অবগাহান্মজ্জনাৎ পরমুত্থিতস্য। "নলিনী পদ্মিনী পদ্ম-ব্যোমসিন্ধু সরোজনে। নলিকা যাশ্চ নলিনী" ইতি বিশ্বঃ। অপক্রান্তস্য অপসৃতস্য। পঙ্কপটলৈঃ কর্দ্দমসমূহৈঃ। আর্দ্রীকৃতমিত্যতো দ্বিতীয়ান্তানি পদানি মার্গমিতি বক্ষ্যমাণস্য বিশেষণানি। করাবকৃষ্টৈঃ শুণ্ডাভিরাকৃষ্যানীতৈঃ। অপি চেতি চকারাণামর্থঃ সর্ব্বত্র। কল্মাষিতং বিচিত্রীকৃতম্। আর্দ্রার্দ্রৈরাচরীতোলনাদতিশয়েন জলাক্লিন্নৈঃ, শৈবালপ্রবালৈঃ শৈবালপল্লবৈঃ শ্যামলিতাঃ শ্যামবর্ণীকৃতাঃ উদ্দেশাঃ স্থানানি যস্য তম্। উদ্দলিতৈর্মর্দ্দয়িত্বোৎপাটিতৈঃ, কুমুদানি শ্বেতোৎপলানি, কুবলয়ানি নীলোৎপলানি, কহ্লারাণি সৌগন্ধিকানি, তেষাং কুড্মলৈর্মুকুলৈঃ, অন্তরান্তরা মধ্যে মধ্যে বিচ্ছুরিতং রঞ্জিতম্। উৎখাতৈরুৎপাটিতৈঃ শালূককন্দৈরুৎপলানাং মূলৈঃ, আকীর্ণং ব্যাপ্তম্। "শালূকমেষাং কন্দঃ স্যা"দিত্যমরঃ। অত্র শালূকশব্দেনৈব চরিতার্থত্বে পুনর্মূলার্থককন্দশব্দোপাদানাদধিকপদতাদোষঃ, কন্দপদপরিত্যাগেন বাসৌ সমাধেয়ঃ। খণ্ডিতৈর্ভগ্নৈঃ কুসুমস্তবকশারৈঃ পুষ্পগুচ্ছবিচিত্রৈঃ। আলূনাভিশ্ছ-

স্নান ও জলপান করাইয়া, ইহার পরিশ্রম দূর করিয়া, আপনিও জলপান করিয়া কোন বৃক্ষের নীচের ছায়াতে কিছুকাল বিশ্রাম করিয়া তাহার পরে যাইব' (ঙ) এইরূপ চিন্তা করিয়া জলের অন্বেষণে ইতস্ততঃ বারংবার দৃষ্টিপাত করিয়া বিচরণ করিতে করিতে একটি পথ দেখিতে পাইলেন। পর্ব্বতচারী কতকগুলি বন্য হস্তী সরোবরের জলে অবগাহনপূর্ব্বক উঠিয়া সদ্যই চলিয়া গিয়াছে, চরণদ্বারা উত্থাপিত কর্দ্দমসমূহে সেই পথটি আর্দ্র করিয়াছিল; শুণ্ডদ্বারা মৃণাল, মূল ও নালদণ্ডের সহিত উত্তোলিত কতকগুলি পদ্মে, সেই পথটি বিচিত্র করিয়াছিল, জলাক্লিন্ন শেওলার পল্লবে তাহার বহুস্থান, শ্যামবর্ণ করিয়াছিল; উদ্ধৃত শ্বেতোৎপল, নীলোৎপল ও সুঁধির কলিকাতে মধ্যে মধ্যে সে পথটি রঞ্জিত করিয়াছিল; কর্দ্দমের সহিত উত্তোলিত শালূকে ব্যাপ্ত ছিল; ভগ্ন ও পুষ্পগুচ্ছে বিচিত্র এইরূপ বনপল্লবে

(১) অন্বিষ্যমাণঃ, অন্বিষ্যন্, অন্বেষয়ন্। (২) অপক্রান্তস্য, আগতবতঃ, গিরিচরস্য চরণোত্থাপিতৈঃ। (৩) করিকরাবকৃষ্টৈঃ সমৃণালনালৈঃ। (৪) কমলকুমুদ…। (৫) [illegible]।

কুসুমোপবিষ্টোচ্ছলৎ(১) ষট্পদাভির্বনলতাভিরাকুলিতম্, অভিনবকুসুম-(২) পরিমলবাহিনা চ তমালপল্লবরস-(৩) শ্যামেন মদজলেন সর্ব্বতঃ সিক্তং মার্গমদ্রাক্ষীৎ। (চ)

উপজাতজলাশয়শঙ্কশ্চ (৪) তং প্রতীপমনুসরন্, উদ্গ্রীবদৃশ্যৈরুপরিচ্ছত্রমণ্ড-লাকারৈঃ সরল-সাল-সল্লকী-প্রায়ৈরবিরলৈরপি নিঃশাখতয়া বিরলৈরিবোপলক্ষ্য-মাণৈঃ পাদপৈরুপেতেন, (ছ) স্থূল-কপিল-বালুকেন, (জ) শিলাবহুলতয়া (৫)

---

যাভিঃ কুসুমেষু উপবিষ্টাঃ সন্তঃ উচ্ছলন্তঃ স্ফুরন্তঃ ষট্পদা ভ্রমরা যাসু তাভিঃ। আকুলিতং ব্যাপ্তম্। তথা অভিনবকুসুমস্য সদ্যঃপ্রস্ফুটিতপুষ্পস্য পরিমলং সৌরভং তত্তুল্যগন্ধমিত্যর্থঃ বহতীতি তেন। অনয়োশ্চ অসম্বন্ধ-বস্তুসম্বন্ধরূপা নিদর্শনালঙ্কারঃ। তমালপল্লবস্য রসবৎ নির্য্যাসবৎ শ্যামেন। অত্র লুপ্তোপমালঙ্কারঃ।

(ছ) উপেতি। উপজাতা জলজাদিচিহ্নদর্শনাদুৎপন্না জলাশয়স্য শঙ্কা সম্ভাবনা যস্য সঃ, চন্দ্রাপীড়ঃ, তং মার্গং প্রতীপং প্রতিকূলং যথা স্যাত্তথা অনুসরন্ তদাভিমুখ্যেন গচ্ছন্ কৈলাসতলেন কঞ্চিদধ্বানং গত্বা তরুষণ্ডং দদর্শেত্যন্বয়ঃ। উদ্গ্রীবং যথা স্যাত্তথৈব দৃশ্যৈরত্যুচ্চৈরিত্যর্থঃ, উপরিভাগে ছত্রমণ্ডলস্য আতপত্র-বলয়স্য আকার ইব আকারো যেষাং তৈঃ। অত্র লুপ্তোপমালঙ্কারঃ। সরলসালসল্লক্যঃ স্বনামখ্যাতবৃক্ষ-বিশেষাঃ প্রায়া বহুলা যেষু তৈঃ, অবিরলৈর্ঘনৈরপি নিঃশাখতয়া শিখরপর্য্যন্তশাখাহীনতয়া হেতুনা, বিরলৈ-রসংলগ্নৈরিব উপলক্ষ্যমাণৈর্দৃশ্যমানৈঃ। অত্র গুণোৎপ্রেক্ষালঙ্কারঃ। পাদপৈরুপেতেন—ইত্যতঃ ক্রমবলিতানি তৃতীয়ৈকবচনান্তপদানি কৈলাসতলেনেতি বক্ষ্যমাণস্য বিশেষণানি।

(জ) স্থূলেতি। স্থূলাঃ পীবরাঃ কপিলাঃ পিঙ্গলবর্ণাশ্চ বালুকাঃ সিকতা যস্মিন্ তেন।

(ঝ) শিলেতি। শিলাবহুলতয়া হেতুনা, বিরলা অল্পাঃ, তৃণানি, উলপা বিস্তীর্ণা লতাশ্চ যস্মিন্ তেন। "লতা প্রতানিনী বীরুদ্গুল্মিন্যুলপ ইত্যপি" ইত্যমরঃ।

---

আচ্ছাদিত ছিল; ছিন্ন বন্য লতাতে ব্যাপ্ত ছিল, ভ্রমরগণ সেই লতার ফুলের উপর বসিয়া শোভা পাইতেছিল এবং নূতন পুষ্পের ন্যায় সৌরভবাহী ও তমালপল্লবের নির্য্যাসের ন্যায় শ্যামবর্ণ হস্তিগণের মদজলে সেই পথটির সকল স্থান সিক্ত ছিল।

(ছ) সেই পথ দেখিয়া নিকটে জলাশয় আছে বলিয়া চন্দ্রাপীড়ের ধারণা জন্মিল; তখন তিনি সেই পথের অভিমুখে কৈলাসপর্ব্বতের নীচ দিয়া যাইতে লাগিলেন; সেই স্থানে বহুতর বৃক্ষ ছিল, সেগুলিকে উদ্গ্রীব হইয়া দেখিতে হইত; সেগুলির উপরিভাগ, ছত্রের ন্যায় মণ্ডলাকার পত্র ও পল্লবে আচ্ছন্ন ছিল; তাহার মধ্যে সরল, সাল ও সল্লকীবৃক্ষই অধিক পরিমাণে ছিল, এবং ঘন হইলেও শাখা না থাকায় ফাঁক ফাঁক হইয়া রহিয়াছে বলিয়া বোধ হইতেছিল। (জ) সে স্থানে পিঙ্গলবর্ণ বড় বড় বালি ছিল; (ঝ) প্রস্তরময় বলিয়া তৃণ ও লতা

---

(১) কুসুমোপবিষ্টনিষ্পিষ্টোচ্ছলৎ···। (২) বকুলকুসুম···। (৩)···সরস···
(৪)···জলাশয়। (৫) শিলাতলবহুলতয়া।

विरलशष्पोलपेन, (ञ) वन-द्विप-दशन-दलित-मनःशिला-धूलि-कपिलेन, (ट) आभङ्गिनीभिरुत्कीर्णाभिरिव पत्रभङ्गकुटिलाभिः पाषाणभेदकमञ्जरीभिर्जटिलीकृतशिलातलेन, (ठ) अनवरत-गलद्गुग्गुलु-द्रुम-द्रवार्द्रीकृतदृषदा, (ड) शिखर-स्रुत-शिला-जतु-रस-पिच्छिलोपलेन, (ढ) टङ्कन-हय-खुर-खण्डित-हरिताल-क्षोद-पांशुलेन, (ण) आखुनखरोत्खात-बिल-विप्रकीर्ण-(१) काञ्चन-चूर्णेन, (त) सिकता-निमग्न-चमर-(२) कस्तूरिका-मृगी-खुर-पङ्क्ति-

(ञ) वनेति। वनद्विपानां वन्यहस्तिनां दशनैर्दन्तैर्दलितानां मर्दितानां मनःशिलानां पार्वत्यधातुविशेषाणां धूलिभिः रेणुभिः कपिलेन पिङ्गलवर्णेन।

(ट) आभङ्गीति। आभङ्गी विविधभङ्गिरासामस्तीति ताभिः, अतएव उत्कीर्णाभिरिव पाषाणं खनित्वा निर्मिताभिरिव स्थिताभिः, पत्रभङ्गवत् कपोलादौ पत्रलताचिह्नवत् कुटिलाभिर्वक्राभिः, पाषाणभेदकानां वृक्षविशेषाणां मञ्जरीभिः जटिलीकृतानि विषमितानि शिलातलानि पाषाणाभ्यन्तराणि यस्य तेन। अत्र क्रियोत्प्रेक्षालुप्तोपमयोर्मिथो निरपेक्षतया संसृष्टिः। "पाषाणभेदनः (पु) वृक्षविशेषः" इति कल्पद्रुमः।

(ठ) अनेति। अनवरतं गलद्भिः गुग्गुलुद्रुमाणां द्रवैर्निर्यासैः आर्द्रीकृता दृषदः पाषाणा यस्मिन् तेन।

(ड) शिखरेति। शिखरात् शृङ्गात् स्रुतेन गलितेन शिलाजतुरसेन तदाख्यधातुद्रवेण पिच्छिला उपलाः प्रस्तरा यस्मिन् तेन।

(ढ) टङ्कनेति। टङ्कनानि पाषाणविदारणास्त्राणीव ये हयानामश्वानां खुराः तैः खण्डितानां चूर्णितानां हरितालानां क्षोदैश्चूर्णैः पांशुलं धूलिमयं तेन। "टङ्कः पाषाणदारणः" इत्यमरः।

(ण) आखिविति। आखूनाम् उन्दुरूणां नखरैर्नखैः उत्खातेभ्यः कृतेभ्यो बिलेभ्यो गर्तेभ्यः विप्रकीर्णानि विक्षिप्तानि काञ्चनचूर्णानि सुवर्णरेणवो यस्मिन् तेन।

(त) सिकतेति। सिकतासु वालुकासु निमग्ना अवगाढा चामराणां हरिणविशेषाणां कस्तूरिकामृगीणाञ्च खुरपङ्क्तिः खुरचिह्नश्रेणिर्यस्मिन् तेन।

অল্পই ছিল। (ঞ) বন্য হাস্তিগণের দন্তদ্বারা চূর্ণিত মনঃশিলার রেণুতে সে স্থানটি পিঙ্গলবর্ণ হইয়াছিল। (ট) হাড়জোড়া গাছের মঞ্জরীতে দুই দুইখানা পাথরের মধ্যস্থান দুর্গম করিয়াছিল; সেগুলি, কপোল-চিত্রিত পত্রলতাচিহ্নের ন্যায় বক্র ছিল এবং নানাবিধ ভঙ্গী থাকায় সেগুলিকে পাষাণ হইতে খোদিতের ন্যায় দেখা যাইতে ছিল; (ঠ) গুগ্গুলুবৃক্ষ হইতে অনবরত নির্য্যাস গলিত হইয়া পাথরগুলিকে আর্দ্র করিয়াছিল; (ড) শৃঙ্গ হইতে গলিত শিলাজতুর রসে পাথরগুলি পিছল হইয়াছিল; (ঢ) সাবলের ন্যায় ঘোড়ার খুরদ্বারা বিদীর্ণ হরিতালের রেণুতে সে স্থানটি ধূলিময় হইয়াছিল; (ণ) মূষিকের নখনির্ম্মিত গর্ত্ত হইতে স্বর্ণরেণু সকল বিক্ষিপ্ত ছিল, (ত) চমরমৃগ ও কস্তুরীমৃগের খুরের চিহ্ন সকল

(१)…प्रकीर्ण…। (२) …चमरक…।

শিলা, (ত) সংশীর্ণ-রঙ্কু-(১) রল্লক রোম-প্রকর-নিচিতেন, (থ) বিষম-শিলা-চ্ছেদোপবিষ্ট-জীবঞ্জীবক-যুগলেন, (দ) বনমানুষমিথুনাধ্যাসিততটগুহামুখেন, (ধ) গন্ধপাষাণ-পরিমলামোদিনা, বেত্রলতাপ্রতানপ্ররূঢ়বেণুনা (২) কৈলাস-তলেন, (ন) কশ্চিদধ্বানং গত্বা তস্যৈব কৈলাসশিখরিণঃ পূর্ব্বোত্তরে দিগ্ভাগে জলভারালসং (৩) জলধর ব্যূহমিব বহুল-পক্ষ-ক্ষপান্ধকারমিব (৪) পুঞ্জীকৃত-মত্যায়ত-তরুষণ্ডং (৫) দদর্শ। তত্র (৬) সম্মুখাদাগতেন (৭)

---

(থ) সংশীর্ণেতি। সংশীর্ণেন দেহাৎ পতিতেন রঙ্কূণাং রল্লকানাঞ্চ হরিণবিশেষাণাং রোমপ্রকরেণ লোম-সমূহেন নিচিতং ব্যাপ্তং তেন।

(দ) বিষমেতি। বিষমেষু উচ্চাবচেষু শিলাচ্ছেদেষু প্রস্তরখণ্ডেষু উপবিষ্টানি জীবঞ্জীবকযুগলানি চকোরপক্ষিমিথুনানি যস্মিন্ তেন। জীবং প্রাণিনং জীবয়তি বিষনাশনেনেতি জীবঞ্জীবকঃ। "জীবঞ্জীবশ্চকোরে স্যাৎ দ্রুমভিদেঽপি পুংস্ময়ম্।" ইতি মেদিনী।

(ধ) বনেতি। বনমানুষাণাং মিথুনৈর্দম্পতিভিঃ অধ্যাসিতানি তটগুহামুখানি পার্ব্বত্যগহ্বরদ্বারাণি যত্র তেন।

(ন) গন্ধেতি। গন্ধপাষাণানাং গন্ধকানাং পরিমলেন সৌরভেণ আমোদিনা আহ্লাদকারিণা। "গন্ধ-পাষাণঃ (পুং) গন্ধকঃ।" ইতি শব্দকল্পদ্রুমঃ। বেত্রলতানাং প্রতানেষু গুচ্ছেষু প্ররূঢ়া উৎপন্না বেণবো বংশা যস্মিন্ তেন। কৈলাসতলেন কৈলাসপর্ব্বতস্য নিম্নদেশেন।

(প) কশ্চিদিতি। কিঞ্চিদধ্বানং কিয়ন্তং পন্থানম্। জলধরব্যূহং মেঘসমূহমিব, তথা বহুলপক্ষস্য কৃষ্ণপক্ষস্য ক্ষপায়া রাত্রেঃ অন্ধকারমিব, নিবিড়তয়া গাঢ়কৃষ্ণবর্ণমিতি ভাবঃ। অত্যায়তং বহুস্থানব্যাপি, তরু-ষণ্ডং বৃক্ষসমূহম্। অত্র শ্রৌতোপমাদ্বয়স্য পরস্পরনিরপেক্ষতয়া সংসৃষ্টিঃ।

[ফ] তত্রেতি। কুসুমরজসাং পুষ্পপরাগাণাং কষায়ৈঃ সৌরভৈঃ আমোদিনা আহ্লাদকারিণা, "কষায়ঃ

---

বালুকারাশির উপরে পড়িয়াছিল; (থ) রঙ্কুমৃগ ও কম্বলমৃগের গাত্র হইতে লোমসমূহ পতিত হইয়া সে স্থানটা ব্যাপ্ত করিয়াছিল; (দ) উচু নীচু পাথরখণ্ডের উপরে বহুতর চকোরপক্ষী বসিয়াছিল; (ধ) পর্ব্বতগহ্বরের দ্বারে বহুসংখ্যক বনমানুষদম্পতি অবস্থান করিতেছিল; (ন) গন্ধকের গন্ধে আমোদ জন্মাইতেছিল এবং বেতের ঝাড়ের ভিতরে বাঁশের ঝাড় জন্মিয়াছিল; (প) চন্দ্রাপীড় সেই কৈলাসপর্ব্বতের নীচ দিয়া কিছু পথ অতিক্রম করিয়া সেই কৈলাসপর্ব্বতেরই পূর্ব্বোত্তর কোণে, জলভারে মন্থর মেঘসমূহের ন্যায় এবং কৃষ্ণ পক্ষের রাত্রির অন্ধকারের ন্যায় কৃষ্ণবর্ণ, বহুস্থানব্যাপি ও পুঞ্জীকৃত বৃক্ষসমূহ দেখিতে পাইলেন। (ফ) পুষ্পরেণুর সৌরভে আহ্লাদজনক, জলসংস্পর্শে শীতল,

---

(১) সংশীর্ণজীর্ণরঙ্কু, সঙ্কীর্ণরঙ্কু, সঙ্কীর্ণজীর্ণরল্লক… [২]…প্রতানবেত্রাপ্ররূঢ়…। [৩] জল-ভারাবনতজল…। (৪) বহুলক্ষপা…। (৫) বিবিধতরুখণ্ডম্। (৬) তত্র। (৭) সম্মুখাগতেন।

कुसुम-(१) रजः-कषायामोदिना जलसंसर्गशिशिरेण शीकरिणा (२) चन्दन-रस-स्पर्शेन (३) आलिङ्ग्यमान इव जलतरङ्गमारुतेन, कमलमधुपानमत्तानाञ्च श्रोत्रहारिभिः कलहंसानां कोलाहलैराहूयमान इव प्रविवेश (४)। (फ)

प्रविश्य च तस्य तरुषण्डस्य मध्यभागे मणिदर्पणमिव त्रैलोक्यलक्ष्म्याः, स्फटिकभूमिगृहमिव वसुन्धरादेव्याः, (५) निर्गमन-(६) मार्गमिव सागराणाम्, निस्यन्दमिव दिशाम्, अवतारमिव जलाकारम् (७) गगनतलस्य, कैलासमिव द्रवतामापन्नम्, तुषारगिरिमिव विलीनम्, चन्द्रातपमिव रसतामुपेतम्, हराट्टहासमिव जलीभूतम्, त्रिभुवन-पुण्यराशिमिव सरोरूपेणावस्थितम्,

सुरभौ रसे" इति त्रिकाण्डशेषः, जलसंसर्गेण शिशिरः शीतलस्तेन, शीकरिणा जलबिन्दुवता, तथा चन्दनरसस्य स्पर्श इव स्पर्शो यस्य तेन, जलतरङ्गमारुतेन आलिङ्ग्यमान इव। अत्र क्रियोत्प्रेक्षालङ्कारः। तरङ्गशब्देन आवश्यकत्वस्यापि बोधनात् तद्याहतये जलपदमिति नाधिकपदत्वदोषः। कमलमधुपानमत्तानां कलहंसानां श्रोत्रहारिभिर्मधुरतया कर्णाकर्षकैः कोलाहलैराहूयमान इव च सन् तत् तरुषण्डं प्रविवेश च इत्यन्वयः। अत्रापि क्रियोत्प्रेक्षालङ्कारः।

(ब) प्रविश्येति। किञ्च प्रविश्य तस्य तरुषण्डस्य मध्यभागे अच्छोदं नाम सरो दृष्टवानिति दूरवर्त्तिन्या क्रियया न्वयः। अथ द्वितीयान्तपदानि अच्छोदं नाम सर इत्यस्य विशेषणानि। त्रैलोक्यलक्ष्म्या मणिदर्पणमिव स्वच्छतया सर्वप्रतिबिम्बग्रहणात्। अत्र जात्युत्प्रेक्षालङ्कारः। वसुन्धरादेव्याः स्फटिकभूमिगृहमिव भूगर्भगतं स्फटिकमयं भवनमिव विशदत्वात्। जात्युत्प्रेक्षा। सागराणां निर्गमनमार्गमिव पातालात् भूतले निःसरणपथमिव विस्तृतत्वादतलस्पर्शत्वाच्च। जात्युत्प्रेक्षा। दिशां निस्यन्दमिव द्रवीभूय गलनमिव निर्मलत्वात्। क्रियोत्प्रेक्षा। गगनतलस्य जलाकारम् अवतारमिव निर्मलत्वादेव। क्रियोत्प्रेक्षा। द्रवतामापन्नं कैलासं पर्वतमिव शुभ्रत्वात्। द्रव्योत्प्रेक्षा। विलीनं द्रवीभूतं तुषारगिरिं हिमाचलमिव शीतलत्वात्; द्रव्योत्प्रेक्षा। रसतामुपेतं जलतां प्राप्तं चन्द्रस्य आतपं प्रभामिव निर्मलशीतलशुभ्रत्वात्। जात्युत्प्रेक्षा। जली-

জলবিন্দুবাহী এবং চন্দনরসের ন্যায় শীতলস্পর্শী সম্মুখ হইতে আগত জলতরঙ্গের বায়ু তাঁহাকে যেন আলিঙ্গন করিতে লাগিল এবং পদ্মের মধুপানে মত্ত কলহংসের সুমধুর কোলাহল তাঁহাকে যেন আহ্বান করিতে লাগিল—এই অবস্থায় চন্দ্রাপীড় সেই বৃক্ষসমূহমধ্যে প্রবেশ করিলেন।

(ব) চন্দ্রাপীড় প্রবেশ করিয়া সেই বৃক্ষসমূহের মধ্যস্থানে 'অচ্ছোদ' নামে একটি সরোবর দেখিতে পাইলেন। ত্রিলোকলক্ষ্মীর মণিময় দর্পণের ন্যায়, পৃথিবীদেবীর ভূতলান্তর্গত স্ফটিকময় গৃহের ন্যায়, পাতাল হইতে সমুদ্রগণের ভূতলে নির্গত হইবার পথের ন্যায়, দিক্-

(१) कुमुद…। (२) शिशिरशीकरिणा। (३)…रससमस्पर्शेन। (४) विवेश।

(५) वसुधादेव्याः। (६) जलनिर्गमन…।

(७) अंशावतारमिव गगनतलस्य, अवतारमिव जलाकारम्, अंशावतारं जलाकारं…।

पादाङ्किततलैः, (१) (ढ) आरब्धपञ्चतपःक्रियैरिवोच्छिखशिखिमण्डल-परिवृतैः, (ण) दीक्षितैरिव कृतकृष्णसारविषाणकण्डूयनैः, (त) जरद्गृहस्थ-मुनिभिरिव जटालबालकमण्डलधरैः, (२) (थ) इन्द्रजालिकैरिव दृष्टि-हारिभिः, (द) पादपैः परिवृतं चन्द्रप्रभनाम्नस्तस्य सरसः पश्चिमे तीरे

स्पृष्टा गुञ्जा येषु तैः, अन्यत्र तु वानरवत् कराङ्गुलिभिः स्पृष्टा गुञ्जा यैस्तैः। सुवर्णादिमापमसमये सर्वैरेव गुञ्जा स्पृश्यते। पूर्णोपमा।

(ढ) अवनीति। अवनिपालशयनैः राजशय्याभिरिव, सिंहानां पादैश्चरणचिह्नैः अङ्कितानि तलानि निम्नभूतलानि येषां तैः, अन्यत्र तु सिंहानां पादैरिव पादैः पर्य्यङ्कपादैः अङ्कितं तलम् अधोवर्त्ती पर्य्यङ्को येषां तैः। पूर्णोपमा।

(ण) आरब्धेति। आरब्धा पञ्चतपःक्रिया पञ्चाग्निसाधनकार्य्यं यैस्तैस्तपस्विभिरिव ज्वलताम् चतुर्षु कोणेषु चत्वारः प्रज्वलितवह्नयः उपरि च सूर्य्य इत्यमर्वास्थिता ये तपस्यान्ति ते पञ्चतपस उच्यन्ते तैरिवेत्यर्थः, उद्गता शिखाश्चूडा अर्च्चिश्च यस्य तेन शिखिमण्डलेन मयूरगणेन अग्निसमूहेन च परिवृतास्तैः। पूर्णोपमा।

(त) दीक्षितेति। दीक्षितैर्यज्ञे सञ्जातदीक्षैर्यजमानैरिव, कृतं कृष्णसारैर्हरिणविशेषैः कर्त्तृभिः विषाणैः शृङ्गैः करणैः कण्डूयनं येषां तैः अन्यत्र तु कृतं कृष्णसारविषाणैः कण्डूयनं गात्रकण्डूया यैस्तैः, यज्ञे दीक्षितानां कृष्णसारशृङ्गेण गात्रकण्डूयनविधानादिति भावः। तथा च श्रुतिः "कृष्णविषाणया कण्डूयते।" कात्यायनश्च "कृष्णविषाणां त्रिवलिं पञ्चवलिं वोभयतो बध्नीत तया कण्डूयनम्।" पूर्णोपमा।

(थ) जरदिति। जरन्तो वृद्धा ये गृहमुनयो गृहस्थास्तापसास्तैरिव, जटासु मूलेषु आलवालकानां जलधाराणां मण्डलं समूहं धरन्तीति तैः, अन्यत्र तु जटालं जटाविशिष्टं बालकमण्डलं शिशुसमूहं धरन्ति परिपालयन्तीति तैः। तेषां पत्नीसहिततया बालकोत्पत्तिसम्भव इति बोध्यम्। पूर्णोपमा। "जटा लग्नकचे मूले मांस्यां प्रचे पुनर्जटी।" इति मेदिनी।

(द) इन्द्रेति। इन्द्रजालिकैर्जनैरिव, दृष्टिहारिभिः सुन्दरत्वान्नयनाकर्षिभिः, अन्यत्र तु स्वप्रभावाद्दर्शकानां यथायथदृष्टिशक्तिलोपिभिः। पूर्णोपमालङ्कारः।

বৃক্ষসমূহের মধ্যেও বানরগণ হস্তের অঙ্গুলীদ্বারা গুঞ্জা (কুঁচ) স্পর্শ করিতেছিল; (ঢ) রাজগণের শয্যার নীচের পর্য্যঙ্ক যেমন সিংহের পায়ের ন্যায় পায়াসংযুক্ত থাকে, সেই বৃক্ষসমূহের নীচের স্থানগুলিও তেমন সিংহের পায়ের চিহ্নে চিহ্নিত ছিল; (ণ) যাঁহারা পঞ্চাগ্নিসাধনরূপ তপস্যা আরম্ভ করেন, তাঁহারা যেমন প্রজ্বলিত অগ্নিসমূহে পরিবেষ্টিত থাকেন, সেই বৃক্ষসমূহও তেমন চূড়াসমন্বিত ময়ূরগণে পরিবেষ্টিত ছিল; (ত) যজ্ঞে দীক্ষিত হইয়া যজমানগণ যেমন কৃষ্ণসারের শৃঙ্গদ্বারা গাত্র-কণ্ডূয়ন করেন, সেই বৃক্ষসমূহেও তেমন কৃষ্ণসারগণ শৃঙ্গদ্বারা কণ্ডূয়ন করিতেছিল; (থ) বৃদ্ধ গৃহস্থ মুনিগণ যেমন জটাধারী বালকগণকে পরিপালন করেন, সেই বৃক্ষসমূহও তেমন মূলদেশে আলবাল ধারণ করিতেছিল; (দ) ঐন্দ্র-

(१)…अङ्कितनतलैः। (२) दीर्घजटा,…कमण्डलुधरैः।

कैलासपादस्य ज्योत्स्नावदातया प्रभया धवलयतस्तं प्रदेशं तल-(१) भागसन्निविष्टं भगवतः शूलपाणेः शून्यम् (२) सिद्धायतनमपश्यत्। (ध)

तत्र पवनोद्धूतैः (३) इतस्ततः समापतद्भिः केतकीगर्भधूलिपटलैः (४) धवलीक्रियमाणकायः पशुपतिदर्शनहेतोर्बलादिव प्रतिपाद्यमानो भस्मव्रतम्, आयतनप्रवेशपुण्यैरिव परिगृह्यमाणः प्रविश्य चाद्राक्षीत् (न) चतुःस्तम्भस्फटिकमण्डपिकातलप्रतिष्ठितम्, अचिरोद्धृतैरार्द्रार्द्रदलशिखर-गलज्जलबिन्दुभिः (५) ऊर्द्ध-

(ध) पादपैरिति। पादपं [illegible]। तस्य सरसः पश्चिमे तीरे ज्योत्स्नावत्-अवदातया शुक्लया प्रभया निजदीप्त्या तं प्रदेशं धवलयतः धवलं कुर्व्वतः, चन्द्रप्रभनाम्नः कैलासपादस्य कैलासप्रत्यन्तपर्व्वतस्य तलभागसन्निविष्टम् अधोदेशस्थितं भगवतः शूलपाणेः शिवस्य, शून्यं लोकरहितम्। लोका यत्र सिद्धिं लभन्ते तत् सिद्धायतनम्।

(न) तत्रेति। तदायतनं प्रविश्य च त्र्यम्बकमद्राक्षीदित्यन्वयः। पवनोद्धूतैः वायुपरिचालितैः। केतकीगर्भधूलिपटलैः केतकीकुसुमाभ्यन्तररेणुसमूहैः, धवलीक्रियमाणः कायो देहो यस्य सः, अतएव पशुपतिदर्शनहेतोः केतकीगर्भधूलिपटलैरेव बलात् भस्मव्रतम् अङ्गेषु भस्मधारणनियमं प्रतिपाद्यमानः कार्य्यमाण इव सन्। "विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया। पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः॥" इत्याह्निकतत्त्वधृतवचनतात्पर्य्यादिति भावः। अत्र क्रियोत्प्रेक्षालङ्कारः। तथा तदायतनप्रवेशपुण्यैः परिगृह्यमाण आलिङ्ग्यमान इव च सन्। अत्रापि क्रियोत्प्रेक्षालङ्कारः।

(प) चतुरिति। चत्वारः स्तम्भाः स्थूणा यस्याः सा चतुःस्तम्भा या स्फटिकमण्डपिका स्फटिकमयः क्षुद्रमण्डपस्तस्यास्तले अधोभागे प्रतिष्ठितम्। त्र्यम्बकमित्यस्य विशेषणमेतत्। अचिरोद्धृतैरेव आर्द्रार्द्रैः अतिशय-

জালিকগণ যেমন আপনার ক্ষমতাবলে লোকের দৃষ্টি হরণ করে, সেই বৃক্ষসমূহও তেমন সুন্দর বলিয়া নয়ন আকর্ষণ করিতেছিল; (ধ) সেই অচ্ছোদসরোবরের পশ্চিম তীরে কৈলাস-পর্ব্বতের নিকট চন্দ্রপ্রভ নামে একটি পর্ব্বত আছে; সে, জ্যোৎস্নার ন্যায় ধবলবর্ণ স্বকীয় প্রভাদ্বারা সেই স্থানটা ধবলবর্ণ করিতেছিল; তাহার নিম্নদেশে ভগবান্ মহাদেবের সেই সিদ্ধায়তনটি ছিল, কিন্তু সেখানে জনমানব ছিল না।

(ন) চন্দ্রাপীড় যাইয়া সেই সিদ্ধায়তনে প্রবেশ করিলেন, তখন কেতকীকুসুমের ভিতরের রেণুসমূহ বায়ুবেগে চতুর্দ্দিকে বিক্ষিপ্ত হইয়া পড়িতেছিল, তাহাতেই চন্দ্রাপীড়ের শরীর ধবলবর্ণ করিয়া ফেলিল; সুতরাং বোধ হইতেছিল যে, মহাদেবের দর্শন করিবেন বলিয়াই যেন কেতকীকুসুমের রেণুগুলি তাঁহাকে বলপূর্ব্বক ভস্মধারণ করাইয়া দিতেছে এবং পবিত্র শিবালয়ে প্রবেশ করার পুণ্যেই যেন আলিঙ্গন করিতেছে। (প) তাহার পরে দেখিতে পাইলেন—চারিটি স্তম্ভের উপরে স্ফটিকময় একখানি ক্ষুদ্র মণ্ডপ, তাহার নীচে, সংস্থ

(१) भूतल…। (२) क्वचित् शून्यमिति न दृश्यते।
(३) पवनोद्धूतैः। (४)…धूलिभिः। (५) आर्द्रार्द्रदल…, आर्द्रार्द्रशिखर…।

विपाटित-चन्द्रबिम्बदलैरिव निजाट्टहासावयवैरिव शेषफणाशकलैरिव पाञ्चजन्य-सहोदरैरिव क्षीरोदहृदयाकारैरुपपादितमौक्तिकमुकुटविभ्रमैः शुचिभिर्मन्दाकिनीपुण्डरीकैः कृतार्च्चनम्, अमलमुक्ताशिलाघटितलिङ्गम्, अशेषत्रिभुवनवन्दित-चरणम्, चराचरगुरुं चतुर्मुखं भगवन्तं त्र्यम्बकम्। (प)

तस्य च दक्षिणां मूर्त्तिमाश्रित्याभिमुखीमासीनाम्, (१) (फ) उपरचित-

---

छिन्नेभ्यः दलशिखरेभ्यः पत्राग्रेभ्यः गलन्तो जलबिन्दवो येषां तैः, अतएव च ऊर्द्ध उपरिभागे विपाटितस्य विदारितस्य चन्द्रबिम्बस्य दलैः खण्डैरिव स्थितैः, तेभ्योऽप्यमृतबिन्दुक्षरणादिति भावः। अत्र जात्युत्प्रेक्षालङ्कारः। निजस्य शिवसम्बन्धिनः अट्टहासस्य अवयवैरिव। पूर्ववदुत्प्रेक्षा। शेषस्य अनन्तनागस्य फणानां शकलैः खण्डैरिव, तेषामपि शुभ्रत्वादनुन्नताकारत्वाच्चेति भावः। पूर्ववदुत्प्रेक्षा। पाञ्चजन्यः कृष्णस्य शङ्खस्तस्य सहोदरैर्भ्रातृभिरिव, शुभ्रत्ववर्त्तुलत्वसाम्यादिति भावः। पूर्ववदलङ्कारः। क्षीरोदस्य सागरस्य हृदयाकारैः हृत्पुण्डरीकतुल्यैः, समानशुभ्रत्वादिति भावः। अत्र आर्थोपमालङ्कारः। तथा उपपादितो दृष्ट्या विहितो मौक्तिकमुकुटविभ्रमः स्वेषु मुक्तामयकिरीटभ्रान्तिर्यैस्तैः अत भ्रान्तिमानलङ्कारः। शुचिभिः पवित्रैः मन्दाकिनीपुण्डरीकैः स्वर्गगङ्गाजातश्वेतपद्मैः, कृता अर्च्चना पूजा यस्य तम्। अमलया मुक्ताशिलया मौक्तिकतुल्यश्वेत-प्रस्तरेण घटितं निर्म्मितं लिङ्गमाकृतिर्यस्य तम्। त्र्यम्बकं शिवम्। “तदूर्द्धभागः सञ्जातश्चतुर्वक्त्रश्चतुर्भुजः। पद्मकेशरगौराङ्गकायो ब्रह्मा महेश्वरः।” इति कालिकापुराणीयदशमाध्यायवचनात् शिवस्य चतुर्मुखमूर्त्तिरपि प्रसिद्धा। केचित्तु एतद्वचनानवलोकनेन समाधानाय समाकुलाः सन्तो मोहविजृम्भितमनेकविधमेव प्रलपितवन्तः।

(फ) तस्येति। किञ्च तस्य त्र्यम्बकस्य दक्षिणां दक्षिणाभिमुखीं मूर्त्तिम् आश्रित्य लक्ष्यीकृत्य अभि-मुखीमासीनां तत्सम्मुखे उत्तरमुखीं सतीमुपविष्टाम्, प्रतिपन्नपाशुपतव्रतां कन्यकां ददर्शेति बहुदूरवर्त्तिन्या क्रिययान्वयः। अथ द्वितीयैकवचनान्तपदानि कन्यकामित्यस्य विशेषणानि।

[ब] उपेति। उपचरितं कृतं ब्रह्मण आसनमिव आसनं यया ताम्, पद्मासनोपविष्टामित्यर्थः।

---

ত্রিভুবনের লোক যাঁহার চরণযুগলের সেবা করে এবং যিনি চরাচর জগৎসংসারের গুরু, সেই ভগবান্ মহাদেবের নির্ম্মল মুক্তার ন্যায় শ্বেতবর্ণ প্রস্তরদ্বারা নিশ্মিত চতুর্মুখ একখানি মূর্ত্তি প্রতিষ্ঠিত রহিয়াছে, স্বর্গগঙ্গা হইতে অনতিপূর্ব্বে উদ্ধৃত পবিত্র কতকগুলি শ্বেতপদ্ম-দ্বারা কেহ তাঁহার পূজা করিয়াছে, অত্যন্ত আর্দ্র সেই পদ্মগুলির দলাগ্র হইতে জলবিন্দু পড়িতেছে; উপরিভাগ বিদারিত হইলে চন্দ্রমণ্ডলের খণ্ডসমূহের ন্যায়, শিবের অট্টহাস্যের অংশসমূহের ন্যায়, অনন্তনাগের ফণাখণ্ডগুলির ন্যায়, পাঞ্চজন্য শঙ্খের সহোদরগণের ন্যায় এবং ক্ষীরোদসাগরের হৃৎপদ্মের ন্যায় সেই শ্বেতপদ্মগুলিকে দেখা যাইতেছিল; আর সেই পদ্মগুলি মুক্তাময় মুকুটের ভ্রম জন্মাইতেছিল।

(ফ) চন্দ্রাপীড় আরও দেখিতে পাইলেন যে, সেই দক্ষিণাভিমুখী শিবমূর্ত্তির সম্মুখে

---

[१] अभिमुखमासीनाम्।

पद्मासनाम्, (ब) अतिविस्तारिणा सर्वदिङ्मुखप्लावकेन प्रलय-परिप्लुत-(१) क्षीरपयोधि-पूर-पाण्डुरेण (२) अतिदीर्घकालसञ्चितेन तपोराशिनेव सर्वतो विसर्पता (३) पादपान्तरे त्रिस्रोतोजलनिभेन पिण्डीभूय वहतेव देहप्रभाविता-नेन सगिरिकाननं चन्द्रमयमिव (४) तं प्रदेशं कुर्वतीम्, (भ) अन्यथैव धवलयन्तीं कैलासगिरिम्, (म) अन्तर्द्रष्टुरपि लोचनपथप्रविष्टेन (५) श्वेतिमानमिव मनो नयन्तीम्, (य) अतिधवलप्रभापरिगतदेहतया स्फटिक-गृहगतामिव दुग्धसलिलमग्नामिव विमलचीनांशुकान्तरितामिव (६) आदर्शतल-

[भ] अतीति। प्रलयकाले परिप्लुतस्य उद्वेलितस्य क्षीरपयोधेः पूरवत् प्रवाहवत् पाण्डुरेण शुभ्रवर्णेन। अत्र लुप्तोपमालङ्कारः। सर्वतो विसर्पता समन्तात् प्रसरता, अतिदीर्घकालसञ्चितेन तपोराशिनेव स्थितेन। अत्र तपसो वैधर्म्ये शुक्लत्वेन गुणत्वाद्गुणोत्प्रेक्षालङ्कारः। त्रिस्रोतसो मन्दाकिन्या जलनिभेन। अत्र श्रौतोपमालङ्कारः। पादपान्तरेषु वृक्षाणामन्तरालदेशेषु पिण्डीभूय प्रसरद्भिः तरुभिः प्रतिबन्धकतावशात् परस्परं सम्मिश्रीभूय वहतेव। अत्र क्रियोत्प्रेक्षालङ्कारः। देहस्य प्रभावितानेन दीप्तिपरम्परया सगिरिकाननं तं प्रदेशं चन्द्रमयमिव कुर्वतीम्, तत्प्रभायाः शुभ्रत्वादिति भावः। अत्र गुणोत्प्रेक्षालङ्कारः उक्तपूर्वालङ्कारैः सङ्कीर्य्यते।

(म) अन्यथेति। अन्यथा अन्येन प्रकारेणैव देहप्रभयैव कैलासगिरिं धवलयन्तीं स्वतो धवलमपि पुनः अतिशयधवलं कुर्वतीमिव स्थिताम्। अत्र प्रतीयमाना क्रियोत्प्रेक्षालङ्कारः।

(य) अन्तरिति। द्रष्टुरपि जनस्य अन्तर्हृदयाभ्यन्तरे लोचनपथप्रविष्टेन देहप्रभावितानेन मनः श्वेतिमानं धावल्यं नयन्तीं प्रापयन्तीमिव स्थिताम्, दर्शनमात्रेण द्रष्टुर्मनसोऽपि सन्तोषेण प्रसन्नत्वादिति भावः। अत्र क्रियोत्प्रेक्षालङ्कारः।

(र) अतीति। अतिधवलया प्रभया परिगतः परिवेष्टितो देहो यस्यास्तस्या भावस्तया हेतुना।

একটী কন্যা উত্তরমুখী হইয়া বসিয়া রহিয়াছে; (ব) সে পদ্মাসন করিয়া বসিয়াছিল; (ভ) তাহার দেহের কান্তিপ্রবাহ অতিবিস্তৃতভাবে নির্গত হইয়া সকল দিক্ প্লাবিত করিতেছিল, প্রলয়কালীন উদ্বেলিত ক্ষীরোদসাগরের প্রবাহের ন্যায় শুভ্রবর্ণ ছিল, সর্ব্বদিগ্‌ব্যাপী দীর্ঘকালসঞ্চিত তপস্যারাশির ন্যায় বিরাজ করিতেছিল এবং মন্দাকিনীর জলপ্রবাহের ন্যায় গাছের ভিতর দিয়া একত্র মিলিত হইয়া বহিত হইতেছিল; এইরূপ দেহের প্রভাদ্বারা সে, যেন পর্ব্বত ও বনের সহিত সেই স্থানটা সম্পূর্ণ চন্দ্ররশ্মিময় করিতেছিল; (ম) কৈলাস-পর্ব্বতকে অন্য রকমেই যেন ধবলবর্ণ করিতেছিল; (য) সেই কন্যাটিকে দেখিবামাত্রই তাহার দেহের কান্তিপ্রবাহ, দ্রষ্টার নয়নপথের ভিতরে প্রবেশ করিয়াই যেন মনপর্য্যন্ত শুভ্রবর্ণ করিতেছিল; (র) অত্যন্ত ধবলবর্ণ প্রভাপুঞ্জে তাহার দেহখানি পরিবেষ্টিত ছিল বলিয়া

(१)...परिप्लुत...। (२)...पयःपूरपाण्डुरेव। (३) क्वचित् सर्वत इति नास्ति।
(४) इन्दुमयमिव। (५) लोचनपथं प्रविश्य,...प्रविष्टेन। (६)...चीनांशुकान्तरितामिव।

संक्रान्तामिव शरदभ्रपटलतिरस्कृतामिव अपरिस्फुट-(१) विभाव्यमानावयवाम्, (र) पञ्चमहाभूतमयमपहाय द्रव्यात्मकमङ्ग-(२) निष्पादनोपकरणकलापं धवलगुणेनैव केवलेनोत्पादिताम्, (ल) दक्षाध्वर-(३) क्रियामिवोद्धत-(४) गण-कच-ग्रह-भयोपसेवित-त्र्यम्बकाम्, (व) निरन्तरभस्मोद्धूलनसिताङ्गीं (५) रतिमिव मदनदेहनिमित्तं हरप्रसादनार्थमागृहीतहराराधनाम्, (श) क्षीरो-

विमलेन चांशुकेन अन्तरितामावृतामिव। आदर्शतले दर्पणे संक्रान्तां प्रतिबिम्बितामिव। तथा शरदः कालस्य अभ्रपटलेन मेघावलेन मेघसमूहेन तिरस्कृतामावृतामिव अतएव प्रभावरणादपरिस्फुटम् अस्पष्टं यथा स्यात्तथा विभाव्यमाना लक्ष्यमाणा अवयवा अङ्गप्रत्यङ्गानि यस्यास्ताम्। अत्र पञ्चानां क्रियोत्प्रेक्षाणां परस्परनिरपेक्षतया संसृष्टिः।

(ल) पञ्चेति। पञ्चमहाभूतमयं क्षित्यप्तेजोमरुद्व्योमस्वरूपं द्रव्यात्मकम् अङ्गनिष्पादनोपकरणकलापं शरीरनिर्म्माणसामग्रीसमूहम् अपहाय विधात्रा केवलेन एकेन धवलगुणेन उत्पादितां सृष्टामिव क्षित्यादिसामग्रीजन्यत्वे तु तद्गुणानां कृष्णपीतादीनामप्यत्र सम्मिश्रणेन ईदृशकेवलधावल्यासम्भवादिति भावः। अत्र क्रियोत्प्रेक्षालङ्कारः। द्रव्याणां नवविधत्वात् पञ्चमहाभूतमयमिति, भूतशब्दस्य च सत्याद्यर्थस्यापि वाचकत्वात् द्रव्यात्मकमिति नापुष्टार्थत्वदोष इति संक्षेपः।

(व) दक्षेति। उद्धतैः बलदृप्तैः गणैः प्रमथगणैः यः कचग्रहः केशाकर्षणं तस्माद्भयेन उपसेवितः परित्राणार्थमाश्रितस्त्र्यम्बकः शिवो यया ताम्, दक्षस्य प्रजापतेरध्वरक्रिया यज्ञकार्य्यमिव स्थिताम्, तस्या अपि महापुण्यरूपत्वेन श्वेतत्वादिति भावः। अत्रापि क्रियोत्प्रेक्षालङ्कारः। पुरा किल दक्षप्रजापतिना शिवापमानार्थं शिवानुष्ठीयमाने यज्ञे स भगवान् हृत इति तत्प्रमथाः समागत्य तं यज्ञं विध्वंसयामासुरिति भागवतादिवार्त्ता।

(श) निरन्तरेति। मदनदेहनिमित्तं पुनरपि पत्युः कन्दर्पस्य देहलाभार्थं यत् हरस्य प्रसादनं तदर्थम् आगृहीतहराराधनाम् आरब्धशिवोपासनाम् अतएव निरन्तरभस्मोद्धूलनेन सिताङ्गीं रतिमिव स्थिताम्। अत्र द्रव्योत्प्रेक्षालङ्कारः। तथा हरपदस्य द्विरुपादानात् पुनरुक्ततादोषः, स च आगृहीतमदाराधनामिति पाठेन समाधेयः।

অঙ্গ-প্রত্যঙ্গগুলি স্পষ্টভাবে দেখা যাইতেছিল না; সুতরাং সে, যেন স্ফটিকময় গৃহের ভিতরে ছিল, দুগ্ধমিশ্রিত জলে নিমগ্ন ছিল, নির্ম্মল চীনদেশীয় বস্ত্রদ্বারা আবৃত ছিল, দর্পণের ভিতরে প্রতিবিম্বিত হইয়াছিল এবং শরৎকালীয় মেঘসমূহে আচ্ছাদিত ছিল বলিয়া প্রতীতি হইতেছিল, (ল) বিধাতা, পঞ্চমহাভূতস্বরূপ দ্রব্যাত্মক শরীরনির্ম্মাণোপযোগী সামগ্রীসমূহ পরিত্যাগ করিয়া কেবল ধবলগুণদ্বারাই যেন তাহাকে নির্ম্মাণ করিয়াছিলেন; (ব) উদ্ধতস্বভাব প্রমথগণকর্তৃক কেশাকর্ষণের ভয়ে দক্ষের যজ্ঞক্রিয়া যেন আত্মরক্ষার নিমিত্ত আসিয়া শিবের আশ্রয় লইয়াছিল; (শ) পুনর্ব্বার কামদেবের দেহলাভের নিমিত্ত শিবকে প্রসন্ন করিবার

(१) परिस्फुट···। (२)···मङ्ग···। (३) अध्वर···। (४) उद्धत···। (५) क्वचिदयं पाठो नास्ति।

दधि-(१) देवतामिव सहवास-परिचित-हर-चन्द्रलेखोत्कण्ठाकृष्टाम्, (२) (स) इन्दुमूर्त्तिमिव स्वर्भानु-भय-कृत-त्रिनयन-शरण-गमनाम्, (३) (ह) ऐरावत-देहच्छविमिव गजाजिनावगुण्ठनोत्कण्ठित-शितिकण्ठ-चिन्तितोपनताम्, (क्ष) पशुपति-दक्षिण-मुख-हास-च्छविमिव बहिरागत्य (४) कृतावस्थानाम्, (क) शरीरिणीमिव रुद्राङ्गोद्धूलनभूतिम् (५) आविर्भूताम्, (ख) ज्योत्स्नामिव हरकण्ठा-

---

(ष) क्षीरोदेति। सहवासेन एकक्षीरोदसागरे मथनात् पूर्वमवस्थानेन परिचिता या हरस्य ललाटस्था चन्द्रलेखा तस्या उत्कण्ठया आकृष्टां क्षीरोदस्य अधिदेवताम् अधिष्ठात्रीं देवीमिव, निरतिशय शुभ्रक्षीरोदाधिष्ठातृत्वात्तस्य अपि निरतिशयशुभ्रत्वसम्भवादिति भावः। अत्रापि द्रव्योत्प्रेक्षालङ्कारः।

(स) इन्दिति। स्वर्भानो राहोर्भयेन कृतं त्रिनयनस्य शिवस्य शरणगमनं यया ताम् इन्दोश्चन्द्रस्य मूर्त्तिमिव। द्रव्योत्प्रेक्षा।

(ह) ऐरेति। गजाजिनस्य हस्तिचर्म्मणः अवगुण्ठने परिधाने उत्कण्ठितो गजाजिनप्रियत्वादुत्सुको यः शितिकण्ठः शिवस्तेन चिन्तिता अनन्तरमेव उपनता उपस्थिता ताम्, ऐरावतस्य देवराजगजस्य देहच्छविं शरीरकान्तिमिव स्थिताम्। अत्र गुणोत्प्रेक्षालङ्कारः।

(क्ष) पश्विति। बहिरागत्य कृतावस्थानाम्, पशुपतेः शिवस्य दक्षिणमुखे तत्रत्यशिवस्य चतुर्मुखत्वा-द्दक्षिणदिग्वर्त्तिवदने यो हासो हास्यं तस्य छविं कान्तिमिव। अत्रापि गुणोत्प्रेक्षालङ्कारः।

(क) शरीति। शरीरिणीं स्त्रीमूर्त्तिधारिणीं सतीमाविर्भूतां रुद्रस्य शम्भोः उद्धूलनभूतिमिव अङ्गमर्द्दन-वेलायां धूलीभूय प्रसृतदेहभस्मेव। अत्र जात्युत्प्रेक्षालङ्कारः।

(ख) ज्योत्स्नामिति। हरस्य नीलकण्ठस्य शिवस्य कण्ठे योऽन्धकारः अन्धकारतुल्यनीलवर्णस्तस्य

---

জন্য রতিদেবী যেন তাঁহার আরাধনায় প্রবৃত্ত হইয়া সর্ব্বদা ভস্মে লুণ্ঠন করায় শ্বেতাঙ্গী হইয়া সেখানে রহিয়াছিলেন; (ষ) পূর্ব্বে একত্র বাস করায় পরিচিত শিবের ললাটস্থ চন্দ্রকলার সহিত সাক্ষাৎ করিবার নিমিত্ত উৎকণ্ঠাতে আকৃষ্ট হইয়াই যেন ক্ষীরোদসাগরের অধিষ্ঠাত্রী দেবী আসিয়া বসিয়াছিলেন; (স) রাহুর ভয়ে মহাদেবের শরণাপন্ন চন্দ্রমূর্ত্তির ন্যায় তাঁহাকে দেখা যাইতেছিল; (হ) হস্তীর চর্ম্ম পরিধান করিবার নিমিত্ত উৎকণ্ঠিত হইয়া মহাদেব চিন্তা করিলে আপনিই উপস্থিত ঐরাবতহস্তীর দেহপ্রভার ন্যায় সে বিরাজ করিতেছিল; (ক্ষ) মহাদেবের হাস্যের শোভা যেন বাহিরে আসিয়া অবস্থান করিতেছিল; (ক) অঙ্গ-মর্দ্দন করিবার সময়ে শিবের অঙ্গের ভস্মরেণুগুলি যেন স্ত্রীমূর্ত্তি ধারণ করিয়া আবির্ভূত হইয়াছিল; (খ) মহাদেবের কণ্ঠদেশের নীলবর্ণ দূর করিবার চেষ্টা করার জন্য তাঁহারই কণ্ঠের

---

(१) क्षीरोदधिः…। (२)…लेखोत्कण्ठाम्।

(३)…शरणागमनाम्। (४) बहिर्निर्गत्य, स्वयं निर्गत्य। (५)…विभूतिम्।

অকারবিবর্হণীয়মপাসাম্, (খ) গৌরীমনঃশুদ্ধিমিব (১) কৃতদেহপরিগ্রহাম্, (গ) কার্ত্তিকেয়-কৌমারব্রতক্রিয়ামিব মূর্ত্তিমতীম্, (ঘ) গিরীশ (২) বৃষভ-দেহ-দ্যুতিমিব পৃথগবস্থিতাম্, (ঙ) আয়তন-তরু-কুসুম-সমৃদ্ধিমিব শঙ্করাভ্যর্চ্চনায় স্বয়মুদ্যতাম্, (চ) পিতামহতপঃসিদ্ধিমিব মহীতলমবতীর্ণাম্, (ছ) আদিযুগ-প্রজাপতিকীর্ত্তিমিব সপ্তলোকভ্রমণখেদবিশ্রান্তাম্, (জ) ত্রয়ীমিব কলিযুগ-ধ্বস্ত-ধর্ম্ম-শোক-গৃহীত-বনবাসাম্, (ঝ) আগামিকৃত-যুগ-বীজকলামিব প্রমদা-

বর্হণীয়মিন স্বয়মপহারকারণেন প্রাপ্তা ততঃকৃষ্ণত এব উপস্থিতাং জ্যোৎস্নাং কান্তামিব। অত্র গুণোৎপ্রেক্ষা-লঙ্কারঃ।

[গ] গৌরীতি। কৃতদেহপরিগ্রহাং গৌর্য্যাঃ সতীশিরোমণিভূতায়াঃ পার্ব্বত্যাঃ মনসঃ শুদ্ধিং পবিত্রতামিব। অত্রাপি গুণোৎপ্রেক্ষালঙ্কারঃ।

(ঘ) কার্ত্তীতি। মূর্ত্তিমতীং কার্ত্তিকেয়স্য কৌমারব্রতক্রিয়াং ব্রহ্মচর্য্যনিয়মানুষ্ঠানমিব। অত্র ক্রিয়োৎপ্রেক্ষালঙ্কারঃ। পাপস্য মলিনতয়া বর্ণনীয়ত্বাত্তদ্বিপরীতস্য পুণ্যস্য তু শুভ্রতয়ৈব বর্ণনীয়ত্বাদিয়মুক্তিরিতি বোধ্যম। এবমন্যত্রাপি।

(ঙ) গিরীশেতি। পৃথগবস্থিতাং গিরীশবৃষভস্য শিববৃষভস্য দেহদ্যুতিমিব। গুণোৎপ্রেক্ষা।

(চ) আয়তনেতি। শঙ্করস্য অভ্যর্চ্চনায় স্বয়মুদ্যতাম্ আত্মনৈবোদ্যুক্তাম্, আয়তনস্য তস্যৈব সিদ্ধায়ত-নস্য তরুকুসুমানাং সমৃদ্ধিং রাশিমিব। অত্র জাত্যুৎপ্রেক্ষালঙ্কারঃ।

(ছ) পিতেতি। মহীতলমবতীর্ণাং পিতামহস্য ব্রহ্মণস্তপঃসিদ্ধিমিব। গুণোৎপ্রেক্ষা।

(জ) আদীতি। সপ্তসু লোকেষু ভূরাদিষু ভ্রমণেন পর্য্যটনেন যঃ খেদঃ পরিশ্রমস্তেন বিশ্রান্তাং তত্র কৃত-বিশ্রামাম্, আদিযুগে সত্যযুগে প্রজাপতের্ব্রহ্মণো যা কীর্ত্তিঃ সৃষ্টিদর্শনা তামিব। গুণোৎপ্রেক্ষা।

(ঝ) ত্রয়ীমিতি। কলিযুগেন ধ্বস্তো বিনষ্টো যো ধর্ম্মস্তস্য শোকেন গৃহীতবনবাসাং ত্রয়ীম্ ঋগ্‌যজুঃসামা-ত্মকং বেদত্রয়মিব। গুণোৎপ্রেক্ষা।

প্রভা যেন বাহির হইয়া রহিয়াছিল; (গ) পার্ব্বতীর মনের পবিত্রতা যেন শরীর ধারণ করিয়া অবস্থান করিতেছিল; (ঘ) কার্ত্তিকের ব্রহ্মচর্য্যানুষ্ঠান যেন মূর্ত্তিমান্ হইয়া বিরাজ করিতে-ছিল; (ঙ) শিবের বৃষটার দেহের প্রভা যেন পৃথক্ হইয়া অবস্থান করিতেছিল; (চ) সেই সিদ্ধায়তনস্থ বৃক্ষসমূহের পুষ্পগুলি যেন শিবের পূজা করিবার নিমিত্ত আপনা আপনিই উদ্যত হইয়াছিল, (ছ) ব্রহ্মার তপস্যাসিদ্ধি যেন ভূতলে অবতীর্ণ হইয়া সেই স্থানে অবস্থান করিতে-ছিল; (জ) সত্যযুগে ব্রহ্মার যে কীর্ত্তি জন্মিয়াছিল, সে, যেন সপ্তলোক পরিভ্রমণ করিয়া পরি-শ্রমবশতঃ সেই স্থানে আসিয়া বিশ্রাম করিতেছিল; (ঝ) কলিযুগের প্রভাবে ধর্ম্ম বিনষ্ট হও-

(১) গৌরীতপঃসিদ্ধিমিব। (২) গিরীশ…।

রূপেণাবস্থিতাম্, (ঞ) দেহবতীমিব মুনিজন-ধ্যানসম্পদম্, (ট) অমর-গজ-বীথিমিবাভ্রগঙ্গাভ্যাগম-বেগপতিতাম্, (ঠ) কৈলাসশ্রিয়মিব দশ-মুখোন্মূলন-ক্ষোভ-নিপতিতাম্, (ড) শ্বেতদ্বীপ-লক্ষ্মীমিবান্যদ্বীপাবলোকন-(১) কুতূহলাগতাম্, (ঢ) কাশকুসুমবিকাশকান্তিমিব শরৎসময়মুদীক্ষমাণাম্, (ণ) শেষশরীরচ্ছায়ামিব রসাতলমপহায় নির্গতাম্, (ত) মুষলায়ুধদেহপ্রভামিব মধুমদবিঘূর্ণনায়াসবিগলিতাম্, (থ) শুক্লপক্ষপরম্পরামিব পুঞ্জীকৃতাম্,

(ঞ) আগামীতি। প্রমদারূপেণ স্ত্রীভাবেনাবস্থিতাম্, আগামিনো ভবিষ্যতঃ কৃতযুগস্য সত্যযুগস্য বীজকলামিব উপাদানমাত্রামিব, সত্যযুগস্য ধর্ম্মময়ত্বেন শুভ্রত্বাত্তদুপাদানকারণস্যাপি শুভ্রত্বমিতি ভাবঃ। অত্র জাত্যুৎপ্রেক্ষালঙ্কারঃ।

(ট) দেহেতি। দেহবতীং মুনিজনানাং ধ্যানসম্পদমিব। অত্র গুণোৎপ্রেক্ষালঙ্কারঃ।

(ঠ) অমরেতি। অভ্রগঙ্গায়া মন্দাকিন্যাঃ অভ্যাগমস্য তত্রোপস্থিতের্বেগেন পতিতাং স্বর্গাচ্চ্যুতাম্ অমরগজানাম্ ঐরাবতাদীনাং বীথিং শ্রেণিমিব, তস্যা অতিশুভ্রত্বাদিতি ভাবঃ। বস্তুতঃ সমূহসমূহিনোরভেদেঽপি স্ত্রীত্ব-ভেদমভিপ্রেত্যেদমভিহিতমিতি বোধ্যম্। অত্র জাত্যুৎপ্রেক্ষালঙ্কারঃ।

(ড) কৈলাসেতি। দশমুখস্য রাবণস্য উন্মূলনেন উৎপাটনেন যঃ ক্ষোভঃ সঞ্চলনং তেন নিপতিতাম্, কৈলাসস্য শ্রিয়ং শোভামিব। অত্র গুণোৎপ্রেক্ষালঙ্কারঃ।

(ঢ) শ্বেতেতি। অন্যেষাং দ্বীপানামবলোকনকুতূহলেনাগতাং শ্বেতদ্বীপস্য লক্ষ্মীং কান্তিমিব। গুণোৎপ্রেক্ষা।

(ণ) কাশেতি। শরৎসময়মুদীক্ষমাণাং প্রতীক্ষমাণাং কাশকুসুমানাং বিকাশকান্তিমিব। গুণোৎপ্রেক্ষা।

(ত) শেষেতি। রসাতলমপহায় নির্গতাম্, শেষস্য অনন্তনাগস্য শরীরচ্ছায়াং দেহকান্তিমিব, অনন্তনাগস্যাপি শুভ্রত্বাদিতি ভাবঃ। গুণোৎপ্রেক্ষা। "ছায়া সূর্য্যপ্রিয়া কান্তিঃ প্রতিবিম্বমনাতপঃ।" ইত্যমরঃ।

(থ) মুষলেতি। মধুমদেন মদ্যপানজনিতমত্ততয়া যদ্বিঘূর্ণনং তদায়াসেন বিগলিতাং দেহাচ্চ্যুতাং মুষলায়ুধস্য বলরামস্য দেহপ্রভামিব, তস্যা অপি শুভ্রত্বাৎ। গুণোৎপ্রেক্ষা।

যায় সেই শোকে বেদ যেন বন-বাস অবলম্বন করিয়া সেই স্থানে অবস্থান করিতেছিল; (ঞ) আগামী সত্যযুগের বীজের অংশ যেন স্ত্রীরূপে অবস্থান করিতেছিল; (ট) মুনিগণের ধ্যান-সম্পত্তি যেন মূর্ত্তিমতী হইয়া রহিয়াছিল; (ঠ) দেবহস্তীর শ্রেণী যেন আকাশগঙ্গার আগমনের বেগে পড়িয়া গিয়াছিল; (ড) কৈলাসপর্ব্বতের শোভা যেন রাবণকর্ত্তৃক উন্মূলনের বেগে নিপতিত হইয়াছিল; (ঢ) শ্বেতদ্বীপের কান্তি যেন অন্যান্য দ্বীপ দর্শন করিবার কৌতুকে আসিয়াছিল; (ণ) কাশ-(কেশে) পুষ্পের বিকাশশোভা যেন শরৎকালের প্রতীক্ষা করিতেছিল (ত) অনন্তনাগের দেহের শোভা যেন পাতাল ত্যাগ করিয়া নির্গত হইয়াছিল; (থ) বলরামের শরীরের কান্তি যেন মদ্যপানের মত্ততাবশতঃ তাঁহার ঘূর্ণন করার পরিশ্রমে পড়িয়া গিয়াছিল;

(১) অন্যদ্বীপান্তরাবলোকন…।

(द) सर्वहंसैरिव धवलतया कृतसंविभागाम्, (ध) धर्म्महृदयादिव विनिर्गताम्, (१)शङ्खादिवोत्कीर्णाम्, मुक्ताफलादिवाकृष्टाम्, मृणालैरिव विरचितावयवाम्, दन्तदलैरिव घटिताम्, इन्दुकरकूर्च्चकैरिव प्रक्षालिताम्, (२) वर्णसुधाच्छटाभिरिव च्छुरिताम्, (३) अमृतफेनपिण्डैरिव पाण्डुरीकृताम्, पारदरसधाराभिरिव धौतम्, रजतद्रवेणेव निर्मृष्टाम्, चन्द्रमण्डलादिवोत्कीर्णाम्,कुटज-कुन्द-सिन्धुवार-(४) कुसुम-च्छविभिरिवोल्लासिताम्, (न) इयत्तामिव धवलिम्नः, (प) स्कन्धावलम्बिनीभिरुदयतटगतादर्क-(५) बिम्बादुद्गत्य बालरश्मिप्रभाभिरिव निर्म्मिता-

(द) सर्वेति। पुञ्जीकृता विधात्रा सम्पीकृता शुक्लपक्षाणां परम्परा राजिमिव। पक्षाणां कालत्वेन दृष्टत्वादत्र जात्युत्प्रेक्षालङ्कारः।

(ध) सर्वेति। सर्वहंसैः धवलतया स्वस्वशुभ्रत गुणेन करणेन कृतः संविभागः विभज्य प्रतिपादनं यस्यै तां समर्पितस्वस्वशुभ्रतामित्यर्थः। अत्र विभागकरणोत्प्रेक्षणात् क्रियोत्प्रेक्षालङ्कारः।

(न) धर्म्मेति। धर्म्मस्य हृदयाद्विनिर्गतामिव शङ्खादुत्कीर्णामिव। शङ्खं निखन्य बहिष्कृतामिव। मुक्ताफलान्मौक्तिकात् आकृष्टामाविर्भावितामिव। मृणालैर्विरचितावयवां निर्म्मिताङ्गीमिव। दन्तदलैर्हस्तिदन्तखण्डैः घटितां निर्म्मितमिव। इन्दुकराश्चन्द्ररश्मय एव कूर्च्चकास्तूलिकास्तैः प्रक्षालितां परिष्कृत्य धौतामिव। अत्र निरङ्गकेवलरूपकक्रियोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः। वर्णसुधानां शुक्लताविधायकसुधाख्यलेपनद्रव्याणां छटाभिः समूहैः छुरितां लिप्तामिव। पारदरसस्य पारदद्रव्यस्य धाराभिर्धौतामिव। अत्र पारदरसशब्दयोः पर्य्यायतया आपाततः पुनरुक्ततापतीतिः परन्तु रसशब्दस्य द्रवार्थे पर्य्यवसानात् पुनरुक्तवदाभासः क्रियोत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः। रजतद्रवेण रौप्यरसेन निर्मृष्टां परिमृष्टामिव। उल्लासितां पारशोभिताम। एषामुक्तानां प्रत्येकविशेषणे क्रियोत्प्रेक्षालङ्कारः।

(प) इयत्तामिति। धवलिम्नः शुभ्रतायाः इयत्तां चरमसीमामिव। गुणोत्प्रेक्षा।

(म) বিধাতা শুক্লপক্ষশ্রেণীকে যেন পুঞ্জীভূত করিয়া রাখিয়াছিলেন ; (ধ) সকল হংসগণ যেন স্ব স্ব ধবলগুণ তাহাকে বিভক্ত করিয়া দিয়াছিল ; (ন) সে যেন ধর্ম্মের হৃদয় হইতে নির্গত হইয়াছিল ; বিধাতা যেন তাহাকে শঙ্খ খোদিত করিয়া বাহির করিয়াছিলেন, মুক্তা হইতেই যেন নিষ্কাশিত করিয়াছিলেন, মৃণালদ্বারাই যেন তাহার অঙ্গগুলি নির্ম্মাণ করিয়াছিলেন, গজদন্ত খণ্ডদ্বারাই যেন গড়াইয়াছিলেন, চন্দ্রকিরণরূপ কুঁচীদ্বারাই যেন প্রক্ষালন করিয়া পরিষ্কার করিয়া দিয়াছিলেন, চূর্ণলেপদ্বারাই যেন লেপিয়া দিয়াছিলেন, অমৃতের ফেনপুঞ্জদ্বারাই যেন শুভ্রবর্ণ করিয়াছিলেন, পারার রসের ধারাতেই যেন ধুইয়া দিয়াছিলেন, রূপার রসেই যেন মার্জ্জিত করিয়াছিলেন, চন্দ্রমণ্ডল হইতেই যেন খোদিত করিয়া বাহির করিয়াছিলেন এবং কুটজ, কুন্দ ও নিসিন্দা ফুলের প্রভাদ্বারাই যেন শোভিত করিয়া দিয়াছিলেন ; (প) আর

(१) निर्गताम्. उद्धृताम्। (२) आचाञ्चिताम्। (३, अ.च्छुरिताम्। (४)…सिन्दुवार। (५) मण्डलं…

ভির্দ্দীপ্যমানতড়িৎপ্রভেব-(১) তেজস্তাম্রাভিরচিরস্নানাবস্থিত-বিরল-বারি-কণতয়া প্রণাম-লগ্ন-পশুপতি-চরণ-ভস্ম-চূর্ণাভিরিব জটাভিরুদ্ভাসিতশিরোভাগাম্, (ফ) জটাপাশ-গ্রথিতেনোত্তমাঙ্গেন মণিময়ং নামাঙ্কমীশ্বর-চরণদ্বয়মুদ্বহন্তীম্, (ব) রবি-রথ-তুরগ-খুর-মুখ-ক্ষুণ্ণ (২) নক্ষত্র-ক্ষোদ-বিশদেন ভস্মনালঙ্কৃত-(৩) ললাট-পট্টিকাম্, শিখর-শিলাশ্লিষ্ট-শশাঙ্ককলামিব শৈলরাজমেখলাম্, (ভ) অতুল-

(ফ) জ্বলেতি। উদয়তটগতাদুদয়াচলপ্রদেশস্থিতাৎ অর্কবিম্বাৎ সূর্য্যমণ্ডলাৎ উদ্ধৃত্য বালরশ্মিপ্রভা ইব উদ্ধৃত্য তাভির্বালরশ্মিপ্রভাভির্নূতনকিরণদীপ্তিভিঃ করণৈঃ বিধাত্রা নির্ম্মিতাভিরিব স্থিতাভিঃ, জ্বলিতবতী প্রকাশমানা যা তড়িৎ বিদ্যুৎ তস্যা যত্তরলং তেজস্তদ্বত্তাম্রাভিস্তাম্রবর্ণাভিঃ, তথা অচিরস্নানেন অবস্থিতাঃ বিরলা অল্পাল্পা বারিকণা যাসু তাসাং ভাবস্তয়া হেতুনা প্রণামে নমস্কারসময়ে লগ্নানি পশুপতেঃ শিবস্য চরণ-ভস্মচূর্ণানি যাসু তাভিরিব স্থিতাভির্জটাভিঃ উদ্ভাসিতঃ শোভিতঃ শিরোভাগো যস্যাস্তাম্। অত্র উদয়েত্যাদৌ ক্রিয়োৎপ্রেক্ষা, জ্বলিতবদিত্যাদৌ লুপ্তোপমা, প্রণামেত্যাদৌ চ ক্রিয়োৎপ্রেক্ষা, ইত্যাসামঙ্গাঙ্গিভাবেন সঙ্করঃ।

(ব) জটেতি। উত্তমাঙ্গেন মস্তকেন, জটাপাশগ্রথিতং মণিময়ং মণিনির্ম্মিতং নাম্নঃ শিবনাম্নঃ অঙ্কশ্চিহ্নং যত্র তাদৃশম্, ঈশ্বরস্য শিবস্য চরণদ্বয়ং পদদ্বয়প্রতিমাম্ উদ্বহন্তীং ভক্তিভরেণ ধারয়ন্তীম্।

(ভ) রবীতি। রবিরথস্য তুরগাণামশ্বানাং খুরমুখৈঃ খুরাগ্রভাগৈঃ ক্ষুণ্ণানাং বিদারিতানাং নক্ষত্রাণাং ক্ষোদশ্চূর্ণং তদ্বৎ বিশদেন শুভ্রেণ চ ভস্মনা ভস্মকৃততিলকেন অলঙ্কৃতঃ ললাটপট্টো ভালফলকং যস্যাস্তাম্ অতএব শিখরশিলয়া মধ্যভাগস্থপ্রস্তরেণ আশ্লিষ্টা যুতা শশাঙ্ককলা চন্দ্ররেখা যস্যাস্তাং শৈলরাজস্য হিমালয়স্য মেখলাং নিতম্বং মধ্যভাগমিব স্থিতাম্। অত্র পদার্থহেতুকং কাব্যলিঙ্গং তথা চন্দ্রকলয়া সহ ভস্মতিলকস্য, শিখরশিলয়া সহ ললাটপট্টস্য, মেখলয়া চ সহ কন্যায়াঃ সাম্যমিতি দ্রব্যোৎপ্রেক্ষা চানয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ।

তাহাকে যেন শুভ্রবর্ণের চরম সীমা বলিয়া বোধ হইতেছিল ; (ফ) দেদীপ্যমান বিদ্যুতের তরল তেজের ন্যায় তাম্রবর্ণ এবং স্কন্ধপর্য্যন্ত পতিত কতকগুলি জটাদ্বারা তাহার মস্তক পরিশোভিত ছিল ; বিধাতা, উদয়াচলগত সূর্য্যমণ্ডল হইতে নূতন কিরণ বাহির করিয়া তাহার দীপ্তিদ্বারাই যেন সেই জটাগুলিকে নির্ম্মাণ করিয়াছিলেন, এবং অনতিপূর্ব্বে স্নান করায় তখনও জটাগুলির উপরে অল্প অল্প জলবিন্দু ছিল, সুতরাং প্রতীতি হইতেছিল যেন, সে প্রণাম করিবার সময়ে শিবের চরণের ভস্ম-রেণুগুলি জটার উপরে লাগিয়া রহিয়াছে, (ব) এবং সে মস্তকে শিব-নামাঙ্কিত মণিময় দুখানি শিবের চরণ, জটাতে বন্ধন করিয়া ধারণ করিতেছিল ; (ভ) সূর্য্যের রথে নিযুক্ত ঘোটকগণের খুরাগ্রের আঘাতে চূর্ণীকৃত-নক্ষত্রচূর্ণের ন্যায় শুভ্রবর্ণ ভস্মের তিলকে তাহার ললাটদেশ অলঙ্কৃত ছিল ; সুতরাং শৃঙ্গের প্রস্তরের উপরে চন্দ্রকলা সংলগ্ন হইলে হিমালয়ের মেখলার ন্যায় তাহাকে দেখা

(১)···তড়িল্লতানুসরণ···। (২)···ক্ষুরক্ষুণ্ণ,ক্ষুণ্ণ···। (৩) ক্লৃপ্ত···।

भक्तिप्रसाधितया लक्ष्यीकृतलिङ्गया द्वितीययेव (१) पुण्डरीकमालया दृष्ट्या सम्भावयन्तीं भूतनाथम्, (म) अनवरत-गीत-परिस्फुरिताधरपुटवशात् (२) अतिशुचिभिः शुद्धहृदयमयूखैरिव गीतगुणैरिव स्वरैरिव स्तुतिवर्णैरिव मूर्त्तिमद्भिर्मुखान्निष्पतद्भिर्दशनांशुभिः पुनरिव स्नपयन्तीं गौरीपतिम्, (३) (य) अतिविमलस्य वेदार्थैरिव साक्षात् पितामह-मुखादाकृष्टैः, गायत्रीवर्णैरिव ग्रथितताम्-(४) उपगतैः, नारायणनाभिपुण्डरीक-बीजैरिवोद्धृतैः, सप्तर्षिभिरिव कर-(५) स्पर्शपूतमात्मानमिच्छद्भि-

(म) अतुलेति । अतुलया निरुपमया भक्त्या प्रसाधिता प्रसन्नताजननेनालङ्कृता तया, लक्ष्यीकृतं विषयीकृतं लिङ्गं शिवमूर्त्तिर्यया तया, द्वितीयया पुण्डरीकमालयेव श्वेतपद्मश्रेण्येव स्थितया, दृष्टेरपि श्वेतत्वादिति भावः, दृष्ट्या भूतनाथं शिवं सम्भावयन्तीं सादरमवलोकयन्तीम् । अत्र जात्युत्प्रेक्षालङ्कारः ।

(य) अनेति । अनवरतं गीतेन परिस्फुरितं परिस्पन्दितं यदधरपुटमोष्ठयुगलं तद्वशात्, मुखान्निष्पतद्भिर्निर्गच्छद्भिः, अतिशुचिभिरत्यन्तशुभ्रैः, शुद्धहृदयस्य पवित्रचित्तस्य मयूखैः किरणैरिव, मूर्त्तिमद्भिः गीतगुणैर्गानमाधुर्य्यैरिव, स्वरैर्निषादादिध्वनिभिरिव, स्तुतिवर्णैः शिवस्तवाक्षरैरिव स्थितैः, दशनांशुभिर्दन्तरश्मिभिः, गौरीपतिं शिवं पुनः स्नपयन्तीमिव स्थिताम् । मूर्त्तिमद्भिरिति गीतगुणैरित्यादीनां त्रयाणामेव विशेषणम्, पूर्व्वं सकृत् स्नपनात् पुनः पदमिति बोध्यम् । अत्र प्रथमास्तिस्रो गुणोत्प्रेक्षाः शेषा च क्रियोत्प्रेक्षा इत्येतासामङ्गाङ्गिभावेन सङ्करः ।

(र) अतीति । किञ्च । अतिविमलैरिति मुक्ताफलैरिति वक्ष्यमाणस्य विशेषणम् । पितामहस्य ब्रह्मणो मुखादाकृष्टैराकृष्यानीतैः साक्षाद्वेदार्थैरिव, निरतिशयसत्यतया तेषामप्यतिविमलत्वादिति भावः । ग्रथिततां संयोजनमुपगतैः गायत्र्याः स्वनामख्यातस्य वैदिकमन्त्रविशेषस्य वर्णैरक्षरैरिव, तेषामपि ब्रह्मरूपतया निर्म्मलत्वादिति भावः । उद्धृतैरुत्तोलितैः नारायणस्य नाभिपुण्डरीकबीजैरिव । तथा आत्मानं स्वस्वदेहं करस्पर्शेन जपकाले तस्याः कन्यकायाः पाणिस्पर्शेन पूतं पवित्रं कर्त्तुमिच्छद्भिः तारकारूपेण नक्षत्रभावेनागतैः, मुक्तानां नक्षत्रवदुज्ज्वलत्वादिति भावः, सप्तर्षिभिर्मरीच्यादिभिरिव स্থितैः, तथा आमलकीफलवत् स्थूलैः, मुक्ताफलै-

যাইতেছিল ; (ম) অতুলনীয় ভক্তিতে পরিশোভিত ও দ্বিতীয় শ্বেতপদ্মমালার ন্যায় নির্ম্মল দৃষ্টিদ্বারা সে, শিবমূর্ত্তিকে লক্ষ্য করিয়া আদরের সহিত শিবকে দেখিতেছিল ; (য) অনবরত গান করায় কন্যাটির ওষ্ঠযুগল স্পন্দিত হইতেছিল ; সুতরাং মুখ হইতে নির্গত অত্যন্ত নির্ম্মল দন্ত-রশ্মিদ্বারা সে যেন পুনরায় শিবকে স্নান করাইতেছে বলিয়া বোধ হইতেছিল ; সেই দন্ত-রশ্মিগুলিকে, তাহার পবিত্র হৃদয়ের কিরণের ন্যায় এবং মূর্ত্তিমান্ গানের মাধুর্য্যের ন্যায়, মূর্ত্তিমান্ স্বরলহরীর ন্যায় ও মূর্ত্তিমান্ স্তবের অক্ষরের ন্যায় দেখা যাইতেছিল ; (র) আমলকীফলের ন্যায় বড় বড় ও অত্যন্ত নির্ম্মল মুক্তাদ্বারা গ্রথিত এক ছড়া জপের মালা তাহার কণ্ঠদেশে লম্বিত ছিল ; ব্রহ্মার মুখ হইতে আকর্ষণ করিয়া আনীত সাক্ষাৎ বেদার্থের ন্যায়,

(१) श्वेतयेव । (२)...गीतैरस्फुरित... । (३) पुनरपि...गौरीनाथम् । (४) ग्रथनताम्, ग्रथनम्, ग्रथनस्फीतताम् । (५) करतल... ।

ণেন জটোস্তরোপরচিতাম্, (শ) পশুপতেস্ত্রিলোচনসকাশাৎ প্রসাদলব্ধেন চূড়ামণি-চন্দ্র-ময়ূখ-জালেনেব মণ্ডলীকৃতেন ব্রহ্মসূত্রেণ পবিত্রীকৃতকায়াম্, (১) (ষ) আপ্রপদীনেন চ স্বভাবসিতেনাপি ব্রহ্মাসনবন্ধোত্তান-চরণতল-প্রভা-পরিষ্বঙ্গা-ল্লোহিতায়মানেন দুকূলপটেন প্রাবৃতনিতম্বাম্, (স) যৌবনেনাপি স্বকালোপ-সর্পিণা নির্বিকার-বিনীতেন (২) শিষ্যেণেবোপাস্যমানাম্, (হ) লাবণ্যেনাপি কৃতপুণ্যেব স্বচ্ছাত্মনা পরিগৃহীতাম্, (ক্ষ) রূপেণাপি রুচিরলোচনেন বিগত-

(শ) পশুপতেরিতি। পশুপতেস্ত্রিলোচনস্য শিবস্য সকাশাৎ প্রসাদলব্ধেন অনুগ্রহপ্রাপ্তেন, চূড়া-মণেঃ শিরোভূষণীভূতস্য চন্দ্রস্য ময়ূখজালেনেব কিরণকলাপেনেব স্থিতেন, শুভ্রত্বাদিতি ভাবঃ, মণ্ডলী-কৃতেন ব্রহ্মসূত্রেণ যজ্ঞোপবীতেন পবিত্রীকৃতঃ কায়ো দেহো যস্যাস্তাম্। অত্র উৎপ্রেক্ষালঙ্কারঃ। অস্যাস্তদা ব্রহ্মচারিণ্যা যজ্ঞোপবীতধারণং শাস্ত্রীয়মেব। তথা চ হারীতঃ—"দ্বিবিধাঃ স্ত্রিয়ো ব্রহ্মবাদিন্যঃ সদ্যো-বধ্বশ্চ। তত্র ব্রহ্মবাদিনীনামুপনয়নমগ্নীন্ধনং বেদাধ্যয়নং স্বগৃহে চ ভৈক্ষচর্য্যা।" তদেতৎ প্রপঞ্চিতমস্মাভিঃ উত্তররামচরিতটীকায়ামনুসন্ধেয়ম্।

(ষ) আপ্রেতি। কিঞ্চ। প্রপদং পাদাগ্রং মর্য্যাদাভূতমিত্যাপ্রপদং তৎ প্রাপ্নোতীত্যাপ্রপদীনঃ পাদতলপর্য্যন্ত-ব্যাপকঃ তেন, "আপ্রপদীনং তৎ প্রাপ্নোত্যাপ্রপদং হি যৎ" ইত্যমরঃ, স্বভাবেন সিতো ধবলস্তেনাপি সতা, ব্রহ্মাসনবন্ধেন পদ্মাসনকরণেন উত্তানে ঊর্দ্ধমুখে যে চরণতলে তয়োঃ প্রভায়া অর্দ্ধলোহিতায়াঃ পরিষ্বঙ্গাৎ সংসর্গাৎ লোহিতায়মানেন দুকূলপটেন সূক্ষ্মবসনেন প্রাবৃতাবাচ্ছাদিতৌ নিতম্বৌ যস্যাস্তাম্। অত্র শ্বেতদুকূলস্য লৌহিত্যগুণগ্রহণাত্তদ্গুণোঽলঙ্কারঃ।

(স) যৌবনেনেতি। অপিঃ সমুচ্চয়ে। স্বকালে উপযুক্তবয়সি স্বকীয়সেবাবসরে চ উপসর্পতি আগচ্ছতীতি তেন, তথা নির্বিকারং কামবিকাররহিতং ক্রোধাদিবিকাররহিতঞ্চ যথা স্যাত্তথা বিনীতেন শিক্ষিতেন যৌবনেন, শিষ্যেণেব উপাস্যমানাম্ আশ্রীয়মাণাং সেব্যমানাঞ্চ। অত্র পূর্ণোপমালঙ্কারঃ।

(হ) লাবণ্যেতি। কৃতপুণ্যেনেব সতা স্বচ্ছাত্মনা নির্মলেন কামমলহীনস্বরূপেণ চ লাবণ্যেন পরিগৃহী-তামাশ্রিতাম্। অত্র পুণ্যকরণোৎপ্রেক্ষণাৎ ক্রিয়োৎপ্রেক্ষালঙ্কারঃ।

দুর্গার সিংহের জটাদ্বারা নির্ম্মিত বলিয়া বোধ হইতেছিল। (শ) কণ্ঠদেশে মণ্ডলীকৃত একটি যজ্ঞসূত্রে তাহার দেহ পবিত্র করিয়াছিল; মহাদেবের নিকট হইতে অনুগ্রহে লব্ধ, তাঁহারই চূড়ামণিরূপ চন্দ্রের কিরণসমূহের ন্যায় সেই যজ্ঞসূত্রটি বিরাজ করিতেছিল। (ষ) এবং চরণের অগ্রপর্য্যন্তব্যাপী সূক্ষ্মবস্ত্রে তাহার নিতম্বদেশ আবৃত ছিল; সেই বস্ত্রখানা স্বভাবতই শুক্লবর্ণ হইলেও, সে পদ্মাসন করিয়া বসিয়া থাকায়, উত্তানীকৃত (চিৎ করা) চরণতলের প্রভা তাহাতে পতিত হওয়ায় বস্ত্রখানার সেই অংশটা রক্তবর্ণ হইয়াছিল। (স) অবসরক্রমে উপস্থিত ও ক্রোধাদি-বিকার-বিহীন শিক্ষিত শিষ্যের ন্যায়, উপযুক্ত বয়সে উপস্থিত ও কাম-

(১) পবিত্রীকৃতকায়াম্। (২) নির্বিকারেণ বিনীতেন।

चापलेन मायतनमृगीणेव निषेवितास्, (१) (छ) उत्सङ्गगताञ्च स्वसुतामिव सूक्ष्म-शङ्ख-खण्डिकाङ्गुरीयक-पूरिताङ्गुलिना (२) त्रिपुण्ड्रकावशिष्ट-भस्म-पाण्डुरेण (३) प्रकोष्ठ-बद्ध-शङ्ख-खण्डकेन नख-मयूख-दन्तुरतया गृहीतदन्तकोणेनेव दन्तमयीं दक्षिणकरेण वीणामास्फालयन्तीम्, प्रत्यक्षामिव गन्धर्वविद्याम्, (ज) मणिमण्डपिकास्तम्भ-लग्नाभिरात्मानुरूपाभिः सहचरीभिरिव सखीभिर्विलास-वतीभिः प्रतिमाभि (४)-रुपेताम्, (झ) स्नपनार्द्र-लिङ्ग-संक्रान्त-प्रतिबिम्बतया

(च) रुचिरेति। रुचिरे सुन्दरे लोचने यस्य यत्र च तेन, तथा विगतं चापलं स्वाभाविकचाञ्चल्य मदनोद्वेगश्च यस्य यत्र च तेन, आयतनमृगीणेव तत्सिद्धायतनहरिणेनेव रूपेण सौन्दर्येण च निषेवितामाश्रिताम्। अत्रापि पूर्णोपमालङ्कारः।

[छ] उत्सङ्गेति। सूक्ष्माणां शङ्खखण्डिकानां शङ्खखण्डानामङ्गुरीयकैः पूरिता अङ्गुलयो यस्य तेन, त्रिपुण्ड्रकाणां ललाटतिलककरणादवशिष्टेन भस्मना पाण्डुरेण शुभ्रेण, तथा प्रकोष्ठे मणिबन्धदेशे बद्धो धृतः शङ्खखण्डः शङ्खवलयं यस्य तेन, नखानां मयूखैर्दन्तुरतया तुङ्गतया दीर्घतया हेतुना, गृहीतो दन्तकोणो गजदन्तनिर्मितवीणावादनसाधनं येन तादृशेनेव प्रतीयमानेन दक्षिणकरेण, उत्सङ्गगतां क्रोडस्थिताम् दन्तमयीं गजदन्तभूषणप्रचुरां वीणां स्वसुतां निजकन्यामिव आस्फालयन्तीं वादयन्तीं सवात्सल्यसुतपृष्ठोत्पृष्ठलालयन्तीव, अतएव प्रत्यक्षां गन्धर्वविद्यां गानशास्त्रविद्यामिव विद्यमानम्। अत्र पूर्णोपमालङ्कारः, तथा दन्तकोणग्रहणोत्प्रेक्षणात् क्रियोत्प्रेक्षा, पदार्थहेतुकं काव्यलिङ्गम्, प्रत्यक्षां गन्धर्वविद्यामिवेति गुणोत्प्रेक्षा चेत्येतासामङ्गाङ्गिभावेन सङ्करः। शङ्खमयाङ्गुरीयकवलयाभ्यामाचारधर्म्यं व्यज्यत इति वस्तुना वस्तुध्वनिः। "कोणो वीणादिवादनम्" इत्यमरः।

[ज] सखीति। विलासवतीभिर्विभ्रमशोभाशालिनीभिः। सहचरीभिरिव स्थिताभिः प्रतिमाभिरात्मप्रतिबिम्बैरुपेताम्। अत्र श्रौतोपमालङ्कारः।

বিকার-বিহীন বক্ষ্য যৌবনকাল তাহাকে আশ্রয় করিয়াছিল। (ঙ) লাবণ্যও, যেন পুণ্যোপার্জ্জন করিয়াই নির্ম্মল হইয়া তাহাকে অবলম্বন করিয়াছিল। (চ) সেই সিদ্ধায়তনের হরিণের ন্যায় সুন্দর-নয়ন-সম্পন্ন ও চাঞ্চল্যবিহীন রূপও তাহাকে আশ্রয় করিয়াছিল। (ছ) আর সে, নিজ কন্যার ন্যায় হস্তি-দন্ত-ভূষিত একটি বীণা ক্রোড়ে স্থাপন করিয়া দক্ষিণহস্তদ্বারা বাজাইতেছিল; তাহার সেই দক্ষিণ-হস্তের অঙ্গুরীগুলি ক্ষুদ্র ক্ষুদ্র শঙ্খখণ্ডের অঙ্গুরীদ্বারা পরিপূর্ণ ছিল, ত্রিপুণ্ড্র ধারণ করার অবশিষ্ট ভস্মে সেই দক্ষিণ হস্ত শুভ্রবর্ণ হইয়াছিল, তাহার মণিবন্ধদেশ শঙ্খবলয়ে পরিবেষ্টিত ছিল এবং নখের কিরণে সেই দক্ষিণ হস্ত লম্বা বলিয়া বোধ হওয়ায় হস্তি-দন্তের ছড়ি ধারণ করিয়াছে বলিয়া বোধ হইতেছিল; ইহাতে তাহাকে সাক্ষাৎ গন্ধর্ব্ববিদ্যার ন্যায় দেখা যাইতেছিল। (জ) মণ্ডপে মণিময় স্তম্ভগুলিতে লীলাবিলাস-সংযুক্ত,

[१] ०षेवितास्। [२] सूक्ष्मदन्तखण्डिकाङ्गुलीयकापूरिताङ्गुलिना। [३]…पाण्डुरेण।
[४] सखीभिः प्रतिमाभिः।

অতিপ্রবলভক্ত্যারাধিতস্য হৃদয়মিব প্রবিষ্টাং হরস্য, (গ) হারলতয়েব (১) গ্রাম-কণ্ঠযোগয়া গ্রহপঙ্‌ক্ত্যেব ধ্রুবপ্রতিবদ্ধয়া ক্রুদ্ধয়েব রক্ত-(২) মুখবর্ণয়া মত্তয়েব ঘূর্ণিত-মন্দ-(৩) তারয়া উন্মত্তয়েব অনেককৃততালয়া মীমাংসয়েব অনেকভাবনা-নুবিদ্ধয়া গীত্যা দেবং বিরূপাক্ষমুপবীণয়ন্তীম্, (ঘ) অতিমধুরগীতাকৃষ্ট-ধ্যান-

(গ) স্নপনেতি। স্নপনেন আর্দ্রে ক্লিন্নে লিঙ্গে শিবমূর্ত্তৌ সংক্রান্তং প্রতিবিম্বং যস্যাস্তস্যা ভাব-স্তস্য হেতুনা, অতিপ্রবলভক্ত্যা আরাধিতস্য হরস্য হৃদয়ং প্রবিষ্টামিব স্থিতাম্। অত্র ক্রিয়োৎপ্রেক্ষালঙ্কারঃ।

(ঘ) হারেতি। হারলতয়েব গ্রামকণ্ঠযোগয়া লব্ধগলসম্বন্ধয়া, ইদমুভয়ত্রাপি সমানম্। অন্যত্র তু ধ্রুবাভ্যাং নক্ষত্রাভ্যাং প্রতিবদ্ধয়া সংযতয়া। গানাঙ্গধ্রুবলক্ষণমুক্তং সঙ্গীতদামোদরে—"উত্তমঃ ষট্‌পদঃ প্রোক্তো মধ্যমঃ পুষ্পমঃ স্মৃতঃ। কনিষ্ঠশ্চতুর্ভিঃ স্যাদ্ ধ্রুবকোঽয়ং ময়োদিতঃ।" ইত্যাদি। গ্রহচক্রস্য ধ্রুবনক্ষত্রযোর্বন্ধন-মুক্তং সূর্য্যসিদ্ধান্তে—"ভচক্রং ধ্রুবয়োর্বদ্ধমাক্ষিপ্তং প্রবহানিলৈঃ। পর্য্যেত্যজস্রং তন্নদ্ধা গ্রহকক্ষা যথাক্রমম্।" ক্রুদ্ধয়া স্ত্রিয়েব, রক্তাঃ শ্রীরাগাদিযুক্তা মুখবর্ণা মুখোচ্চারিতান্যক্ষরাণি যস্যাং তয়া, অন্যত্র তু রক্তো লোহিতো মুখবর্ণো যস্যাস্তয়া। মত্তয়া মদ্যাদিপানজনিতমদয়া স্ত্রিয়েব, ঘূর্ণিতো মণ্ডপিকামধ্যে বিবর্ত্তিতঃ মন্দো মৃদুঃ তার উচ্চশ্চ স্বরো যস্যাস্তয়া, অন্যত্র তু ঘূর্ণিতে মদবশাচ্চলিতে মন্দে অলসে তারে কনীনিকে যস্যা-স্তয়া। উন্মত্তয়া স্ত্রিয়েব, অনেকে কৃতাস্তালাঃ কালক্রিয়ামানরূপাঃ করতলধ্বনয়শ্চ যস্যাং যয়া বা তয়া। মীমাংসয়া জৈমিনিপ্রণীতপূর্ব্বমীমাংসাশাস্ত্রেণেব, অনেকাভির্বিবিধাভির্ভাবনাভির্মূর্চ্ছনাভিঃ অনুবিদ্ধয়া মিশ্রি-তয়া, পক্ষে অনেকয়া দ্বিবিধয়া ভাবনয়া ভাবয়িতুর্ব্যাপারেণ তন্নিরূপণেনেত্যর্থঃ অনুবিদ্ধয়া ঘটিতয়া। "ভাবনা নাম ভবিতুর্ভবনানুকূলো ভাবয়িতুর্ব্যাপারবিশেষঃ, সা চ দ্বিবিধা শাব্দী ভাবনা আর্থী ভাবনা চে"তি মীমাংসা-ভাস্করঃ। বিস্তরস্তু তত্রৈব দ্রষ্টব্যঃ। এবম্ভূতয়া গীত্যা গানেন, বিরূপাণি চন্দ্রসূর্য্যাগ্নিরূপতয়া বিসদৃশানি অক্ষীণি নেত্রাণি যস্য তং দেবং শিবং উপবীণয়ন্তীং বীণয়া উপগায়ন্তীম্। অত্র পূর্ণা মালোপমালঙ্কারঃ।

বীণার সহিত তাহার দেহের অনুরূপ প্রতিবিম্ব পড়িয়াছিল ; সেগুলিকে তাহার সহচরীদিগের ন্যায় দেখা যাইতেছিল। (গ) স্নান করাইয়াছিল বলিয়া আর্দ্র শিব-মূর্ত্তিতে তাহার প্রতিবিম্ব পড়িয়াছিল, সুতরাং বোধ হইতেছিল যেন, বিশেষ ভক্তিসহকারে আরাধনা করায় সে, শিবের হৃদয়ে প্রবেশ করিয়াছে ; (ঘ) বীণার ধ্বনির সহিত গান মিশাইয়া সে মহাদেবের স্তব করিতেছিল ; সেই গানটি মুক্তাময় হারের ন্যায় তাহার কণ্ঠ-সংলগ্ন ছিল, গ্রহচক্র যেমন ধ্রুবনক্ষত্র সংযুক্ত থাকে, সেই গানটিও তেমন ধ্রুয়া-সংযুক্ত ছিল এবং ক্রুদ্ধা রমণীর যেমন মুখ রক্তবর্ণ হয়, সেই গানটিতেও তেমন মুখ হইতে নানাবিধ রাগ-রাগিণীযুক্ত অক্ষর উচ্চারিত হইতেছিল ; মত্তা রমণীর যেমন নয়নের তারা অলস হইয়া ঘুরিতে থাকে, সেই গানের স্বরও তেমন মৃদু ও উচ্চ হইয়া ঘুরিতেছিল ; উন্মত্তা রমণী যেমন বহুতর করতলধ্বনি করে; সেই গানেও তেমন বহুতর তাল করা হইতেছিল এবং মীমাংসাদর্শন যেমন শাব্দী ও আর্থী নামে

(১) হারযষ্ট্যেব। (২) রাগরক্ত...। (৩)...মন্দ...।

मिवाभ्यस्यद्भिर्निश्चलकर्णपुटैर्मृग-वराह-वानर-वारण-शरभ-सिंह-प्रभृतिभिर्वनचरैरावद्धमण्डलैराकर्ण्यमान-गीतानुविद्ध-विपञ्ची-घोषाम्, (१) (ङ) अमरापगामिव नभसोऽवतीर्णाम्, (च) दीक्षितवाचमिवाप्राकृताम्, (छ) त्रिपुरारि-शरशलाकामिव तेजोमयीम्, (२) (ज) पीतामृतामिव विगत-तृष्णाम्, (झ) ईशानशिरःशशिकलामिवानुपजातरागाम्, (ञ) अमथितोदधिजलसम्पदमिवान्तः-

---

(ङ) ध्यानेति । अतिमधुरेण गीतेन वशकृष्टैराकृष्य आनीतैः, निश्चलकर्णपुटैः, अतएव ध्यानं अभ्यस्यद्भिः शिक्षमाणैरिव स्थितैः, आवद्धं मण्डलं वर्तुलाकारेणावस्थानं यैस्तैः । वारणो हस्ती । शरभः सिंहघाती अष्टपदो जन्तुविशेषः । आकर्ण्यमानः श्रूयमाणः गीतानुविद्धो गानानुसृतो विपञ्चीघोषः सप्ततन्त्रीविशिष्टवीणाध्वनिर्यस्यास्ताम् । अत्र क्रियोत्प्रेक्षालङ्कारः ।

(च) अमरेति । नभस आकाशादवतीर्णाम् अमरापगां मन्दाकिनीमिव स्थिताम् । अत्र द्रव्योत्प्रेक्षालङ्कारः ।

(छ) दीक्षितेति । दीक्षितस्य यज्ञादौ व्रतिनः वाचं वाक्यमिव, अप्राकृताम् अमानुषीं दिव्याम्, अन्यत्र तु प्राकृतादिभाषाभिन्नां संस्कृतात्मिकामित्यर्थः । "नापभाषितवै न म्लेच्छितवै" इति श्रुत्या व्रतिनोऽपसंभाषाव्यवहारनिषेधादिति भावः । अत्र पूर्णोपमालङ्कारः ।

(ज) त्रिपुरेति । त्रिपुरारेः शिवस्य शरशलाकां त्रिपुरासुरवधकाले नारायणात्मिकां बाणशलाकामिव तेजोमयीं तेजःप्रचुराम् । पूर्णोपमा ।

(झ) पीतेति । पीतममृतं यया तां स्त्रियमिव, विगता तृष्णा विषयलोभो जलपिपासा च यस्यास्ताम् । पूर्णोपमा ।

(ञ) ईशानेति । ईशानस्य शिवस्य शिरसः शशिकलामिव, अनुपजातो रागो कामानुरागो रक्तिमा च यस्यास्ताम् । पूर्णोपमा । तच्चन्द्रकलाया उदयास्ताभावादेव रागो न जायत इति बोध्यम् ।

---

বিবিধ ভাবনা-বিশিষ্ট, সেই গানটিও তেমন বহুতর মূর্চ্ছনা-বিশিষ্ট ছিল। (ঙ) অতি মধুর গানে আকৃষ্ট হইয়া হরিণ, শূকর, বানর, হস্তী, শরভ ও সিংহপ্রভৃতি বন্য পশুগণ নিশ্চলকর্ণপুটে ও মণ্ডলাকারে অবস্থান করিয়া, তাহার গীত-সংযুক্ত বীণার ধ্বনি শুনিতেছিল; তাহাতে বোধ হইতেছিল যেন তাহারাও ধ্যান অভ্যাস করিতেছে। (চ) আর সেই কন্যাটিকে, আকাশ হইতে অবতীর্ণ মন্দাকিনীর ন্যায় দেখা যাইতেছিল। (ছ) যজ্ঞে দীক্ষিত ব্যক্তির যেমন প্রাকৃত ভাষা বলিতে নাই, কন্যাটিও তেমন প্রাকৃত (মনুষ্য) ছিল না। (জ) ত্রিপুরাসুরের বধের সময়ে শিবের বাণের ন্যায় সেও তেজোময়ী ছিল। (ঝ) অমৃতপানকারিণীর যেমন পিপাসা থাকে না, তাহারও তেমন বিষয়-লালসা ছিল না। (ঞ) শিবের মস্তকস্থিত চন্দ্রকলার যেমন রাগ (রক্তিমা) জন্মে না, তাহারও তেমন রাগ (কামানুরাগ) জন্মিয়াছিল না। (ট)

---

(१)…निर्घोषाम् । (२) तपोमयीम् ।

प्रसन्नाम्, (ट) असमस्तपदवृत्तिमिवासम्बन्धाम्, (ठ) बौद्धबुद्धिमिव निरालम्बनाम्, (ड) वैदेहीमिव प्राप्तज्योतिःप्रवेशाम्, (ढ) द्यूतकलाकुशलामिव वशीकृताक्षहृदयाम्, (ण) महीमिव जलभृतदेहाम्, (त) हिमसमयदिवस-(१) मुखलक्ष्मीमिव परिगृहीत-(२) भास्करातपाम्, (थ) आर्य्यामिव समुपात्त-

(ट) प्रसन्नेति। प्रसन्नस्य उदधेः समुद्रस्य जलसम्पदमिव, अन्तःप्रसन्नां चित्ते मुदा कामादिरहितचित्तामित्यर्थः, अन्यत्र तु अच्छजलनिर्म्मलाम्। पूर्णोपमा।

(ठ) असमस्तेति। असमस्तानां समासरहितानां पदानां सुप्तिङन्तानां वृत्तिमवस्थितिमिव, असम्बन्धां शीतोष्णादिद्वन्द्वदुःखरहिताम्, अन्यत्र तु समासरहिता सुबन्तलरहिता वा। पूर्णोपमा।

(ड) बौद्धेति। बौद्धानां माध्यमिकयोगाचारसम्प्रदायिकानामित्यर्थः बुद्धिं ज्ञानमिव, निरालम्बनां सर्वविषयासक्तिरहिताम्, अन्यत्र तु निर्विषयाम्। पूर्णोपमा। बौद्धा माध्यमिका योगाचाराश्च सम्प्रदाया विज्ञानातिरिक्तं पदार्थं न मन्यन्ते, वदन्ति च ज्ञानस्यैव घटादिरूपेणावभासनं, भेदस्तु भ्रान्तिरेवेति। तथा च "सहोपलम्भनियमादभेदो नीलतद्धियोः। भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये।"

(ढ) वैदेहीमिति। वैदेहीं सीतामिव, प्राप्तो ज्योतिषि परब्रह्मणि प्रवेशो अन्तर्गमनं यया ताम्, अन्यत्र तु प्राप्तो ज्योतिषि परीक्षार्थं प्रज्वालितवह्नौ प्रवेशो यया ताम्। पूर्णोपमा।

(ण) द्यूतेति। द्यूतकलायां पाशकक्रीडायां कुशलां निपुणां स्त्रियमिव, वशीकृतानि अक्षाणि इन्द्रियाणि हृदयं चित्तञ्च यया ताम्, अन्यत्र तु वशीकृतम् अक्षहृदयं पाशकविद्यारहस्यं यया ताम्। पूर्णोपमा।

(त) महीमिति। महीं पृथिवीमिव, जलेन जलमात्रपानेन भृतो धृतो देहो यया ताम्, अन्यत्र तु जलेन भृतो वेष्टितो देहो यस्यास्ताम्। पूर्णोपमा।

(थ) हिमेति। हिमसमयस्य माघफाल्गुनात्मकतुषारपातकालस्य दिवसमुखलक्ष्मीमिव प्रत्यूषश्रियमिव, परिगृहीतः पञ्चाग्निसाधनात् शरीरे स्वीकृतः भास्करातपः सूर्य्यालोको यया ताम्, अन्यत्र तु परिगृहीतस्तुषारैर्निरुद्धो भास्करातपो यया ताम्। पूर्णोपमा।

অনালোড়িত সমুদ্রের জলের ভিতর যেমন নির্ম্মল, তাহার অন্তঃকরণও তেমন নির্ম্মল ছিল। (ঠ) সমাসবিহীন পদসমূহের যেমন পরস্পর মিলন থাকে না, তাহারও তেমন শীতোষ্ণাদি দ্বন্দ্বদুঃখ ছিল না। (ড) বৌদ্ধদিগের সম্প্রদায়বিশেষের মতে জ্ঞানের যেমন বিষয় নাই, তাহারও তেমন আসক্তি ছিল না। (ঢ) সীতা যেমন অগ্নিতে প্রবেশ করিয়াছিলেন, সেও তেমন পরব্রহ্মে প্রবেশ করিয়াছিল। (ণ) দ্যূতক্রীড়ায় নিপুণ স্ত্রীলোক যেমন পাশক বিদ্যার রহস্য আয়ত্ত করিয়া থাকে, সেও তেমন ইন্দ্রিয়সমূহ এবং চিত্তকে আয়ত্ত করিয়াছিল। (ত) পৃথিবী যেমন জলে পরিবেষ্টিতদেহা, সেও তেমন কেবল জলপানে ধৃতদেহা ছিল। (থ) শীতকালের প্রভাতসময়ের শোভা যেমন হিমদ্বারা সূর্য্যের আলোক আবৃত করে, সেও

(१)···हिम···। (२) परीत···।

(१) यतिगणोचितमात्राम्, (ध) आलिखितामिवाचलावस्थानाम्, (न) अंशुमयीमिव तच्छायानुलिप्तभूतलाम्, (प) निर्म्ममाम्, (२) निरहङ्काराम्, निर्म्मत्सराम्, अमानुषाकृतिम्, दिव्यत्वादपरिज्ञायमान-वयः-परिमाणाम् (३) अष्टादशवर्षदेशीयामिवोपलक्ष्यमाणाम्, प्रतिपन्नपाशुपतव्रतां कन्यकां ददर्श। (फ) ततोऽवतीर्य्य तरुशाखायां बद्धा तुरङ्गम् (४) उपसृत्य भगवते भक्त्या (५) प्रणम्य

---

(द) आर्य्यामिति। आर्य्यां तन्नामप्रसिद्धं छन्दोविशेषमिव, सम्यगुपात्ता गृहीता यतिगणस्य जितेन्द्रियजनसमूहस्य मुनिगणस्येत्यर्थः उचिता योग्या मात्रा दण्डकमण्डल्वाद्युपकरणं यया ताम्, अन्यत्र तु सम्यगुपात्ता गृहीताः, यतिर्विश्रामस्थानम्, गणा मगणनगणादयः, उचिता योग्या तत्तल्लक्षणोक्ता मात्रा उच्चारणकालश्च यया ताम्। पूर्णोपमा। "लक्ष्मैतत् सप्तगणा गोपेता भवति नेह विषमे जः। षष्ठोऽयं न लघु वा प्रथमेऽर्द्धे नियतमार्य्यायाः।" इत्यादिश्छन्दोमञ्जरी।

(ध) आलेति। आलिखितां चित्रितामिव, अचले पर्वते अवस्थानं यस्यास्ताम्, अन्यत्र तु अचलं स्थिरमवस्थानं यस्यास्ताम्। पूर्णोपमा।

(न) अंश्विति। अंशुमयीं तेजोमयीं देवीमिव, तनुच्छायया देहस्य प्रतिबिम्बेन कान्त्या च अनुलिप्तं भूतलं यया ताम्। पूर्णोपमा।

(प) निर्म्ममामिति। ममतार्थे ममशब्दोऽयमव्ययः, निर्म्ममां ममतारहिताम्। निर्म्मत्सरामन्यविद्वेषहीनाम्। दिव्यत्वात् गन्धर्वकन्यात्वेन निर्जरत्वादित्यर्थः अपरिज्ञायमानं मानुषवदाकृतिदर्शनमात्रेणाबुध्यमानं वयसः परिमाणं यस्यास्तामपि, अष्टादशवर्षदेशीयामिव अष्टादशवर्षात् किञ्चिन्न्यूनवयस्कामिव। "ईषदसमाप्तौ" इत्यादिना देशीयप्रत्ययः। प्रतिपन्नं गृहीतं पशुपतिः शिवो देवता अस्येति पाशुपतं व्रतं शिवपूजारूपो नियमो यया ताम्।

(फ) तत इति। त्रिलोचनाय शिवाय। दिव्ययोषितं स्वर्गीयस्त्रियम्। अनिमिषाणि निस्पन्दानि पक्ष्माणि लोमानि यस्य तेन, निश्चलं यथा तथा निबद्धं न्यस्तं लक्ष्यं दृष्टिर्येन तेन।

---

তেমন শরীরে সূর্য্যের আলোক ধারণ করিতেছিল। (দ) আর্য্যা-ছন্দের যেমন যতি, গণ ও উপযুক্ত মাত্রা থাকে, তাহারও তেমন মুনিগণের উপযুক্ত দণ্ড ও কমণ্ডলুপ্রভৃতি উপকরণ ছিল। (ধ) চিত্রিত প্রতিমূর্ত্তি যেমন নিশ্চলভাবে অবস্থান করে, সেও তেমন পর্ব্বতে অবস্থান করিতেছিল। (ন) তোজোময়ী দেবী যেমন শরীরের কান্তিদ্বারা ভূতল লিপ্ত করেন, সেও তেমন শরীরের প্রতিবিম্বদ্বারা ভূতল লিপ্ত করিতেছিল। (প) এবং তাহার মমতা ছিল না, অহঙ্কার ছিল না, বিদ্বেষ ছিল না, ছিল,—অমানুষী আকৃতি; আর স্বর্গীয় বলিয়া তাহার বয়সের যথার্থ পরিমাণ জানিতে না পারিলেও, তাহাকে অষ্টাদশ বর্ষের কিঞ্চিৎ ন্যূনবয়স্ক বলিয়া বোধ হইতেছিল এবং সে, শিবের উপাসনারূপ ব্রত অবলম্বন করিয়াছিল।

(ফ) তদনন্তর চন্দ্রাপীড় অশ্ব হইতে অবতরণ করিয়া কোন বৃক্ষের শাখাতে অশ্বটিকে

---

(१) उपात्त…। (२) निर्व्वाणाम्। (३)…प्रमाणाम्। (४) तुरगम्। (५) सद्भक्त्या।

विलोचनाय, (१) तामेव दिव्ययोषितमनिमिष-(२) पक्ष्मणा निश्चल-निबद्ध-लक्ष्येण चक्षुषा पुनर्निरूपयामास (फ)। उदपादि चास्य तस्या रूपसम्पदा कान्त्या प्रशान्त्या चाविर्भूतविस्मयस्य मनसि, (ब)---'अहो! जगति जन्तूनामसमर्थितोपनतान्यापतन्ति वृत्तान्तान्तराणि (भ)। तथाहि, मया मृगयायां यदृच्छया निरर्थकमनुबध्नता तुरङ्गमुख-(३) मिथुनम्, अयमतिमनोहरो मानवानामगम्यो दिव्यजनसञ्चरणोचितः प्रदेशो वीक्षितः (४) (म)। अत्र च सलिलमन्वेषमाणेन हृदयहारि सिद्धजनोपस्पृष्टजलम् (५) सरो दृष्टम्। तत्तीरलेखाविश्रान्तेन चामानुषं गीतमाकर्णितम्। तच्चानुसरता मानुषदुर्लभदर्शना दिव्यकन्यकेयमालोकिता (य)। नहि मे संशीतिरस्या दिव्यतां प्रति, आकृतिरेवानुमा-

(ब) उदपादीति। विस्मय इति शेषः। रूपसम्पदा सौन्दर्यातिशयेन, कान्त्या देहद्युत्या, प्रशान्त्या प्रशमेन च करणेन, आविर्भूतो विस्मयो यस्य तस्य, अस्य चन्द्रापीडस्य मनसि उदपादि। इयं [illegible]।

(भ) काश्चौ वृत्तिरित्याह अहो इति। जन्तूनां प्राणिनाम्, वृत्तान्तान्तराणि व्यापारविशेषाः, असमर्थितोपनतानि अतर्कितोपस्थितानि सन्ति आपतन्ति मनसि आगच्छन्ति अनुभवविषयीभवन्तीत्यर्थः।

(म) उक्तमर्थं समर्थयितुमाह तथाहीति। यदृच्छया स्वेच्छया। अनुबध्नता अनुसरता। तुरङ्गमुखमिथुनं किन्नरद्वयम्। दिव्यजनसञ्चरणोचितो देवजनविचरणयोग्यः।

(य) अत्रेति। हृदयहारि मनोहरम्, सिद्धजनैर्देवयोनिविशेषैः उपस्पृष्टं व्यवहृतं जलं यस्य तत्, सरः अच्छोदसरोवरः। तस्य अच्छोदस्य तीरलेखायां तटवीथ्यां विश्रान्तेन कृतविश्रामेण मयेति सम्बन्धः।

(र) ननु कथमियं दिव्यकन्येति निश्चीयत इत्याह नहीति। अस्या दृश्यमानायाः कन्यकायाः, दिव्यता

বন্দন করিলেন, পরে নিকটে যাইয়া ভক্তিসহকারে ভগবান্ মহাদেবকে নমস্কার করিয়া পুনরায় স্থিরদৃষ্টিতে সেই স্বর্গীয় রমণীকেই দেখিতে লাগিলেন ; তখন তাঁহার নয়নের লোমগুলি নিস্পন্দ হইয়াছিল। (ব) তাহার অলৌকিক সৌন্দর্য্যে, শরীরের আলোকে এবং শান্তির পথ অবলম্বন করায় চন্দ্রাপীড়ের বিস্ময় জন্মিল এবং মনে হইতে লাগিল—(ভ) "কি আশ্চর্য্য ! জগতে প্রাণিগণের সমক্ষে বিশেষ বিশেষ ঘটনা, অতর্কিতভাবেই উপস্থিত হইয়া থাকে (ম) কারণ—আমি ইচ্ছানুসারে মৃগয়ায় আসিলাম, অনর্থক কিন্নর দুইটার অনুসরণ করিলাম, পরে, মানুষের অগম্য স্বর্গবাসীদিগের বিচরণের যোগ্য, অত্যন্তমনোহর এই স্থানটি দেখিতে পাইলাম। (য) এখানে আবার জলের অন্বেষণ করিতে করিতে সিদ্ধজন-সেবিত সুন্দর সরোবরটি দেখিলাম ; তাহার তীরে আবার বিশ্রাম করিতে থাকিয়া অলৌকিক গান শুনিলাম ; আবার সেই গীতধ্বনির অনুসরণ করিয়া এই স্বর্গীয় কন্যাটিকে দেখিতে পাইলাম ; কিন্তু

(१) पार्श्वोपनतं। (२) अनिमिष…।
(३) तुरगमुख…। (४) वीक्षितः गिरेः। (५)…उपस्पृष्टजलम्।

থযত্যমানুষতাম্, কুতশ্চ মর্ত্ত্যলোকে সম্ভূতিরেবংবিধানাং গন্ধর্ব্ব-(১) ধ্বনি-বিধায়িনাম্ (র)। তদ্যদি মে সহসা দর্শনপথান্নাপযাতি, নারোহতি বা কৈলাসশিখরম্, নোৎপততি বা গগনতলম্, ততঃ 'কা ত্বম্, কিমভিধানা বা, কিমর্থং বা প্রথমে বয়সি প্রতিপন্না ব্রতম্, (২) ইতি সর্ব্বমেবৈতদ্ এনামুপসৃত্য পৃচ্ছামি, অতিমহানয়মবকাশ আশ্চর্য্যাণাম্।' ইত্যবধার্য্য তস্যামেব স্ফাটিকমণ্ডপিকায়ামন্যতমং স্তম্ভমাশ্রিত্য সমুপবিষ্টো গীতসমাপ্ত্যবসরং প্রতীক্ষমাণস্তস্থৌ। (ল)

অথ গীতাবসানে মূকীভূতবীণা প্রশান্তমধুকররুতেব কুমুদিনী সা কন্যকা সমুত্থায় প্রদক্ষিণীকৃত্য কৃতহরপ্রণামা পরিবৃত্য স্বভাবধবলয়া তপঃপ্রভাব-

---

অস্যাঃ স্বর্গীয়তাবিষয়ে নহি মে সংশীতিঃ সংশয়ো বর্ত্ততে। আকৃতিরেব অমানুষীতি শেষঃ। অমানুষতাং দিব্যতাম্। ন খলু মানুষীণামীদৃশ্যাকৃতির্ভবতীতি ভাবঃ। সম্ভূতিরুৎপত্তিঃ। সুতরামস্যা দিব্যতাং প্রতি নাস্তি সংশীতিরিতি ভাবঃ। সংশীতিরিতি সংপূর্ব্বশীঙ্ধাতোঃ ক্তিঃ।

(ল) তদ্যদি। নাপযাতি নাপসরতি। নোৎপততি নোদ্গচ্ছতি। ততস্তদা। কিমভিধানা কিন্নাম্নী। প্রতিপন্না আরব্ধবতী। আশ্চর্য্যাণাং শ্রবণীয়াশ্চর্য্যানুভবানাম্, অয়মবকাশঃ সময়ঃ।

(ব) অথেতি। মূকীভূতা নিঃশব্দা জাতা বীণা যস্যাঃ সা, অতএব প্রশান্তং বিরতং মধুকররুতং ভ্রমরধ্বনির্যস্যাঃ সা, কুমুদিনীব বিদ্যমানা। অত্রোপমালঙ্কারঃ। প্রদক্ষিণীকৃত্য শিবমূর্ত্তিমিতি শেষঃ। কৃতো

---

ইহার দর্শন পাওয়া মানুষের পক্ষে দুর্লভ। (র) এ যে স্বর্গীয়, সে বিষয়ে আমার কোনই সংশয় নাই; কারণ—ইহার এই আকৃতিই, 'এ মানবী নহে' বলিয়া আমাকে অনুমান করাইতেছে; বিশেষতঃ মর্ত্ত্যলোকে এইরূপ গন্ধর্ব্বের গীতধ্বনির সম্ভব হইবে কিরূপে? (ল) অতএব যদি সহসাই আমার দৃষ্টিপথ হইতে সরিয়া না যায়, কিংবা কৈলাসপর্ব্বতের শৃঙ্গে আরোহণ না করে, অথবা আকাশে উঠিয়া না যায়, তাহা হইলে 'তুমি কে? তোমার নামই বা কি? কি জন্যই বা এই নবীন বয়সে তপস্যা আরম্ভ করিয়াছ?' এই ভাবে এই সমস্ত বিষয়ই নিকটবর্ত্তী হইয়া ইহাকে জিজ্ঞাসা করিব; কারণ—আশ্চর্য্য শুনিবার এই-ই অত্যন্ত উপযুক্ত অবসর।' চন্দ্রাপীড় এইরূপ মনে মনে স্থির করিয়া সেই স্ফটিকমণ্ডপের ভিতরেই কোন একটি স্তম্ভ অবলম্বন পূর্ব্বক উপবেশন করিয়া গান-সমাপ্তির অবসর প্রতীক্ষা করতঃ অবস্থান করিতে লাগিলেন।

(ব) তাহার পর গান সমাপ্ত হইলে বীণাটিও নীরব হইল, তখন ভ্রমরের রব বিরত হইলে কুমুদিনীর ন্যায় সে বিরাজ করিতে লাগিল; পরে সেই কন্যাটি উঠিয়া প্রদক্ষিণ

---

[১] গান্ধর্ব্ব…। [২] ব্রতমুপগতম্।

नोपलभ्यते, अन्यच्छरणं नालोक्यते, अन्या गतिर्नास्ति। अकथ्यमाने च महाननर्थोपनिपातो जायते। प्राणपरित्यागेनापि रक्षणीयाः सुहृदसव इति कथयामि (ड)। अस्ति भवत्याः समक्षमेव स मया तथा निष्ठुरमुपदर्शितकोपेनाभिहितः। तथा चाभिधाय परित्यज्य तम्, तस्मात् प्रदेशादुपजातमन्युरुत्सृष्टकुसुमावचयोऽन्यप्रदेशमगमम्। अपयातायाञ्च भवत्यां मुहूर्त्तमिव स्थित्वा एकाकी किमयमिदानीमाचरतीति सञ्जातवितर्कः प्रतिनिवृत्य विटपान्तरितविग्रहस्तं प्रदेशं व्यलोकयम् (ढ)। यावत्तत्र तं नाद्राक्षम्, आसीच्च मे मनस्येवम्---'किञ्चु मदनपरायत्तचित्तवृत्तिस्तामेवानुसरन् गतो भवेत्, गतायाञ्च तस्यां लब्धचेतनो लज्जया (१) न शक्नोति मे दर्शनपथमुपगन्तुम्; आहोस्वित् कुपितः परित्यज्य मां गतः, उतान्वेषमाणो मामेव प्रदेशमन्यमितः समाश्रितः

---

पुनरन्या गतिर्नास्तीत्यभिधानादर्थगतपुनरुक्ततादोषः प्रसजन्नपि वक्तुर्विषादप्रमततया दोषतां नावहति, प्रत्युत गुणतामेव भजते। "कथितञ्च पदं पुनः। विहितस्यानुवादत्वे विषादे विस्मये क्रुधि।" इत्यादि दर्पणोक्तेः। अनर्थोपनिपातो विपदुपस्थितिः सुहृन्प्राणनाशसम्भवादिति भावः। सुहृदोऽसवः सख्युः प्राणाः।

(ड) अस्तीति। उपदर्शितकोपेन प्रकटितक्रोधेन मया भवत्याः समक्षमेव स पुण्डरीकः तथा निष्ठुरमभिहित उक्तः अस्तीत्यन्वयः। अस्तीत्यतीतसामीप्ये वर्त्तमाना आसीदित्यर्थः। उपजातमन्युः उत्पन्नकोपः। उत्सृष्टः कोपेनैव त्यक्तः कुसुमावचयः पुष्पचयनं येन सः। अयं पुण्डरीकः। सञ्जातवितर्क उत्पन्नसंशयः। विटपान्तरितविग्रहः शाखाच्छन्नदेहः अहम्।

(ढ) यावदिति। तं पुण्डरीकम्। तावदासीदित्यर्थः। मदनस्य परायत्ता अत्यन्ताधीना चित्तवृत्तिर्यस्य स तादृशः पुण्डरीकः। तां कन्यामेव। कुपितो मम भर्त्सनेन क्रुद्धः। विकल्पयन् विविधां कल्पनां कुर्वन्। अन्वेषमाण इति भौवादिकादात्मनेपदिन एषधातो शानच्।

কারণ—ইহার অন্য উপায় দেখিতেছি না, অন্যরকম প্রতিকার আছে বলিয়া বুঝিতেছি না, অন্য রক্ষক দেখিতেছি না এবং অন্য কোন রকমই উপায় নাই। না বলিলেও মহাবিপদ উপস্থিত হয়। নিজের প্রাণ পরিত্যাগ করিয়াও সখার প্রাণ রক্ষা করা উচিত বলিয়া, বলিতেছি। (ড) আপনার সাক্ষাতেই আমি ক্রোধ প্রকাশ করিয়া পুণ্ডরীককে সেই ভাবে নিষ্ঠুর কথা সকল বলিয়াছিলাম, (তাহা আপনার জানা আছে)। তাহার পর আমি তাহাকে পরিত্যাগ করিয়া, ক্রোধবশতঃ পুষ্পচয়নও না করিয়া সে স্থান হইতে অন্য স্থানে চলিয়া গেলাম। আপনিও চলিয়া গেলেন, তাহার পর কিছু কাল থাকিয়া আমার মনে এইরূপ সংশয় জন্মিল যে, 'এখন পুণ্ডরীক একাকী কি আচরণ করিতেছে দেখি' তাই আমি ফিরিয়া আসিয়া শাখার অন্তরালে লুক্কায়িত থাকিয়া, সেই দিকে দৃষ্টিপাত করিতে লাগিলাম। (ঢ) যখন তাহাকে

(१) लज्जमानः।

स्यात्” इत्येवं विकल्पयन् कञ्चित्कालमतिष्ठम् (ढ)। तेन तु जन्मनः (१) प्रभृत्यनभ्यस्तेन तस्य क्षणमप्यदर्शनेन दूयमानः पुनरचिन्तयम्—‘स कदाचिद्धैर्य्य-स्खलनविलक्षः किञ्चिदनिष्टमपि समाचरेत्। नहि किञ्चिन्न (२) क्रियते ह्रिया। तन्न युक्तमेनमेकाकिनं कर्त्तुम्’ इत्यवधार्य्यान्वेष्टुमादरमकरवम् (ण) अन्वेषमाणश्च यथा यथा नापश्यं तम्, तथा तथा सुहृत्स्नेहकातरेण मनसा तत्त-दशोभनमाशङ्कमानस्तरुलतागहनानि, चन्दनवीथिकाः, लतामण्डपान् (३) सरः-कूलानि च (४) वीक्षमाणो निपुणमितस्ततो दत्तदृष्टिः सुचिरं व्यचरम्। (त)

(ण) तेनेति। तस्य पुण्डरीकस्य। दूयमानः सन्तप्यमानः। स पुण्डरीकः, धैर्य्यस्य स्खलनेन विलो-पेन विलक्षो लज्जितः सन्, कदाचित् किञ्चित् अनिष्टमपि उद्बन्धनादिकम्। ननु तादृशो मनस्वी कथमनिष्ट-माचरेदित्याह नहीति। ह्रिया लज्जया न क्रियते इत्थं किञ्चित् किमपि नहि अस्तीत्यर्थः। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः।

(त) अन्वेषेति। अशोभनमनिष्टम्। तरुलतानां गहनानि वनानि। चन्दनवीथिकाश्चन्दनतरुश्रेणीः। सरसः कूलानि तीराणि च, निपुणं यथा तथा वीक्षमाणः।

সেখানে দেখিতে পাইলাম না, তখন আমার এইরূপ মনে হইতে লাগিল যে—‘সম্ভবতঃ, অত্যন্ত-কামায়ত্ত-চিত্ত হইয়া সেই কন্যাটিরই পশ্চাৎ পশ্চাৎ গমন করিয়া থাকিবে, তাহার পর সেই কন্যাটি বাড়ী চলিয়া গেলে চৈতন্যলাভ করিয়া লজ্জাতে আমার দৃষ্টিপথে আসিতে পারিতেছে না; অথবা ক্রুদ্ধ হইয়া আমাকে পরিত্যাগ করিয়া চলিয়া গিয়াছে; কিম্বা আমা-কেই অন্বেষণ করতঃ এস্থান হইতে অন্য স্থানে গিয়াছে’, এইরূপ মনে মনে নানাবিধ কল্পনা করতঃ সেই স্থানেই কিছু কাল অবস্থান করিলাম। (ণ) জন্মকাল হইতেই ক্ষণকালের জন্যও পুণ্ডরীকের সহিত সাক্ষাৎ না হওয়া আমার অনভ্যস্ত ছিল, সুতরাং তৎকালীন তাহার সেই অদর্শনে সন্তপ্ত হইয়া আমি পুনরায় চিন্তা করিতে লাগিলাম—‘ধৈর্য্য-লোপ নিবন্ধন লজ্জিত হইয়া কখনও হয় ত পুণ্ডরীক কোন অনিষ্ট আচরণও করিতে পারে; কারণ লজ্জায় করিতে না পারে—এমন কিছুই নাই। অতএব ইহাকে একাকী রাখা উচিত নহে”, এইরূপ মনে মনে স্থির করিয়া তাহাকে অন্বেষণ করিবার জন্য চেষ্টা করিলাম। (ত) যখন অন্বেষণ করিয়াও তাহাকে দেখিতে পাইলাম না, তখন সুহৃৎ-স্নেহে কাতরচিত্তে নানাবিধ অমঙ্গলের আশঙ্কা করতঃ পুঙ্খানুপুঙ্খরূপে ইতস্ততঃ দৃষ্টিপাত করিয়া তরুলতাময় বন, চন্দনবৃক্ষশ্রেণী, লতামণ্ডপ এবং সরোবরের তীর দেখিতে দেখিতে বহু সময় যাবৎ বিচরণ করিলাম।

(१) जन्मनः। (२) नहि यन्न। (३) चन्दनवीथिकालतामण्डपान्,…मण्डपिकाः।
(४) सरस्तीराणि च।

अथैकस्मिन् सरःसमीपवर्त्तिनि निरन्तरतया कुसुममय इव मधुकरमय इव परभृतमय इव मयूरमय इवातिमनोहरे वसन्तजन्मभूते लतागहने कृतावस्थानम्, (थ) उत्सृष्टसकलव्यापारतया लिखितमिवोत्कीर्णमिव स्तम्भितमिवोपरतमिव प्रसुप्तमिव योगसमाधिस्थमिव, (द) निश्चलमपि स्वकर्त्तव्याच्चलितम्, एकाकिनमपि मन्मथाधिष्ठितम्, सानुरागमपि पाण्डुतामावहन्तम्, शून्यान्तःकरणमपि हृदय-निवासिदयितम्, तूष्णीकमपि कथितमदनवेदनातिशयम्, शिलातलोपविष्टमपि

---

(थ) अथेति। निरन्तरतया पुष्पघनतया हेतुना कुसुममये पुष्पनिर्म्मित इव, मधुकरनिरन्तरतया मधु-करमय इव, परभृतनिरन्तरतया परभृतमये कोकिलनिर्म्मित इव, तथा मयूरनिरन्तरतया मयूरमय इव। वस-न्तस्य कालस्य जन्मभूमिभूते उत्पत्तिस्थानस्वरूपे, एकस्मिन् लतागहने लतामयवने, कृतावस्थानं तमद्राक्ष-मिति परेणान्वयः। अत्र प्रस्तुतार्थे मयट्प्रत्ययाच्चतसृणामिव क्रियोत्प्रेक्षाणां मिथोनिरपेक्षतया संसृष्टिः।

(द) उत्सृष्टेति। उत्सृष्टाः परित्यक्ताः सकला व्यापारा अङ्गप्रत्यङ्गस्पन्दनादयो येन तस्य भावस्तया हेतुना, लिखितं चित्रितमिव, उत्कीर्णं पाषाणादिकं निखन्य निर्म्मितमिव, स्तम्भितमिव केनचित् सम्मोहित-मिव, उपरतं मृतमिव, प्रसुप्तं निद्रितमिव, तथा योगस्य चित्तवृत्तिनिरोधस्य यः समाधिः परमात्मनश्चिन्तनविभा-सनरूपं तस्मिन् तिष्ठतीति तमिव। अत्रापि षण्णामिव क्रियोत्प्रेक्षाणां पूर्ववत् संसृष्टिः।

(ध) निश्चलमिति। स्वकर्त्तव्यादात्मकर्त्तव्यात् चलितं प्रभ्रष्टमिति विरोधपरिहारः। एकाकिनमसहाय-मपि मन्मथेन सहायेनाधिष्ठितमिति विरोध, मन्मथस्य चित्तवृत्तिमात्रत्वात् समाधानम्। अनुरागिण्या रक्तिम्ना सह वर्त्तत इति सानुरागस्तमपि पाण्डुतामावहन्तमिति विरोधः, सानुरागं दयितायामासक्तमपीति समा-धानम्। हृदयनिवासिदयितत्वे शून्यान्तःकरणत्वाभावाद्विरोधः, शून्यं विषयान्तरवृत्तिरहितम् अन्तःकरणं यस्य तमिति समाधानम्। तूष्णीं मौनमस्येति तूष्णीकः सद्य आद्यन्ताभिपातः "तूष्णींशीलस्तु तूष्णीक" इत्यमरः। तं मौनावलम्बिनमपि कथितमदनवेदनातिशयमिति मौनकथनयोरेकत्रासम्भवाद्विरोधः, कथितो गात्रस्तम्भादिना

---

(থ) তাহার পর, সরোবরের নিকটবর্ত্তী, অত্যন্ত মনোহর এবং বসন্তকালের জন্মভূমির তুল্য একটি লতাময় বনের মধ্যে তাহাকে অবস্থান করিতে দেখিলাম; ঘন ঘন পুষ্প ছিল বলিয়া সেই লতাময়বনটিকে পুষ্প নির্ম্মিতের ন্যায়, ঘন ঘন ভ্রমর ছিল বলিয়া ভ্রমর-নির্ম্মিতের ন্যায়, অসংখ্য কোকিল ছিল বলিয়া কোকিল-নির্ম্মিতের ন্যায় এবং বহুতর ময়ূর ছিল বলিয়া ময়ূর-নির্ম্মিতের ন্যায় বোধ হইতেছিল। (দ) পুণ্ডরীক, অঙ্গ-প্রত্যঙ্গের স্পন্দনপ্রভৃতি সমস্ত কার্য্যই পরিত্যাগ করিয়াছিল; সুতরাং তাহাকে চিত্রিতের ন্যায়, খোদিতের ন্যায়, স্তম্ভিতের ন্যায়, মৃতের ন্যায়, নিদ্রিতের ন্যায় এবং ধ্যানস্থের ন্যায় দেখা যাইতেছিল। (ধ) এবং সে নিশ্চল হইলেও নিজের কর্ত্তব্য হইতে চলিয়াছিল, (পরিভ্রষ্ট হইয়াছিল); সহায়শূন্য হইলেও কামদেব সঙ্গে ছিলেন (কামার্ত্ত ছিল); রক্তবর্ণ হইলেও পাণ্ডুবর্ণ ধারণ করিয়াছিল (আপনার প্রতি অনুরক্ত হইয়াছিল এবং আপনারই বিরহে পাণ্ডুবর্ণ ধারণ করিয়াছিল); তাহার অন্তঃকরণ শূন্য হইলেও হৃদয়ে কোন প্রিয়জন বাস করিতেছিল (অন্তঃকরণে অন্য বিষয়ের চিন্তা

मरणे व्यवस्थितम्, (ध) शापप्रदानभयादिवादत्तदर्शनेन कुसुमायुधेन सन्ताप्य-मानम्, (न) अतिनिष्पन्दतया (१) हृदयनिवासिनीं प्रियां द्रष्टुमन्तःप्रविष्टैरिवा-सह्यसन्तापसंत्रासप्रलीनैरिव मनःक्षोभप्रकुपितैरिव उन्मुच्य गतैरिन्द्रियैः शून्यी-कृतशरीरम्, (प) निष्पन्दनिमीलितेनान्तर्ज्वलन्मदनदहनधूमाकुलिताभ्यन्तरेणेव पक्ष्मान्तर-(२) विवरवान्तानेकधारमनवरतमीक्षणयुगलेन बाष्पजलदुर्दिनमुत्-सृजन्तम्, (फ) आलोहिनीमधरप्रभामनङ्गाग्नेः प्रदहतो हृदयम् (३) अङ्ग-

सूचितः मदनवेदनाया अतिशय आधिक्यं येन तमिति समाधानम्। शिलातले उपविष्टमपि मरणे व्यवस्थितं विशेषेणावस्थितमुपविष्टमिति विरोधः, व्यवस्थितं कृतनिश्चयमिति समाधानम्। अत्र प्रत्येकविशेषण एव विरोधाभासोऽलङ्कारः।

(न) शापेति। अदत्तदर्शनेन अदृष्टेनेत्यर्थः। अत्र हेतूत्प्रेक्षालङ्कारः।

(प) अतीति। असह्यसन्तापात् यः सन्त्रासो भयं तेन प्रलीनैर्लुक्कायितैरिव, तथा मनसः क्षोभेण चाञ्चल्येन असत्पथगमनेनेत्यर्थः प्रकुपितैः क्रुद्धैरिव, स्वेषां चिरादेवातिसाधुत्वादिति भावः, अतएव उन्मुच्य स्वस्वस्थानं विहाय गतैरिन्द्रियैः सपदादिभिः शून्यीकृतं परित्यक्तं शरीरं यस्य तमिव स्थितम्, अन्यथेदृशी निष्पन्दता न स्यादिति भावः। अत्र प्रथमास्तिस्रो वाच्याः क्रियोत्प्रेक्षाः, अन्त्या च शरीरशून्यीकरणोत्प्रेक्षणा-दिवाद्यभावाच्च प्रतीयमाना क्रियोत्प्रेक्षा, इत्यासामङ्गाङ्गिभावेन सङ्करः।

(फ) निष्पन्देति। निष्पन्दञ्च तत् निमीलितं मुद्रितञ्चेति तेन, अतएव अन्तर्ज्वलतो मदनदहनस्य कामाग्नेर्धूमैराकुलितं व्याप्तमभ्यन्तरं यस्य तेनेव स्थितेन, अन्तर्धूमव्याप्तौ नयननिमीलनस्य स्वाभाविकत्वादिति भावः, ईक्षणयुगलेन नयनद्वयेन करणेन, पक्ष्मान्तरविवरेभ्यो नयनलोमान्तरालदेशेभ्यः वान्ता उद्गीर्णा अनेका धारा यस्य तत्, बाष्पजलदुर्दिनम् अश्रुजलवृष्टिम् उत्सृजन्तं वर्षन्तम्। अत्र पदार्थहेतुकं काव्यलिङ्गं मदन-दहनेति निरङ्गकेवलरूपकं क्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावेन सङ्करः।

ছিল না, কেবল আপনারই চিন্তা রহিয়াছিল) ; মৌনাবলম্বন করিয়া থাকিলেও অত্যন্ত কাম-বেদনা বলিতেছিল (নানাবিধ ভঙ্গীদ্বারা কামবেদনার সূচনা করিতেছিল) ; প্রস্তরখণ্ডের উপর বসিয়া থাকিলেও—মরণে বসিয়াছিল (কৃতনিশ্চয় হইয়াছিল)। (ন) কামদেব, শাপ-প্রদানের ভয়েই যেন দর্শন-দান না করিয়া তাহাকে সন্তপ্ত করিতেছিলেন। (প) আর পুণ্ডরীক অত্যন্ত নিষ্পন্দভাবে ছিল বলিয়া তাহার ইন্দ্রিয় সকল যেন হৃদয়নিবাসিনী প্রিয়াকে দেখিবার নিমিত্ত ভিতরে প্রবেশ করিয়াছিল, অসহ্য সন্তাপের ভয়েই যেন লুক্কায়িত হইয়া রহিয়াছিল এবং মন অসৎপথে ধাবিত হইয়াছে বলিয়াই যেন ক্রুদ্ধ হইয়া স্ব স্ব স্থান ত্যাগকরিয়া চলিয়া গিয়াছিল ; সুতরাং শরীরটা যেন শূন্য পড়িয়া রহিয়াছিল ; (ফ) নয়নযুগল নিষ্পন্দ ও মুদ্রিত হইয়া রহিয়াছিল, তাহাতে বোধ হইয়াছিল যেন, অন্তরে প্রজ্বলিত কামানলের ধূমে সেই নয়নযুগলের অভ্যন্তর দেশ ব্যাপ্ত রহিয়াছে এবং নয়নলোমের অন্তরাল হইতে বহুতর

(१) अतिनिष्पन्दतया। (२) अक्षिपक्ष्मान्तर…। (३) हृदयात्।

সংসর্পিণীং শিখামিবাদায় নিষ্পতদ্ভিরুচ্ছ্বাসৈস্তরলীকৃতাসন্নলতাকুসুমকেশরম্, (ভ) বামকপোলশয়নীকৃত-করতলতয়া সমুৎসর্পদ্ভিরমলৈর্নখাংশুভির্বিমলীকৃত-মচ্ছাচ্ছ-চন্দন-রস-রচিত ললাটিকমিব ললাটদেশমুদ্বহন্তম্, (ম) অচিরাপ-নীত-পারিজাত-কুসুম-মঞ্জরী-কর্ণপূরতয়া (১) সশেষ-(২) পরিমলামোদ-লোভোপ-সর্পিণা কলবিরুতচ্ছলেন মদনসম্মোহনমন্ত্রমিব জপতা মধুকরকুলেন সনী-

(ব) আলোহিনীমিতি। হৃদয়ং দহতঃ অনঙ্গাগ্নেঃ কামানলস্য ঊর্দ্ধসংসর্পিণীম্ উপরিগামিনীং শিখা-মিব আলোহিনীম্ আরক্তাম্ অধরপ্রভামোষ্ঠকান্তিমাদায় নিষ্পতদ্ভির্নির্গচ্ছদ্ভিঃ উচ্ছ্বাসৈর্নিশ্বাসৈঃ করণৈঃ, তরলীকৃতাঃ কম্পিতাঃ আসন্নলতানাং কুসুমকেশরাঃ পুষ্পকিঞ্জল্কা যেন তম্। অত্র নিরঙ্গকেবলরূপকং শ্রৌত্যুপমা চ জাত্যুৎপ্রেক্ষিতে স্থিতে, অনয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ। আলোহিনীমিতি "শ্যেতৈতহরিতলোহিতেভ্যস্তো নঃ" ইতি লোহিতশব্দস্য তকারস্য নকারঃ।

(ভ) বামেতি। বামকপোলস্য শয়নং কৃতং শয্যীকৃতম্ আধারীকৃতমিত্যর্থঃ করতলং বামপাণিতলং যেন তস্য ভাবস্তয়া হেতুনা প্রসারিতবামপাণিতলে বামগণ্ডস্থাপনেন বামহস্তনখকিরণানাং ললাটে সঞ্চরণাদিত্যর্থঃ, সমুৎসর্পদ্ভির্ললাটে সমুদ্গচ্ছদ্ভিঃ নখাংশুভিঃ নখাংকরণৈঃ, বিমলীকৃতং বিশদীকৃতম্, অতএব অচ্ছাচ্ছেন নিতান্তনির্ম্মলেন চন্দনরসেন রচিতা নির্ম্মিতা ললাটিকা তিলকবিশেষো যত্র তমিব স্থিতং ললাটদেশমুদ্বহন্তম্। অত্র ললাটিকারচনোৎপ্রেক্ষণাৎ ক্রিয়োৎপ্রেক্ষালঙ্কারঃ। "পত্রপাশ্যা ললাটিকা" ইত্যমরঃ।

(ম) অচিরেতি। অচিরম্ অনতিপূর্ব্বম্ অপনীতঃ মহাশ্বেতার্থদানার্থমপসারিতঃ পারিজাতকুসুমমঞ্জরী-রূপঃ কর্ণপূরো যস্য তস্য ভাবস্তয়া হেতুনা, সশেষস্তদানীমপ্যবশিষ্টো যঃ পরিমলঃ সৌরভং তস্য য আমোদস্তদনু-ভবজনিতানন্দস্তস্য লোভেন উপসর্পিণা সমীপবর্ত্তিনা, কলবিরুতচ্ছলেন অব্যক্তমধুরাস্ফুটরবব্যাজেন, মদনস্য সম্মোহনমন্ত্রং জপতেব স্থিতেন, মধুকরকুলেন ভ্রমরগণেন করণেন, সনীলোৎপলমিব সতমালপল্লবমিব স্থিতং

ধারা পড়িতেছিল,—এই অবস্থায় সে অবিশ্রান্ত অশ্রুবর্ষণ করিতেছিল। (ব) কামানল পুণ্ড-রীকের হৃদয় দগ্ধ করিতেছিল, সুতরাং তাহার ঊর্দ্ধগামিনী শিখার ন্যায় আরক্তবর্ণ ওষ্ঠের কান্তি লইয়া নির্গত নিশ্বাসদ্বারা পুণ্ডরীক, নিকটবর্ত্তী লতার পুষ্পের কেশরগুলিকে কম্পিত করিতেছিল; (ভ) বাম-হস্তের উপরে বাম গণ্ড স্থাপন করিয়াছিল, তাহাতে ঊর্দ্ধগামী নির্ম্মল নখের কিরণে ললাটদেশ নির্ম্মল করিয়াছিল, তাহাতে বোধ হইতেছিল যেন ললাটে অত্যন্ত-নির্ম্মল চন্দনের কতকগুলি টিপ দিয়া রাখা হইয়াছে,—এইরূপ ললাটদেশ সে ধারণ করিতে-ছিল; (ম) অনতিপূর্ব্বে পারিজাতকুসুমের মঞ্জরীরূপ কর্ণাভরণটি খুলিয়া দেওয়া হইয়াছিল, সুতরাং তখনও কর্ণে তাহার কিছু সৌরভ অবশিষ্ট ছিল বলিয়া তাহা ভোগ করিবার আনন্দের লোভে,ভ্রমরগণ উপস্থিত হইয়া অস্পষ্ট-মধুর ধ্বনির ছলে যেন কামদেবের সম্মোহন-

(১)···কুসুমকর্ণপূরতয়া। (২) অশেষ···।

নীলোৎপলমিব তমালপল্লবমিব শ্রবণদেশং দধানম্, (ম) উৎকণ্ঠা-জ্বর-রোমাঞ্চ-ব্যাজেন প্রতিরোম-কূপ-নিপতিতানাং মদনশরাণাং কুসুমশর-শল্য-(১) শকল-নিকর-মিবাঙ্গলগ্নং বিভ্রাণম্, (য) দক্ষিণকরেণ চ স্ফুরিত-কিরণনিকরাং (২) করতল স্পর্শ সুখ-কণ্টকিতামিব মুক্তাবলীমবিনয়পতাকামুরসি ধারয়ন্তম্, (র) মদনবশীকরণচূর্ণেনেব কুসুমরেণুনা তরুভিরাহন্যমানম্, (ল) আত্মরাগমিব

---

মধুকরকুলস্য নীলোৎপলতমালপল্লবতুল্যতয়া প্রতীয়মানত্বাদিতি ভাবঃ। শ্রবণদেশং কর্ণদেশং দধানম্। অত্র প্রথমা সাপহ্নবা ক্রিয়োৎপ্রেক্ষা অপরে চ দ্বে গুণোৎপ্রেক্ষে ইত্যেতাসাং পরস্পরনিরপেক্ষতয়া সংসৃষ্টিঃ।

(ম) উৎকণ্ঠেতি। উৎকণ্ঠয়া কামিনীৎসুক্যেন যো জ্বরঃ সন্তাপস্তেন যে রোমাঞ্চাস্তেষাং ব্যাজেন ছলেন, অঙ্গলগ্নম্, প্রতিরোমকূপনিপতিতানাং মদনশরাণাং মধ্যে যে কুসুমশরাস্তেষাং শল্যশকলনিকরম্ অগ্রখণ্ডসমূহং বিভ্রাণমিব, রোমাঞ্চানাং তাদাত্ম্যরূপতয়া প্রতীতেরিতি ভাবঃ। অত্রাপি সাপহ্নবা ক্রিয়োৎপ্রেক্ষালঙ্কারঃ, তথা পুষ্পবাণস্য পুষ্পাতিরিক্তবাণাসত্ত্বান্মদনশরাণামিত্যনেনৈবোপপত্তৌ পুনঃ কুসুমশরপদোপাদানাদধিকপদত্বদোষঃ, স তু কুসুমশরপদপরিত্যাগেনৈব পরিহরণীয়।

(য) দক্ষিণেতি। কিঞ্চ দক্ষিণকরেণ উরসি বক্ষসি স্ফুরিতঃ প্রসৃতঃ কিরণনিকরো যস্যাস্তাম্, অতএব করতলস্য স্পর্শেন যৎ সুখং তেন কণ্টকিতাং সঞ্জাতরোমাঞ্চামিব স্থিতাম্, কিরণনিকরস্য রোমাঞ্চত্বেন প্রতীতেরিতি ভাবঃ, তথা অবিনয়স্য কামাবেশরূপদুরাচারস্য পতাকাং বৈজয়ন্তীমিব স্থিতাং মুক্তাবলীং তদীয়ং হারং ধারয়ন্তম্। অত্র পদার্থহেতুকং কাব্যলিঙ্গং তথা প্রথমা বাচ্যা ক্রিয়োৎপ্রেক্ষা দ্বিতীয়া চ প্রতীয়মানা জাত্যুৎপ্রেক্ষা ইত্যেতাসামঙ্গাঙ্গিভাবেন সঙ্করঃ।

(র) মদনেতি। তরুভিঃ কর্তৃভিঃ, মদনস্য বশীকরণচূর্ণেনেব লোকবশ্যতাসাধকচূর্ণেনেব কুসুমরেণুনা করণেন আহন্যমানং দেহোপরি নিক্ষিপ্যমানমিব। অত্র প্রথমা বাচ্যা জাত্যুৎপ্রেক্ষা দ্বিতীয়া চ প্রতীয়মানা ক্রিয়োৎপ্রেক্ষা তয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ।

---

মন্ত্র জপ করিতেছিল; তাহাতে বোধ হইতেছিল যেন, সেই কর্ণদেশ, নীলোৎপল-সংযুক্ত অথবা তমালপল্লব-সংযুক্ত হইয়া রহিয়াছে; (ম) উৎকণ্ঠার সন্তাপে শরীরে যে সকল রোমাঞ্চ জন্মিয়াছিল, তাহার ছলে পুণ্ডরীক, প্রতিরোমকূপে নিপতিত মদন শরের অগ্রখণ্ড সমূহই যেন অঙ্গে ধারণ করিতেছিল; (য) বক্ষের উপরে দক্ষিণ-হস্তদ্বারা আপনার সেই মুক্তাময় হার ছড়াকে ধারণ করিয়াছিল, চতুর্দ্দিকে তাহার কিরণ ছড়াইয়া পড়িয়াছিল, তাহাতে বোধ হইতেছিল যেন, করতল-সংস্পর্শের সুখে সেই হার ছড়া রোমাঞ্চিত হইয়াছে এবং সেই হার ছড়াকে অন্যায় আচরণের পতাকার ন্যায় দেখা যাইতেছিল; (র) বৃক্ষসমূহ, কামদেবের বশীকরণচূর্ণের ন্যায় আপনাদের পুষ্পরেণুদ্বারা

---

(১) কুসুমশরবিশরশল্য…। (২) স্ফুরিতমঞ্জুকিরণাং।

সংক্রাময়দ্ভিরাসন্নৈরনিলচলিতৈঃ (১) অশোকপল্লবৈঃ স্পৃশ্যমানম্, (খ) সুরতাভিষেকসলিলৈরিবাভিনবপুষ্পস্তবকমধুশীকরৈর্বনশ্রিয়াভিষিচ্যমানম্, (গ) অলিনিবহ-নিপীয়মান-পরিমলৈরুপরি পতদ্ভিশ্চম্পককুড্মলৈস্তপ্তশরশল্যকৈরিব (২) সধূমৈঃ কুসুমশরেণ তাড্যমানম্, (ঘ) অতিবহল-বনামোদ-মত্ত-মধুকর-নিকর-ঝঙ্কার-নিস্বনৈঃ (৩) হুঙ্কারৈরিব দক্ষিণানিলেন নির্ভর্ৎস্যমানম্, (ঙ) মদ-কল-কোকিল-কুল-কোলাহলৈর্বসন্ত-জয়-শব্দ-কলকলৈরিব মধুমাসেনাকুলী-

(খ) আসন্নৈরিতি। আসন্নৈর্নিকটবর্ত্তিভিঃ, অনিলচলিতৈর্বায়ুকম্পিতৈঃ, আত্মরাগং স্বলৌহিত্যমিব রাগমনুরাগং সংক্রাময়দ্ভিঃ পুণ্ডরীকে সঞ্চারয়দ্ভিরিব স্থিতৈঃ অশোকপল্লবৈঃ স্পৃশ্যমানম্। অত্র লৌহিত্যানুরাগয়োর্ভেদেঽপি শ্লেষেণাভেদাধ্যবসায়াদতিশয়োক্তিঃ ক্রিয়োৎপ্রেক্ষা চানয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ।

(গ) সুরতেতি। বনশ্রিয়া কর্ত্র্যা, সুরতাভিষেকসলিলৈরিব রতিরাজ্যাভিষেকজলৈরিব, অভিনবানাং পুষ্পস্তবকানাং মধুশীকরৈর্মকরন্দবিন্দুভিঃ করণৈঃ, অভিষিচ্যমানমিব। অত্র প্রথমা বাচ্যা জাত্যুৎপ্রেক্ষা দ্বিতীয়া তু প্রতীয়মানা ক্রিয়োৎপ্রেক্ষা চানয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ।

(ঘ) অলীতি। কুসুমশরেণ মদনেন কর্ত্রা, সধূমৈর্ভ্রমরসমেতত্বাদ্ধূমান্বিতৈঃ কুড্মলোপরিস্থভ্রমরসাম্যপ্রতিপাদনার্থমেতদ্বিশেষণম্, তপ্তশরশল্যকৈরিব অগ্নিসংযুক্তস্বকীয়বাণাগ্রৈরিব স্থিতৈঃ, চম্পককুড্মলপীতত্বসাম্যপ্রতিপাদনার্থং তপ্তপদম্, অলিনিবহেন ভ্রমরসমূহেন নিপীয়মানাঃ সাদরমনুভূয়মানাঃ পরিমলাঃ সৌরভাণি যেষাং তৈঃ, পুণ্ডরীকস্যৈব উপরি পতদ্ভিঃ চম্পককুড্মলৈস্তাড্যমানমিব। অত্রাপি প্রথমা বাচ্যা জাত্যুৎপ্রেক্ষা দ্বিতীয়া চ প্রতীয়মানা ক্রিয়োৎপ্রেক্ষা অনয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ।

(ঙ) অতীতি। দক্ষিণানিলেন কর্ত্রা, হুঙ্কারৈরিব ভর্ৎসনসূচকস্বকীয়হুংশব্দৈরিব, অতিবহলেন অত্যন্তপ্রচুরেণ বনামোদেন বন্যসৌরভেণ মত্তস্য মধুকরনিকরস্য ভ্রমরগণস্য ঝঙ্কারনিস্বনৈঃ করণৈঃ নির্ভর্ৎস্যমানমিব। অত্র হুঙ্কারাণাং শব্দত্বেন গুণত্বাৎ প্রথমা বাচ্যা গুণোৎপ্রেক্ষা পরা চ প্রতীয়মানা ক্রিয়োৎপ্রেক্ষা অনয়োরপি পূর্ববৎ সঙ্করঃ।

(চ) মদেতি। মধুমাসেন চৈত্রেণ কর্ত্রা, বসন্তস্য কালস্য জয়শব্দকলকলৈরিব মদকলস্য মদমত্তস্য কোকিলকুলস্য কোলাহলৈঃ করণৈঃ, আকুলীক্রিয়মাণম্ অধীরীক্রিয়মাণম্। অত্র গুণোৎপ্রেক্ষালঙ্কারঃ।

যেন পুণ্ডরীককে আঘাত করিতেছিল; (খ) নিকটবর্ত্তী বায়ুকম্পিত অশোক-পল্লবগুলি যেন পুণ্ডরীকের দেহে আপনাদের রাগ সঞ্চারিত করিতে করিতেই তাহাকে স্পর্শ করিতেছিল; (গ) বনলক্ষ্মী, রতি-রাজ্যে অভিষেক করিবার জলের ন্যায় নূতন পুষ্পগুচ্ছের মধুবিন্দুদ্বারা পুণ্ডরীককে যেন অভিষিক্ত করিতেছিলেন; (ঘ) কামদেব, ধূমসংযুক্ত অগ্নিময় স্বকীয় বাণ-খণ্ডদ্বারা পুণ্ডরীককে যেন তাড়ন করিতেছিলেন; কারণ—তাহার দেহের উপরে চাঁপাফুলের কলিকা পড়িতেছিল; সেগুলির উপরে আবার সৌরভ-লোভে ভ্রমরগণ বসিয়াছিল; (ঙ) দক্ষিণ বায়ু স্বকীয় হুঙ্কারের ন্যায় প্রচুর বন্য-সৌরভ-মত্ত ভ্রমরগণের ঝঙ্কারশব্দে যেন পুণ্ডরী-

(১)…বলিতৈঃ। (২) তপ্তশল্যকৈরিব। [৩]…নিঃস্বনৈঃ।

क्रियमाणम्, (ङ) प्रभातचन्द्रमिव पाण्डुतया परिगृहीतम्, निदाघगङ्गाप्रवाहमिव तनिमानमागतम्, अन्तर्गतानलं चन्दनविटपमिव म्लायन्तम्, (च) अन्यमिव, अदृष्टपूर्वमिव, अपरिचितमिव, जन्मान्तरमिवोपगतम्, (१) रूपान्तरेणेव परिणतम्, (छ) आविष्टमिव महाभूताधिष्ठितमिव ग्रहगृहीतमिवोन्मत्तमिव छलितमिवान्धमिव बधिरमिव मूकमिव विलासमयमिव मदनमयमिव, (ज) परायत्तचित्तवृत्तिम्, परां कोटिमधिरूढं मन्मथावेशस्य, (२) अनभिज्ञेयपूर्वाकारं तमहमद्राक्षम्। (झ)

(ङ) प्रभातेति। परिगृहीतं शरीरे आश्रितम्। निदाघे ग्रीष्मकाले यो गङ्गायाः प्रवाहस्तमिव, कृशिमानं क्षयत्वम्। निदाघकाले सर्वासामेव नदीनां प्रवाहकार्श्यादत्र केवलगङ्गापदोपादानादविशेषे विशेषाल्पश्रावः, स तु गङ्गेत्यत्र नदीति पाठेन समाधेयः। अन्तर्गतः अन्तस्थो वह्निः कामानलो यस्य तम्, चन्दनविटपमिव चन्दनशाखामिव, म्लायन्तं म्लानतां गच्छन्तम्। अत्र प्रत्येकविशेषण एव पूर्णोपमालङ्कारः।

(च) अन्यमिति। अत्र प्रथमास्तिस्रो जात्युत्प्रेक्षा। जन्मान्तरमुपगतं प्राप्तमिव, तथा रूपान्तरेण परिणतमिव। अनयोस्तु प्रत्येकं क्रियोत्प्रेक्षा।

(छ) आविष्टमिति। आविष्टं डाकिन्यादिभिराश्रितमिव, महाभूतैर्वेतालैः अधिष्ठितमिव, ग्रहैः पूतनादिभिर्दुष्टग्रहैः गृहीतं धृतमिव। अत्र प्रत्येकविशेषण एव क्रियोत्प्रेक्षा। उन्मत्तम् उन्मादरोगविकारप्राप्तमिव। अत्र गुणोत्प्रेक्षा। छलितं केनचित् प्रतारितमिव। अत्र क्रियोत्प्रेक्षा। अन्धमित्यादिषु त्रिषु प्रत्येकं गुणोत्प्रेक्षा। विलासमयं विभ्रमप्रधानमिव, तथा मदनमयं कामप्रधानमिव। अनयोस्तु प्रत्येकं क्रियोत्प्रेक्षा।

(ज) परेति। परस्य जनस्य महाश्वेताया वश्यः आयत्ता अधीना चित्तवृत्तिर्यस्य तम्। मन्मथावेश

কে ভর্ৎসনা করিতেছিল; (ঘ) এবং চৈত্রমাস, বসন্তকালের জয়ধ্বনির কোলাহলের ন্যায় মদমত্ত কোকিলগণের কোলাহলে পুণ্ডরীককে আকুল করিয়া তুলিয়াছিল; (ঙ) আর তখন পুণ্ডরীককে প্রভাতকালীন চন্দ্ররেখার ন্যায় পাণ্ডুবর্ণ দেখা যাইতেছিল এবং সে গ্রীষ্মকালীয় গঙ্গাপ্রবাহের ন্যায় কৃশতা প্রাপ্ত হইয়াছিল, আর অন্তরে অগ্নি প্রবেশ করিলে চন্দনবৃক্ষের শাখার ন্যায় পুণ্ডরীক ক্রমেই ম্লান হইতেছিল; (চ) তাহাকে দেখিয়া অপরের ন্যায়, পূর্ব্বে যাহাকে কখনও দেখি নাই, সেইরূপ ব্যক্তির ন্যায় এবং অপরিচিতের ন্যায় বোধ হইতেছিল এবং সে যেন জন্মান্তর লাভ করিয়াছিল ও রূপান্তরে পরিণত হইয়াছিল; (ছ) এবং তাহাকে যেন ডাকিনীতে পাইয়াছিল, কোন বড় ভূতেই যেন ধরিয়াছিল এবং পূতনাপ্রভৃতি কোন দুষ্ট গ্রহেই যেন আশ্রয় করিয়াছিল আর তাহাকে তখন উন্মত্তের ন্যায়, প্রতারিতের ন্যায়, অন্ধের ন্যায়, বধিরের ন্যায়, মূকের ন্যায়, এবং বিলাসিতাময় ও কামময়ের ন্যায় বোধ হইতেছিল;

[१] उपगतम्। [२] मदनावेशस्य।

অপগতনিমেষেণ চক্ষুষা তদবস্থং চিরমুদ্বীক্ষ্য সমুপজাতবিষাদো বেপমানেন হৃদয়েনাচিন্তয়ম্—'এবং নামায়মতিদুর্বিষহবেগঃ (১) মকরকেতুঃ, যেনাস্য ক্ষণেনায়মীদৃশমবস্থান্তরম্ (২) অপ্রতীকারমুপনীতঃ (ঘ)। কথমেবমেকপদে ব্যর্থীভবেদেবংবিধো জ্ঞানরাশিঃ। অহো বত মহচ্চিত্রম্, তথা নামায়মাশৈশবাদ্ধীরপ্রকৃতিরস্খলিতবৃত্তিঃ (৩) মম চান্যেষাঞ্চ মুনিকুমারকাণাং স্পৃহণীয়চরিত আসীৎ (ঙ) অদ্য তু (৪) ইতর ইব পরিভূয় জ্ঞানম্, অবগণয্য তপঃপ্রভাবম্, উন্মূল্য গাম্ভীর্য্যম্, মন্মথেন জড়ীকৃতঃ। সর্ব্বথা দুর্লভং যৌবনমস্খলিতমিতি। (চ)

---

কামাবেশস্য পরাং কোটিং চরমাং দশাম্ অধিরূঢ়মারূঢ়ম্। অনভিজ্ঞেয় ইদন্তয়া অভিজ্ঞাতুমশক্যঃ পূর্ব্বাকারো যস্য তম্। তং পুণ্ডরীকম্।

(ঘ) অপেতি। অপগতনিমেষেণ নির্নিমেষেণ। সা তাদৃশী বর্ণিতরূপা অবস্থা যস্য তম্। বেপমানেন ভয়াৎ কম্পমানেন। এবং নাম ইত্যদ্ভুতঃ, অতিদুর্বিষহো বেগো যস্য সঃ, মকরকেতুর্মদনঃ। যেন কেতুনা, অনেন মকরকেতুনা, অস্যৈব অয়ং পুণ্ডরীকঃ। উপনীতঃ প্রাপিতঃ।

(ঙ) তদ্বর্ণয়ত্যেবমাহ কথমিতি। এবমনেন প্রকারেণ। একপদে সহসা। "তৎক্ষণৈক-পদে তুল্যে" ইতি হলায়ুধঃ। অহো বতেত্যুভয়মেব বিস্ময়বিষাদসূচকমব্যয়ম্। মহৎ বিষমাশ্চর্য্যম্। অস্খলিত-বৃত্তিঃ সৎপথাদপরিভ্রষ্টচরিত্রঃ।

(চ) অদ্যেতি। তু কিন্তু অদ্য মন্মথেন জ্ঞানং পরিভূয় বিজিত্য, তপঃপ্রভাবম্ অবগণয্য অবজ্ঞায়, তথা গাম্ভীর্য্যম্ অনন্যথাকরণীয়স্বভাবম্ উন্মূল্য উচ্ছিদ্য, ইতরঃ প্রাকৃতলোক ইব জড়ীকৃতো মূঢ়তাং প্রাপিতঃ। যেন হি, সর্ব্বথা অস্খলিতং সৎপথাদপরিভ্রষ্টং যৌবনং লোকে দুর্লভম্, অতএব মন্মথেনৈবং কর্তুং শক্যতে ইতি ভাবঃ। ইতিশব্দস্য অচিন্তয়মিত্যনেনান্বয়ঃ। অত্র সামান্যেন বিশেষসমর্থনরূপোঽর্থান্তরন্যাসোঽলঙ্কারঃ।

---

(গ) তাহার মন তখন পরের অধীন হইয়া গিয়াছিল, এবং সে, কামাবেশের চরমদশায় উঠিয়াছিল, আর তাহার সেই পূর্ব্বের আকৃতি চেনা যাইতেছিল না।

(ঘ) নির্নিমেষ-নয়নে বহুকাল যাবৎ সেই অবস্থায় তাহাকে দেখিয়া আমার বিষাদ জন্মিল এবং হৃদয় কাঁপিতে লাগিল; তখন আমি চিন্তা করিতে লাগিলাম—'এই কন্দর্প, এইরূপই অত্যন্ত-অসহ্য-বেগশালী হইবেন; যেহেতু, ইনি ক্ষণকালমধ্যেই পুণ্ডরীককে এইরূপ প্রতীকারবিহীন অবস্থান্তরে উপনীত করিয়াছেন। (ঙ) না হইলে এইরূপ জ্ঞানরাশি, সহসাই এই ভাবে ব্যর্থ হইয়া যাইবে কেন? হায়! বড়ই আশ্চর্য্য! বাল্যকাল হইতে সেইরূপ ধীর-প্রকৃতি ও অস্খলিতচরিত্র এই পুণ্ডরীকের স্বভাব, আমার ও অন্যান্য মুনিকুমারদিগের বাঞ্ছনীয় ছিল। (চ) কিন্তু আজ কন্দর্প, সে জ্ঞানকে পরাজিত করিয়া, তপস্যার প্রভাবকে অবজ্ঞা করিয়া এবং সে গাম্ভীর্য্য নষ্ট করিয়া ইতর লোকের ন্যায় ইঁহাকে মোহাচ্ছন্ন করিয়া

(১) অতিদুর্বিষহবেগঃ। (২) অবস্থান্তরমাকারম্। (৩)···স্খলিতবৃত্তিঃ। (৪) অদ্য তু।

উপসৃত্য চ তস্মিন্নেব শিলাতলৈকপার্শ্বে সমুপবিশ্য অংসদেশাবসক্তপাণিঃ (১) তমনুন্মীলিত-(২) লোচনমেব 'সখে! পুণ্ডরীক! কথয় কিমিদম্' ইত্যপৃচ্ছম্ (ছ)। অথ সুচিরসম্মীলনাল্লগ্নমিব (৩) কথমপি প্রযত্নেন অনবরতরোদন-বশাৎ সমুপজাতারুণ-(৪) ভাবমশ্রুজলপূর-(৫) প্লাবিতম্ উৎকুপিতমিব সবেদনমিব স্বচ্ছাংশুকান্তরিতরক্তকমলবনচ্ছায়ং চক্ষুরুন্মীল্য মন্থরমন্থরয়া (৬) দৃষ্ট্যা সুচিরং বিলোক্য মাম্ আয়ততরং নিশ্বস্য (৭) লজ্জাবিশীর্য্যমাণ-বিরলাক্ষরং "সখে! কপিঞ্জল! বিদিতবৃত্তান্তোঽপি কিং মাং পৃচ্ছসি"

---

(ছ) উপেতি। কিমাহম্। অংসদেশে পুণ্ডরীকস্য স্কন্ধদেশে অবসক্তঃ সংলগ্নঃ পাণির্যস্য স তাদৃশঃ সন্। অনুন্মীলিতলোচনমেব মুদ্রিতনয়নমেব তং পুণ্ডরীকম্।

(জ) অথেতি। সুচিরসম্মীলনাৎ বহুসময়ং যাবন্মুদ্রণাৎ লগ্নমিব পরস্পরসংসক্তাবরণদ্বয়মিব, কষ্টেনোন্মীলনাদিতি ভাবঃ। অত্র ক্রিয়োৎপ্রেক্ষালঙ্কারঃ। সমুপজাতঃ অরুণভাবো রক্তিমা যস্য তৎ, অশ্রুজলস্য পূরেণ ওঘেন প্লাবিতম্, উৎকুপিতমিব উৎকোপো নেত্ররোগবিশেষস্তদ্বিশিষ্টমিব, আরুণ্যাদিতি ভাবঃ। অত্র ক্রিয়োৎপ্রেক্ষা। সবেদনমিব সব্যথমিব, কষ্টেনোন্মীলনাদিতি ভাবঃ। অত্র গুণোৎপ্রেক্ষা। স্বচ্ছাংশুকেন নির্ম্মল-সূক্ষ্মবসনেন অন্তরিতম্ আবৃতং যৎ রক্তকমলবনং তস্য ছায়া ইব ছায়া কান্তির্যস্য তৎ তথোক্তং চক্ষুঃ। অত্র লুপ্তোপমালঙ্কারঃ। অশ্রুজলপূরপ্লাবনসাম্যপ্রতিপাদনার্থং স্বচ্ছাংশুকান্তরিতেতি বিশেষণম্। কিন্তু বনপদোপাদানেন উপমানগতপ্রমাণাধিক্যাৎ "স্তনাবদ্রিসমানৌ তে" ইতি-দর্পণোদাহৃতবদনুচিতার্থত্বদোষঃ, স তু বনপদপরিত্যাগেনৈব পরিহরণীয়ঃ। কথমপি প্রযত্নেন উন্মীল্য। মন্থরমন্থরয়া অত্যন্তালসয়া। আয়ততরং

ফেলিয়াছে। কারণ—সকল প্রকারেই সৎপথ হইতে পরিভ্রষ্ট না হইয়াছে, এইরূপ যৌবন, জগতে দুর্ল্লভ।

(ছ) তাহার পর, আমি পুণ্ডরীকের নিকটে যাইয়া সেই প্রস্তরখণ্ডেরই একপার্শ্বে উপবেশন করিয়া, তাহার স্কন্ধদেশে করতল সংস্থাপনপূর্ব্বক, মুদ্রিত-নয়ন অবস্থাতেই তাহাকে জিজ্ঞাসা করিলাম—সখে! পুণ্ডরীক! এই ঘটনা কি; বল।' (জ) তাহার পর, বহুকাল যাবৎ নয়নযুগল মুদ্রিত করিয়া রাখায় তাহার উপরের চর্ম্মাবরণ দুইটা যেন পরস্পর সংলগ্ন হইয়া গিয়াছিল, অবিশ্রান্ত রোদন করায় নয়নযুগল রক্তবর্ণ হইয়াছিল, এবং অশ্রুজলের প্রবাহে প্লাবিত করিয়াছিল; তাহাতে বোধ হইতেছিল যে—সেই চোক দুইটা যেন উঠিয়াছিল (উধাইয়াছিল—খড়াইয়াছিল), ব্যথা পাইতেছিল এবং নির্ম্মল সূক্ষ্মবস্ত্রে আবৃত রক্তবর্ণ পদ্মবনের ন্যায় সৌন্দর্য্য সম্পন্ন হইয়াছিল; পুণ্ডরীক, কোন প্রকারে যত্নপূর্ব্বক সেই নয়নযুগল উন্মীলিত করিয়া, অত্যন্ত মন্থর দৃষ্টিতে, বহুকাল যাবৎ আমাকে দর্শন করিয়া এবং অত্যন্ত দীর্ঘনিশ্বাস পরিত্যাগ করিয়া, লজ্জাবশতঃ অস্পষ্ট ও অল্পাক্ষরে 'সখে! কপিঞ্জল! তুমি

---

(১) অংসাবসক্তপাণিতলম্। (২) অল্পসমুন্মীলিত…। (৩) আলগ্নমিব।
(৪) উপজাতারুণভাবম্। (৫)…পটল…। (৬) কিঞ্চিদ্বিকাশিনা। (৭) নিঃশ্বস্য।

इति कृच्छ्रेण शनैः शनैः (१) अवदत् (ज)। अहन्तु तदाकर्ण्य तदवस्थयैवाप्रतीकारविकारोऽयम्, तथापि सुहृदा सुहृदसन्मार्गप्रवृत्तो यावच्छक्तितः सर्वात्मना निवारणीय इति मनसावधार्य्याब्रवम् (झ) 'सखे! पुण्डरीक! सुविदितमेतत् (२) मम, केवलमिदमेव पृच्छामि---यदेतदारब्धं भवता, किमिदं गुरुभिरुपदिष्टम्, उत धर्म्मशास्त्रेषु पठितम्, उत धर्म्मार्जनोपायोऽयम्, उतापरस्तपसां प्रकारः, उत स्वर्गगमनमार्गोऽयम्, उत व्रतरहस्यमिदम्, उत मोक्षप्राप्तियुक्तिरियम्, (३) आहो स्विदन्यो नियमप्रकारः (ञ)। कथमेतद्युक्तं भवतो मनसापि चिन्तयितुम्, किं पुनराख्यातुमीक्षितुं वा? (ट)। कथय

---

अतिदीर्घं यथा स्यात्तथा लज्जया विशीर्य्यमाणानि अस्पष्टमुच्चार्य्यमाणानि विरलानि अल्पानि च अक्षराणि यस्मिन् कर्म्मणि तद्यथा तथा। कृच्छ्रेण कष्टेन।

(झ) अहमिति। आदौ यद्यपीति पूरणीयम्। अयं पुण्डरीको यद्यपि तदवस्थयैव केवलेन ममोपदेशेनैव वाञ्छनीयां रमणीमन्तरेणेत्यर्थः, न विद्यते प्रतीकार उपशमो यस्य स तादृशो विकारो यस्य स तथोक्तः संवृत्तः। असन्मार्गं प्रवृत्तः कुपथचलितः सुहृत्। यावच्छक्तितो यथाशक्ति, सर्वात्मना सर्वप्रयत्नेन। "आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च।" इत्यमरः।

(ञ) सखे इति। व्रतरहस्यम् आरब्धव्रतविषये गोपनीयो नियमविशेषः। मोक्षप्राप्तौ युक्तिर्योगविशेषः। अन्यः अस्माभिरविदितः, नियमप्रकारो व्रताचरणभेदः। कपिञ्जलेन पूर्वमप्यवश्यमेवोपदिष्टम्।

(ट) कथमिति। एतत् स्त्रीसंसर्गरूपमाचरणं मनसापि चिन्तयितुं भवतः कथं युक्तमुचितम्, अपि तु

---

বৃত্তান্ত জানিয়াও কেন আমাকে জিজ্ঞাসা করিতেছ" এই কথাটি কষ্টক্রমে ধীরে ধীরে আমাকে বলিল। (ঝ) আমি কিন্তু সেই কথা শুনিয়া মনে মনে স্থির করিলাম যে, যদিও, কেবল আমার উপদেশেই পুণ্ডরীকের এই বিকারের উপশম হইবে না; তথাপি এক সুহৃৎ, অসৎপথে গমন করিতে প্রবৃত্ত হইলে, অপর সুহৃদের পক্ষে শক্তি-অনুসারে সর্ব্বপ্রকারে তাহাকে নিবৃত্তি করা উচিত, এইরূপ স্থির করিয়া বলিলাম—(ঞ) সখে! পুণ্ডরীক! এ বৃত্তান্ত আমার বেশ জানা আছে, তথাপি কেবল এই কথাই জিজ্ঞাসা করিতেছি যে, তুমি এই যে ঘটনা আরম্ভ করিয়াছ, গুরুরা কি ইহার উপদেশ দিয়াছেন? না ধর্ম্মশাস্ত্রে পড়িয়াছ? না এই একটা ধর্ম্ম-উপার্জ্জনের উপায়? কিংবা তপস্যারই আর একটা রকম? অথবা একটা স্বর্গে যাইবার পথ? কিংবা এইটা আরব্ধ ব্রতের কোন গোপনীয় নিয়ম? অথবা মুক্তিলাভের জন্য এই একপ্রকার যোগ? কিংবা অন্য একপ্রকার ব্রত? (ট) তোমার পক্ষে এ বিষয় মনে চিন্তা করাও কি উচিত? স্ত্রীলোকের সহিত আলাপ করার কিংবা স্ত্রীলোক দেখার

---

(१) क्वचित् द्विरुक्तिर्नास्ति। (२) सुविदितं सर्व्वमेतन्मम। (३) क्वचित् इयमिति नास्ति।

किम (१) अप्रबुद्ध इवानेन मन्मथहतकेनोपहासास्पदतां नीयमानमात्मानं नावबुध्यसे ? मूढो हि मदनेनायास्यते (ठ)। का वा सुखाशा साधुजननिन्दितेष्वेवंविधेषु प्राकृतजनबहुमतेषु विषयेषु भवतः ? (ड)। स खलु धर्मबुद्ध्या विषलतावनम् (२) सिञ्चति, कुवलयमालेति निस्त्रिंशलतामालिङ्गति, कृष्णागुरुधूमलेखेति कृष्णसर्पमवगूहते, (३) रत्नमिति (४) ज्वलन्तमङ्गारमभिस्पृशति, मृणाल-

कथमपि नेत्यर्थः। आख्यातुं कामतः स्वयं तद्विषयं वा आलपितुम्, ईक्षितुं कामतः स्वयं द्रष्टुम्, किं पुनर्वक्तव्यम् अपि तु किमपि नेत्यर्थः, सर्वत्र प्रसक्तत्वादिति भावः।

(ठ) कथमिति। अप्रबुद्ध इव अज्ञानीव। मन्मथहतकेन दुराचारेण मदनेन। अथ मदनपीडया बुद्धिलोपादहं नावबुध्ये इति यदुच्यते तत्राह मूढ इति। हि निश्चितम्। आयास्यते पीड्यते। न पुनर्बुद्धो ज्ञानीति भावः।

(ड) केति। प्राकृतजनैर्मूढलोकैः बहुमतेषु आदृतेषु, विषयेषु कामिन्यादिभोग्येषु, भवतः का वा सुखाशा अपि तु कापि नेत्यर्थः, तत्सुखस्य क्षणभङ्गुरत्वेन परमपुरुषार्थत्वाभावादिति भावः।

(ढ) स इति। यो मूढो हिताहितविवेकहीनो जनः, अनिष्टानुबन्धिषु पापदुःखाद्यनर्थजनकेषु विषयोपभोगेषु स्रक्चन्दनवनितादिसम्भोगेषु सुखबुद्धं सुखजनकताज्ञानम् आरोपयति करोति, स खलु जनः धर्मबुद्ध्या इदं पुण्यकार्यमिति मत्वा विषलतावनं सिञ्चति जलेनेति शेषः। कुवलयमाला नीलोत्पलस्रक् इति बुद्ध्या, निर्गतस्त्रिंशतः अङ्गुलीभ्यः निःसृताङ्गुलीभ्योऽधिकपरिमाण इति निस्त्रिंशस्तरवारिः स लतेव लम्बमानत्वात् तामालिङ्गति। कृष्णागुरोर्धूमलेखा इति बुद्ध्या कृष्णसर्पं दुरन्तविषधरविशेषम् अवगूहते आलिङ्गति। रत्नमिति बुद्ध्या ज्वलन्तमङ्गारं वह्नियुक्तं काष्ठम् अभिस्पृशति आदत्ते। तथा मृणालमिति बुद्ध्या दुष्टवारणस्य अभिचितकर्कशिनो दन्तमुषलमुन्मूलयितुं प्रवर्त्तते। वस्तुतोऽनिष्टजनकेषु विषयोपभोगेषु सुखजनकतया ज्ञानारोपणं धर्मभ्रमेण विषलतावनसेचनमिव परिणामे भयङ्करदुःखजनकमित्यं सर्वत्र भावः। अत्र उक्तप्रकारं बिम्बप्रतिबिम्बभावारोपणं विना वाक्यार्थसम्बन्धासम्भवात् मालारूपा निदर्शनालङ्कारः। तथा गच्छछन्दान्वित-

বিষয়ে আর বলিবার কি আছে। (ঠ) বল দেখি, এই দুরাচার কন্দর্প, তোমার মনকে লোকের উপহাসাস্পদ করিয়া তুলিতেছে, তুমি অজ্ঞানীর ন্যায় তাহা বুঝিতেছ না কেন? কন্দর্প, মূঢ় ব্যক্তিকেই কষ্ট দিয়া থাকে। (ড) সাধুলোকেরা এই জাতীয় বিষয় সকলকে নিন্দা করিয়া থাকেন, আর মূঢ় লোকেরাই আদর করিয়া থাকে; সুতরাং তোমার ইহাতে সুখের আশাই বা কি আছে? (ঢ) যে মূঢ় ব্যক্তি পরিণামে দুঃখজনক বিষয়-সম্ভোগকে সুখজনক বলিয়া জ্ঞান করে সে নিশ্চয়ই ধর্মভ্রমে বিষলতার বনকে সিক্ত করে, নীলোৎপলের মালা মনে করিয়া তরবারি আলিঙ্গন করে, কৃষ্ণাগুরুর ধূমের রেখা মনে করিয়া ভয়ঙ্কর

(१) क्वचित् 'कथय किं' मित्यपि न दृश्यते।

(२) विषलताम्। (३) अवगूहति। [४] अङ्गारमिति।

মিতি দুষ্টবারণদন্তমুষলম্ (১) উন্মূলয়তি, মূঢো বিষয়োপভোগেষ্বনিষ্টানুবন্ধিষু য়: (২) সুখবুদ্ধিমারোপয়তি (ঢ)। অধিগতবিষয়তত্ত্বোঽপি কস্মাৎ খদ্যোত ইব জ্যোতির্নির্বীর্য্যমিদম্ (৩) জ্ঞানমুদ্বহসি, যতো ন নিবারয়সি প্রবল-রজঃপ্রসরকলুষিতানি স্রোতাংসীবোন্মার্গপ্রস্থিতানীন্দ্রিয়াণি, ন নিয়মযসি বা ক্ষুভিতং মনঃ (ত)। কোঽয়মনঙ্গো নাম, ধৈর্য্যমবলম্ব্য নির্ভর্ৎস্যতাময়ং দুরাচারঃ' ইত্যেবং বদত এব মে বচনমাক্ষিপ্য প্রতিপক্ষ্মান্তরালপ্রবৃত্তবাষ্পবেণিকং প্রমৃজ্য চক্ষুঃ করতলেন পাণৌ (৪) মামবলম্ব্যাবোচৎ। (থ)

---

বাক্যস্য পরপাঠাৎ "অলঙ্কারো ভয়মেব মে যদরয়ঃ" ইত্যাদিদর্পণোদাহৃতবদ্বাচ্যমতবিধেয়াবিমর্শদোষঃ, স তু যচ্ছব্দান্বিতবাক্যস্য প্রাক্ পাঠাৎ সমাধেয়ঃ। এতদনুরূপভাবশ্লোকো যথা সাহিত্যদর্পণে—

"স্বপিতি মুকং হৃদয় ভ্রমরবদনে নগমর্পয়সি মৃগাদনবদনে।
বিতরসি তুরগং মহিষাবধাবী নিদধাসি নো ভোগাবলীম্॥"

(ঢ) অধীতি। অধিগতং জ্ঞাতং বিষয়তত্ত্বং ভোগ্যপদার্থস্বভাবো যেন স তাদৃশঃ সন্নপি ত্বম্ কস্মাদ্ধেতোঃ, খদ্যোতো জ্যোতিঃসদৃশং তেজ ইব নির্বীর্য্যং সামর্থ্যহীনং মনোবিকারদূরীকরণাসমর্থং ইদং জ্ঞানম্ উদ্বহসি। অত্র শ্রৌত্যুপমালঙ্কারঃ, তথা খদ্যোত উদ্বহতি ত্বন্তু উদ্বহসীতি পুরুষভেদাদ্ভগ্নপ্রক্রমতাদোষঃ "ত্বমিব রাজসি!" ইতি দর্পণোদাহৃতবৎ, স চ খদ্যোতো যথোদ্বহতি জ্যোতিস্তথোদ্বহসীতি পাঠে ন সমাধেয়ঃ।

(ত) নন্বু কথং নির্বীর্য্যমিদং জ্ঞানমিত্যাহ যত ইতি। প্রবলস্য রজসো রজোগুণজন্যস্য কামস্য প্রসরেণ বেগেন কলুষিতানি দূষিতানি, অন্যত্র তু প্রবলস্য রজসো ধূলেঃ প্রসরেণ বিস্তারেণ কলুষিতানি আবিলীকৃতানি। ন নিবারয়সি নিবারয়িতুং শক্নোষি। ক্ষুভিতং কামোদ্বেলিতং মনঃ ন বা নিয়মযসি নিয়মযিতুং নিরোদ্ধুং শক্নোষি। অতএব তব নির্বীর্য্যমিদং জ্ঞানমিতি ভাবঃ। অত্র পূর্ববাক্যে পূর্ণোপমালঙ্কারঃ। কামস্য রজোগুণজন্যত্বমুক্তং ভগবদ্গীতায়াম্—

"কাম এষ ক্রোধ এষ রজোগুণসমুদ্ভবঃ।"

(থ) কোঽয়মিতি। কোঽয়মনঙ্গো নাম অতিতুচ্ছ ইতি ভাবঃ। আক্ষিপ্য আক্রম্য স্ববাক্যেন প্রতিবধ্য-

---

সর্পকে জড়াইয়া ধরে, রত্ন জ্ঞান করিয়া জ্বলন্ত কাষ্ঠ গ্রহণ করে, মৃণাল মনে করিয়া দুষ্ট হস্তীর দন্তমুষল উৎপাটন করিতে প্রবৃত্ত হয়। (ণ) তুমি সমস্ত বিষয়ের তত্ত্বই বুঝিয়াছ, তথাপি জোনাকী পোকা যেমন নিজের দুর্ব্বল তেজ বহন করে, তুমিও সেইরূপ দুর্ব্বল এই জ্ঞান বহন করিতেছ; (ত) যেহেতু—প্রবল রজোগুণ জনিত কামবেগে দূষিত এবং স্রোতের ন্যায় উৎপথগামী নিজের ইন্দ্রিয়গুলিকে দমন করিতে পারিতেছ না এবং ক্ষুভিত চিত্তকেও নিরুদ্ধ করিতে পারিতেছ না। (থ) বল দেখি, এই কন্দর্পটা কে!! সুতরাং ধৈর্য্য অবলম্বন করিয়া এই দুরাচারকে ভর্ৎসনা কর,' আমি এইরূপ বলিতেছিলাম, এই অবস্থাতেই পুণ্ডরীক আমার বাক্যে বাধা দিয়া, নয়নের প্রত্যেক লোমের অন্তরাল হইতে অশ্রুধারা

---

(১)...মুষলম্। (২) পরিণতিবিরসেষু। (৩) নির্বীর্য্যমিদম্। (৪) ক্বচিৎ পাণাবিতি নাস্তি।

"सखे ! किं बहुनोक्तेन, (१) सर्वथा सुस्थोऽसि (२)। आशीविषविषवेग-विषमाणामेतेषां कुसुमचापसायकानां पतितोऽपि न गोचरे, सुखमुपदिश्यते परस्य (ट)। यस्य चेन्द्रियाणि सन्ति मनो वा वर्त्तते, (३) यः पश्यति वा शृणोति वा श्रुतमवधारयति वा, यो वा शुभमिदं न शुभमिदमिति विवेक्तुमलम्, स खलूपदेशमर्हति। मम तु सर्वमेवेदमतिदूरापेतम् (ध)। अवष्टब्धो ग्राह

---

त्यर्थः। प्रतिपक्ष्मान्तराले मध्ये कनीनमध्ये प्रहता प्रस्नुता वाष्पवेणिका अश्रुप्रवाहो यस्य तादृशं चक्षुः प्रमृज्य, करतलेन पाणौ मामवलम्ब्य मम पाणिं धृत्वेत्यर्थः।

(ट) सखे इति। सर्वथा सुस्थोऽसि सर्वप्रकारोपद्रवरहितोऽसि, सुतरां धन्यस्त्वमिति भावः। तथा हि, आश्यां तालुगतदंष्ट्रायां विषमस्येति आशीविषो विजातीयो भयङ्करः सर्पः, तथा च विषविद्यायाम् "आशी तालुगता दंष्ट्रा तया दष्टो न जीवति।" तस्य विषवेगवत् विषमाणां दुःसहानां कुसुमचापस्य मदनस्य सायकानां गोचरे विषये न पतितोऽसि, अतएव त्वया परस्य जनस्य सम्बन्धे सुखमनायासं यथा स्यात्तथा उपदिश्यते उपदेष्टुं शक्यते, अन्यथा ममेवावस्था स्यादिति भावः। अत्र वाक्यार्थहेतुकं काव्यलिङ्गं वृत्त्यनुप्रासश्चानयोः संसृष्टिः।

(ध) इह खलु चतुर्विधावस्थाः सम्भवन्ति लोकाः केचित् समर्थसर्वेन्द्रियशालिनः, केचित् संसारभाववैमुख्येन रोगादिना वा किञ्चिद्विकलेन्द्रियाः, केचित् सन्देहाकुलाः, केचिच्च संसारभावातिवैमुख्यात् रोगादेर्वा अत्यन्ताकर्मण्येन्द्रियाः, तत्राद्ये त्रये उपदेशयोग्यत्वम् अन्त्ये तु सर्वथैवोपदेशायोग्यत्वमिति विभज्य प्रतिपादयितुमाह यस्येति। इन्द्रियाणि स्वस्वविषयग्रहणसमर्थानि मनो वा सुस्थमिति च भावः। एतेन समर्थसर्वेन्द्रियशालित्वमुक्तम्। यो वा जनः पश्यति, उद्वेगेन पित्तदोषादिना वा चक्षुषि किञ्चिद्विकले सत्यपि यथाकथञ्चिद्द्रष्टुं शक्नोति, शृणोति वा उद्वेगेन मलादिना वा कर्णे किञ्चिद्विकले सत्यपि कथञ्चित् श्रोतुमर्हति, श्रुतमवधारयति वा उद्वेगेन व्यापारान्तरेण वा मनसि किञ्चिद्विकले सत्यपि आकर्णितं विषयम् अवधारयितुं शक्नोति। एतेन किञ्चिद्विकलेन्द्रियशालित्वमुक्तम्। यो वा जनः, इदं कार्य्यं शुभम् अथवा इदं न शुभम् इति विवेक्तुं विवेचनं कर्त्तुम् अलं समर्थः, सन्देहात् परं कस्यचिदुपदेशी सन्नीति भावः। एतेन सन्देहाकुलत्वमुक्तम्। स खलु उक्तरूपस्त्रिविध एव जनः, उपदेशमर्हति तत्फलसम्भवादिति भावः। तु किन्तु मम इदम् इन्द्रिय-

---

বাহিত হইতেছিল; তাই সেই নয়নযুগল মার্জ্জনা করিয়া, হস্তদ্বারা আমার হস্তধারণ করিয়া কহিল।

(ধ) "সখে! অধিক বলিবার প্রয়োজন কি। তুমি সকল রকমেই সুস্থ আছ। বিশেষতঃ, ভয়ঙ্কর সর্পের বিষবেগের ন্যায় অসহ্য এই সকল কাম-বাণের লক্ষ্যে পড় নাই; সেই জন্যই অনায়াসে অন্যকে উপদেশ দিতে পারিতেছ। যাহার ইন্দ্রিয় রহিয়াছে, মনও আছে এবং যে দেখিতে পায় ও শুনিতে পায় অথবা শুনিয়া বুঝিতে পারে, কিংবা যে,

---

(१) बहुनोक्तेन। (२) स्वस्थोऽसि। (३) क्वचित् 'मनो वा' इत्यधिकः पाठः, क्वचित् विद्यते इति।

धैर्य्यं प्रतिसंख्यानमित्यस्तमितैषा कथा, कथमप्यमी यत्नविधृतास्तिष्ठन्त्यसवः, दूरातीतः खलूपदेशकालः, समतिक्रान्तो धैर्य्यावसरः, गता प्रतिसंख्यानवेला, अतीतो ज्ञानावष्टम्भसमयः (न)। केन वाऽन्येनास्मिन् समये भवन्तमपहायोपदेष्टव्यम्, उन्मार्गप्रवृत्तिनिवारणं वा करणीयम्, कस्यान्यस्य वचसि मया स्थातव्यम्, को वाऽपरस्त्वत्समो मे जगति बन्धुः (प)। किं करोमि यन्न शक्नोमि निवारयितुमात्मानम्, इयमनेनैव क्षणेन भवता दृष्टा दुष्टावस्था, (१) तद्गत इदानीमुपदेशकालः (फ)। यावत् प्राणिमि तावदस्य कल्पान्तोदित-द्वादश-दिनकर-किरणातप-तीव्रस्य मदनसन्तापस्य प्रतिक्रियां क्रियमाणामि-

साध्वसाधकं विवेचनात् सर्वमेव, अतिदूरादेव अतिदूरं गतम्, कालविशेषादत्यन्ताकर्षणेन्द्रियतया तत्तत्पाठ्-फलाभावादिति भावः । एतेन तालस्थत्वं विधत्तमुक्तम् ।

(न) अतीत इति । अवष्टम्भः अवलम्बनम् । "अवाडीजे त्वनिकटाश्रये च" इति अमरः । प्रतिसंख्यानं सदसद्विवेचनम् । कथमपि यत्नविधृता अपि स्वयमेव स्थिताः, अमवः प्राणास्तिष्ठन्ति मम देहे इत्यर्थः । एतेनेदानीं प्राणगमनेऽपि न अनौचित्यमिति सूचितम् । धैर्य्यस्य अवसरः अवलम्बनकालः । प्रतिसंख्यानवेला सदसद्विवेचनसमयः । ज्ञानस्य अवष्टम्भसमयः अवलम्बनकालः ।

(प) केनेति । वचसि स्थातव्यं वाक्यानुसारेण प्रवर्त्तितव्यम् । तत्र हेतुमाह क इत्यादि ।

(फ) किमिति । दुष्टावस्था दुर्द्दशा कालातिशयमादर्श तव प्रत्यक्षमवस्थानम् ।

(ब) यावदिति । प्राणिमि जीवामि । कल्पान्ते प्रलयकाले उदिता ये द्वादश दिनकराः सूर्य्यास्तेषां किरणातपवत् मयूखसन्तापवत् तीव्रस्य । प्रतिक्रियां सुशमनं क्रियमाणां त्वमेव विधीयमानाम् । अन्यथा न प्राणिमीति भावः । अत्र लुप्तोपमालङ्कारः ।

'এই বিষয়টি শুভ না অশুভ' ইহা উপদেশ পাইয়া বিবেচনা করিতে পারে, সেই ব্যক্তিই উপদেশের যোগ্য ; কিন্তু আমার এই সময়টই, অতিদূরে চলিয়া গিয়াছে। (ন) অতএব সৎপথ অবলম্বন করা, জ্ঞান, ধৈর্য্য ও সদসৎ বিবেচনা করা—এই সমস্তের প্রস্তাবই আমার অন্তর্হিত হইয়াছে ; প্রাণ রাখিবার জন্য যত্ন করিতেছি না, তথাপি কোন প্রকারে এই ভাবেই যে প্রাণ রহিয়া যাইতেছে ; উপদেশের সময়, অতিপূর্ব্বেই চলিয়া গিয়াছে ; ধৈর্য্য-অবলম্বন করিবার সময়ও অতিক্রম করিয়াছে ; সদসৎ বিবেচনা করিবার কালও গিয়াছে এবং জ্ঞান-অবলম্বন করিবার সময়ও অতীত হইয়াছে। (প) এ সময়ে তুমি ভিন্ন অন্য কোন্ ব্যক্তি আমাকে উপদেশ দিবে ? কেই বা অসৎপথ-প্রবৃত্তি হইতে নিবারণ করিবে ? আমিই বা অন্য কাহার বাক্যের অধীন থাকিব ? এই জগতে তোমার তুল্য অন্য বন্ধু আমার কে আছে ? (ফ) কি করিব, কিছুতেই যে মনকে নিবারণ করিতে পারিতেছি না ; এখনই ত তুমি আমার এই দুরবস্থা দেখিয়াছ ; সুতরাং এখন উপদেশের সময় গিয়াছে। (ব) সুতরাং

(१) दुष्टावस्था, अवस्था दुष्टा ।

ক্রামি (ব)। পচ্যন্ত ইব মেঽঙ্গানি, উৎক্কাথ্যত ইব হৃদয়ম্, প্লুষ্যত ইব দৃষ্টিঃ, জ্বলতীব শরীরম্ (ভ)। অত্র যৎ প্রাপ্তকালং তৎ করোতু ভবান্" ইত্যভিধায় তূষ্ণীমভবৎ। (ম)

এবমুক্তোঽপি (১) অহমেনং প্রাবোধয়ং পুনঃ পুনঃ। যদা শাস্ত্রোপদেশবিশদৈঃ সনিদর্শনৈঃ সেতিহাসৈশ্চ বচোভিঃ সানুনয়ং সোপগ্রহঞ্চাভিধীয়মানোঽপি নাকরোৎ কর্ণে, তদাহমচিন্তয়ম্---অতিভূমিময়ং গতো ন শক্যতে নিবর্ত্তয়িতুমিতি (২) ইদানীং নিরর্থকাঃ খলূপদেশাঃ, তৎপ্রাণপরিরক্ষণেঽপি তাবদস্য যত্নমাচরামি'---ইতি কৃতমতিরুত্থায় গত্বা তস্মাৎ সরসঃ সরসা মৃণালিকাঃ সমুদ্ধৃত্য, কমলিনী-পলাশানি জল-লব-লাঞ্ছিতান্যাদায়, (৩) গর্ভ-ধূলি-কষায়-পরিমল-মনোহরাণি

(ভ) তীব্রতাপসম্পর্কে হি বস্তূনাং পাকক্কাথদাহজ্বলনাখ্যাশ্চতস্রোঽবস্থাঃ সম্ভবন্তি, মদনতীব্রতাপেন মমাঙ্গানাং সর্ব্বা এব প্রদর্শয়িতুমাহ পচ্যন্ত ইত্যাদি। প্লুষ্যতে দহ্যতে। সর্ব্বত্র মদনতাপেনেতি যোজ্যম্।

(ম) অত্রেতি। প্রাপ্ত উপস্থিতঃ কালো যস্য তৎ প্রাপ্তকালম্ এতৎকালোচিতম্।

(য) এবমিতি। শাস্ত্রোপদেশৈর্বিশদৈর্নির্ম্মলৈঃ। সনিদর্শনৈর্দৃষ্টান্তসহিতৈঃ। সোপগ্রহং সানুকূল্যঞ্চ। অতিভূমিং কামস্য চরমাং দশাং গতঃ, অতএব উপদেশমাত্রেণ নিবর্ত্তয়িতুং ন শক্যতে, ইতি হেতোঃ। কৃতমতিঃ কৃতনিশ্চয়ঃ। তস্মাৎ সরসঃ অচ্ছোদসরোবরাৎ। সরসা নূতনত্বাদাভ্যন্তরিকদ্রবসহিতাঃ। জলস্য লবৈঃ কণৈঃ লাঞ্ছিতানি চিহ্নিতানি ব্যাপ্তানি, অতএব বিশেষশীতলানীতি ভাবঃ, কমলিনীপলাশানি পদ্মিনীপত্রাণি আদায়। গর্ভে অভ্যন্তরে যা ধূলয়ঃ পরাগাস্তাসাং কষায়পরিমলৈঃ সুরভিগন্ধৈর্মনোহরাণি, কুমুদানি শ্বেতোৎ-

যতকাল বাঁচিয়া আছি, তাহার মধ্যে, প্রলয়কালীন উদিত দ্বাদশ সূর্য্যের কিরণ-সন্তাপের ন্যায় অত্যন্ত তীব্র এই মদন-সন্তাপের প্রতীকার কর, আমি তাহাই ইচ্ছা করি। (ভ) মদন-সন্তাপে, আমার অঙ্গগুলি যেন পাক পাইতেছে, হৃদয় হইতে যেন ক্কাথ বাহির হইতেছে, চোখ যেন দগ্ধ হইতেছে এবং শরীর যেন জ্বলিতেছে। (ম) অতএব এখন যাহা উচিত, তুমি তাহাই কর" এই কথা বলিয়া পুণ্ডরীক নীরব হইল।

(য) কিন্তু—এইরূপ বলিলেও আমি উহাকে বার বার প্রবোধ দিলাম। যখন শাস্ত্রীয় উপদেশে নির্ম্মল, দৃষ্টান্ত-সমন্বিত ও ইতিহাসসংযুক্ত বাক্যদ্বারা অনুনয় ও আনুকূল্যের সহিত বলিলেও, পুণ্ডরীক তাহা কাণেই তুলিল না; তখন আমি চিন্তা করিলাম—'এ, কামের চরম দশায় উপস্থিত হইয়াছে, সুতরাং কেবল উপদেশে ইহাকে নিবৃত্ত করান যাইবে না; অতএব এখন উপদেশ দেওয়া নিরর্থক' এইরূপ স্থির করিয়া উঠিয়া যাইয়া সেই সরোবর হইতে সরস মৃণাল তুলিয়া জল-কণা-ব্যাপ্ত পদ্মপত্র লইয়া এবং অভ্যন্তরস্থ রেণুর তৃপ্তিকর

(১) উক্তোঽপি। (২) ক্বচিৎ ইতি শব্দো নাস্তি। (৩) আদায়।

চ কুমুদ-কুবলয়-কমলানি গৃহীত্বাগত্য তস্মিন্নেব লতামণ্ডপ-শিলাতলে শয়ন-মস্যাকল্পয়ম্ (য)। তত্র চ সুখনিষণ্ণস্য প্রত্যাসন্নবর্ত্তিনাং চন্দনবিটপিনাম্ (১) মৃদূনি কিসলয়ানি নিষ্পীড্য তেন স্বভাবসুরভিণা তুষারশিশিরেণ রসেন ললাটিকামকল্পয়ম্, আচরণাদঙ্গচর্চ্চাঞ্চারচয়ম্ (র)। অভ্যর্ণ-পাদপ-স্ফুটিত-বল্কল-বিবর-শীর্ণেন চ করসম্পূর্ণিতেন (২) কর্পূররেণুনা স্বেদপ্রতীকারম্ (৩) অকরবম্ (ল)। উরোনিহিতচন্দনদ্রবার্দ্রবল্কলস্য স্বচ্ছসলিল-শীকরস্রাবিণা কদলীদলেন ব্যজনক্রিয়ামন্বতিষ্ঠম্ (ব)। এবঞ্চ মুহুর্মুহু-

---

পত্রাণি কুবলয়ানি নীলোৎপলানি কমলানি পদ্মানি চ তানি। অস্য পুণ্ডরীকস্য নিমিত্তম্। শয়নং শয্যাম্।

(র) তত্রেতি। কিঞ্চ, প্রত্যাসন্নবর্ত্তিনাং সমীপস্থানাং চন্দনবিটপিনাং চন্দনতরূণাম্। স্বভাবেনৈব সুরভিণা সৌরভবতা, তুষারবৎ হিমবৎ শিশিরেণ শীতলেন রসেন নির্য্যাসেন করণেন, তত্র প্রস্তরশয্যায়াং সুখনিষণ্ণস্য সুখভাবেন স্থিতস্য পুণ্ডরীকস্য ললাটিকাং ললাটে তিলকবিশেষম্। আচরণাৎ পাদাদারভ্য অঙ্গচর্চ্চাং গাত্রলেপনঞ্চ অরচয়ম্ অকরবম্, শৈত্যার্থমিতি ভাবঃ। অত্র তুষারশিশিরশব্দয়োঃ পর্য্যায়তয়া আপাততঃ পুনরুক্ততাপ্রতীতিঃ পরন্তু তুষারবৎ শিশির ইত্যর্থপর্য্যবসানাৎ পুনরুক্তবদাভাসোঽলঙ্কারঃ।

(ল) অভ্যর্ণেতি। অভ্যর্ণস্য নিকটবর্ত্তিনঃ পাদপস্য কর্পূরবৃক্ষস্য স্ফুটিতানি স্বয়ং বিদীর্ণানি যানি বল্কলানি তেষাং বিবরেভ্যঃ শীর্ণেন নির্গতেন করাভ্যাং পাণিভ্যাং সম্পূর্ণিতেন নিষ্পিষ্টেন কর্পূররেণুনা, স্বেদ-প্রতীকারং ঘর্ম্মশোষণঞ্চ অকরবম্।

(ব) উর ইতি। উরসি নিহিতেন বক্ষসি দত্তেন চন্দনদ্রবেণ আর্দ্রং বল্কলম্ উত্তরীয়বল্কলং যস্য তস্য তাদৃশস্য পুণ্ডরীকস্যাঙ্গেষ্বিত্যর্থঃ, স্বচ্ছসলিলশীকরস্রাবিণা নির্ম্মলজলবিন্দুবর্ষিণা কদলীদলেন, ব্যজনক্রিয়াং বায়ুসঞ্চালনম্।

---

সৌরভে মনোহর কতকগুলি শ্বেতোৎপল, নীলোৎপল ও পদ্ম নিয়া ফিরিয়া আসিয়া, লতা-মণ্ডপ-স্থিত সেই প্রস্তর-খণ্ডের উপরেই পুণ্ডরীকের জন্য শয্যা নির্ম্মাণ করিলাম। (র) পুণ্ডরীক তাহার উপরে সুস্থ হইয়া অবস্থান করিতে লাগিল; তখন আমি, নিকটবর্ত্তী চন্দনবৃক্ষের কতকগুলি কোমল পল্লব নিষ্পীড়িত করিয়া, স্বভাবতই সুগন্ধি ও হিমের ন্যায় শীতল সেই রসে, পুণ্ডরীকের ললাটে একটি টিপ করিয়া দিলাম এবং চরণ হইতে সমস্ত অঙ্গে সেই রস লেপন করিয়া দিলাম। (ল) এবং নিকটবর্ত্তী কর্পূর-বৃক্ষের বিদীর্ণ বল্কলগুলির ছিদ্র হইতে নির্গত কর্পূরের রেণুগুলিকে হস্তে নিষ্পেষিত করিয়া তাহা দ্বারা পুণ্ডরীকের ঘর্ম্ম শোষণ করিতে লাগিলাম। (ব) পুণ্ডরীকের বুকের উপরে চন্দনের রস লেপিয়া দিয়াছিলাম, তাহাতে উহার উত্তরীয়-বল্কলখানা আর্দ্র হইয়া গিয়াছিল, সেই অবস্থায় আবার নির্ম্মল

---

(১) চন্দনবিটপাদীনাম্। (২) করসম্পুটচূর্ণিতেন। (৩) স্বেদপ্রতিক্রিয়াম্।

रन्यदन्यन्नलिनीदलशयनमुपकल्पयतः, मुहुर्मुहुश्चन्दनचर्च्चामारचयतः, मुहुर्मुहुश्च स्वेदप्रतिक्रियां कुर्वतः, कदलीदलेन चानवरतं वीजयतः समुदभून्मे मनसि चिन्ता---(श) 'नास्ति खल्वसाध्यं नाम भगवतो मनोभुवः। क्वायं हरिण इव वनवासनिरतः स्वभावमुग्धो जनः, क्व च विविध-विलास-रस-राशिर्गन्धर्वराजपुत्री महाश्वेता (ष)। सर्वथा नहि किञ्चिदस्य दुर्घटं दुष्करमनायत्तमकर्त्तव्यं वा जगति। दुरुपपादेष्वप्यर्थेषु (१) अयमवज्ञया विचरति। न चायं केनापि (२) प्रतिकूलयितुं शक्यते (स)। का वा गणना सचेतनेषु, अपगतचेतनान्यपि सङ्घटयितुमलं; (३) यद्यस्मै रोचते. कुमुदिन्यपि दिनकरानुरागिणी भवति,

(श) एवमिति। किञ्च, एवमनेन प्रकारेण अन्यदन्यत्, शरीरतापेन पूर्वपूर्वस्य म्लानत्वादिति भावः। नलिनीदलशयनं पद्मिनीपत्रशय्याम्। आरचयतः कुर्वतः, शरीरतापेन पूर्वपूर्वस्याः शुष्कत्वादिति भावः। स्वेदप्रतिक्रियां घर्म्मापनयम्।

(ष) नास्तीति। मनोभुवो मदनस्य। स्वभावेनैव मुग्धः सरलचेताः, अयं जनः पुण्डरीकः। विविधानां विलासरसानां विभ्रमभावानां राशिरिव सा तादृशी महाश्वेता च क्व। अत्यन्तविभिन्नप्रकृतिकयोरनयोरपि परस्परभावविधानान्मनोभुवः किमप्यसाध्यं नास्तीति भावः। अत्र विरूपयोः सङ्घटनया विषमालङ्कारः श्लेषोपमया सङ्कीर्य्यते।

(स) सर्वथेति। अस्य मनोभुवः। अनायत्तम् अनधीनम्। अयं मनोभूः, दुरुपपादेष्वपि अन्यैर्दुष्करेष्वपि, अर्थेषु विषयेषु अवज्ञया अतीवसुकरत्वबोधादवहेलया विचरति प्रवर्त्तते। प्रतिकूलयितुं प्रतिरोद्धुम्।

(ह) केति। सचेतनेषु मनुष्यादिषु। सङ्घटयितुं संयोजयितुं अलं समर्थः, अयं मनोभूरिति शेषः। यदि चेत् अस्मै मनोभुवे रोचते सङ्घटयितुं रुचिर्भवति, तदा कुमुदिन्यपि दिनकरकरानुरागिणी सूर्य्यकरप्रण

জলবিন্দুবর্ষী কদলীপত্রদ্বারা ব্যজন করিতেছিলাম। (শ) এই ভাবে, বারংবার নূতন নূতন পদ্মপত্রের শয্যা করিয়া দিতেছিলাম, বারংবার চন্দন লেপিয়া দিতেছিলাম, বারংবার ঘর্ম্মের প্রতীকার করিতেছিলাম এবং কদলীপত্রদ্বারা অনবরত ব্যজন করিতে-ছিলাম—তখন আমার মনে এই চিন্তা উৎপন্ন হইল—(ষ) এই জগতে, ভগবান্ কামদেবের অসাধ্য কিছুই নাই; না হইলে, হরিণের ন্যায় বনবাসে নিরত এবং স্বভাবতই সরল চিত্ত এই ব্যক্তিই বা কোথায়, আর নানাবিধ বিলাস ও হাব-ভাব-সম্পন্না গন্ধর্ব্বরাজকন্যা মহাশ্বেতাই বা কোথায়। (স) এই জগতে কামদেবের পক্ষে দুর্ঘট, দুষ্কর, অনধীন ও অকর্ত্তব্য—এমন কিছুই নাই। ইনি, অন্যের দুষ্কর কার্য্যেও অবজ্ঞাপূর্ব্বক প্রবৃত্ত হইয়া থাকেন। ইঁহাকে কিন্তু কেহই প্রতিরোধ করিতে পারে না। (হ) সচেতন পদার্থের

(१) दुरुपपादेष्वर्थेषु। (२) केनचित्। (३) सङ्घटयितुमलम्।

कमलिन्यपि शशिकरद्वेषमुज्झति, निशापि वासरेण सह मिश्रतामेति, ज्योत्स्नाप्यन्धकारमनुवर्त्तते, छायापि प्रदीपाभिमुखमवतिष्ठते, तडिदपि जलदे स्थिरतां व्रजति, जरापि यौवनेन सञ्चारिणी भवति (ङ)। किं वा तस्य दुःसाध्यमपरम्, एवंविधो येनायमगाधगाम्भीर्य्यसागरस्तृणवल्लघुताम् (१) उपनीतः (च)। क्व तत्तपः, क्वेयमवस्था। सर्वथा निष्प्रतीकारेयमापदुपस्थिता। किमिदानीं कर्त्तव्यम्, किं वा चेष्टितव्यम्, (२) कां दिशं (३) गन्तव्यम्, किं शरणम्, को वा (४) उपायः, कः सहायः, कः प्रकारः, का युक्तिः, कः समाश्रयः, येनास्यासवः सन्धार्य्यन्ते, (५) (छ)। केन वा कौशलेन, कतमया वा युक्त्या, कतरेण वा प्रकारेण, केन वावष्ट-

(ङ) भवतीत्यादि योज्यम्। जरा वार्द्धक्यमपि यौवनेन सह सञ्चारिणी भवतीत्यर्थः। तथा च एतान्यसौ न दिशन्ति अतएव कुमुदिन्यादयो दिनकरकरानुरागिण्यादिरूपा न भवन्तीति भावः।

(च) किमिति। येन मनोभुवा एवंविधः अगाधगाम्भीर्य्यसागरः अयं पुण्डरीकः तृणवत् लघुताम् उपनीतः प्रापितः, तस्य मनोभुवः अपरम् इतोऽन्यत् किं वा दुःसाध्यमस्तीत्यन्वयः, अपि तु किमपि नास्तीत्यर्थः। अत्र अर्थापत्तिरलङ्कारः, तथा यच्छब्दानिर्दिष्टवाक्यस्य परपाठसाकाङ्क्षत्वाद्विधेयाविमर्शदोषः, स च तस्य प्राक्पाठेन समाधेयः।

(छ) क्वेति। इयं दृश्यमाना अवस्था अत्यन्तविह्वला दशा। गन्तव्यमित्र भावे तव्यप्रत्ययः। कां दिशमिति तु "न कर्त्तृकर्म्मप्राप्ता" इति षष्ठीनिषेधात् कर्म्मणि सामान्यविवक्षया द्वितीयैव "येनाद्य न कर्त्तव्यम्-मन्यस्य क्रोधवेगतः" इत्यादिकमत्रोदाहरणम्। गोपालनाप्यनूक्तम् उदाहृतं यथा—"गन्तव्यं ग्राममन्येऽपि मतं नः। तथा च कां दिशं गन्तव्यामिति।" शरणं रक्षकम्। प्रकारः एतदापत्प्रतीकारस्य पन्थाः। युक्तिरेतत्प्रतीकाराय मनसि पर्यालोचना। समाश्रयः अवलम्बनम्। येन अस्य पुण्डरीकस्य असवः प्राणाः सन्धार्य्यन्ते अवस्थाप्यन्ते मया रक्ष्यन्त इत्यर्थः।

আর কথা কি আছে, অচেতন পদার্থকেও ইনি পরস্পর সংযোজিত করিতে পারেন; যদি ইঁহার অভিপ্রায় হয়, তাহা হইলে কুমুদিনীও সূর্য্যকিরণের অনুরাগিণী হইতে পারে, পদ্মিনীও চন্দ্রকিরণের প্রতি বিদ্বেষ পরিত্যাগ করিতে পারে, রাত্রিও দিনের সঙ্গে মিশিতে পারে, জ্যোৎস্নাও অন্ধকারের অনুগামী হইতে পারে, ছায়াও প্রদীপের সম্মুখে থাকিতে পারে, বিদ্যুৎও মেঘের উপরে স্থায়িত্ব লাভ করিতে পারে এবং বার্দ্ধক্যও যৌবনের সহচর হইতে পারে। (ঙ) যিনি, এইরূপ অগাধ গাম্ভীর্য্যের সাগর পুণ্ডরীককে তৃণের ন্যায় লঘু করিয়া তুলিয়াছেন, সেই কামদেবের অশক্য বা অসাধ্য কি আছে। (চ) সেই তপস্যাই বা কোথায় আর এই অবস্থাই বা কোথায়। সকল প্রকারে প্রতীকারবিহীন এই বিপদ উপস্থিত হই-

(१) तृणवल्लघुताम्। (२) किमाचेष्टितव्यम्। (३) दिशम्। (४) कथम्। (५) धार्य्यन्ते।

ध्यानेन, कया प्रज्ञया, कतमेन वा समाश्वासनेनायं जीवेत्" इत्येते चान्ये च मे विषण्णहृदयस्य सङ्कल्पाः प्रादुरासन् (ख)। पुनश्चाचिन्तयम्—"किमनया अत्यन्तायतया (१) निष्प्रयोजनया चिन्तया। प्राणास्तावदस्य येन केनचिदुपायेन शुभेनाशुभेन वा रक्षणीयाः (ग)। तेषाञ्च तत्समागममेकमपहाय नास्त्यपरः संरक्षणोपायः (घ)। बालभावादप्रगल्भतया च तपोविरुद्धमनुचितमुपहासमिव (२) आत्मनो मदनव्यतिकरं मन्यमानो नियतमेकोच्छ्वासावशेषजीवितोऽपि नायं तस्याः स्वयमभिगमनेन पूरयति मनोरथम् (ङ)। अकालान्तरक्षमश्चायमस्य

---

(ख) केनेति। युक्त्या पर्यालोचनया। प्रकारेण पथा। अवष्टम्भेन उपायावलम्बनेन। प्रज्ञया ऊहापोहवत्या बुद्ध्या सङ्कल्पा वितर्काः। प्रादुरासन् आविर्बभूवुः।

(ग) पुनरिति। अत्यन्तायतया अपारत्वादतिदीर्घया। अत तर्हि किं क्रियतामित्याह प्राणा इति। रक्षणीया भवेति शेषः। सुतरां तदर्थमुद्यमः कर्त्तव्य इति भावः।

(घ) ननु तदा कः स उपायः स्यादित्यत आह तेषामिति। किञ्च, तस्या महाश्वेतायाः समागमं सङ्गमं एकमिममुपायमपहाय अपरस्तु वा प्राणानां रक्षणोपायो नास्तीत्यन्वयः।

(ङ) तर्हि पुण्डरीकेण स्वयमेव गत्वा महाश्वेतया सङ्गम्यतामित्याह बालेति। एकएव उच्छ्वासो निश्वासोऽवशेषो यस्य एतादृशं जीवितं यस्य सः मरणोद्यतजीवनोऽपीत्यर्थः, अयं पुण्डरीकः, तपोविरुद्धम् अतएव अनुचितं सुतरामेव च उपहासमिव आत्मनः स्वस्य मदनव्यतिकरम् चर्मं कामावेशं मन्यमानः सन् लज्जाकरत्वादिति भावः, बालभावात् शिशुत्वेन पूर्वाभ्यस्तचातुर्य्याभावात्, अप्रगल्भतया प्रत्युत्पन्नबुद्धिताभावेन च मुनित्वानुरूपनागरिकजनोपयोगिचातुर्य्याभावेन च हेतुनेत्यर्थः, स्वयमात्मनैव गत्वा तस्या महाश्वेताया अभिगमनेन सङ्गमेन मनोरथं न पूरयति न पूरयितुं शक्नोति इति नियतं निश्चितं; सुतरामस्य जीवनसंशय एव सञ्जात इति भावः।

---

আছে। এখন আমি কি করি, কিসের চেষ্টা করি, কোন দিকে যাই, কাহার শরণ লই, উপায়ই বা কি, সহায় বা কে, প্রতীকারের পথই বা কি, কোন্ যুক্তি অবলম্বন করি এবং কাহারই বা আশ্রয় লই; যাহাতে ইহার প্রাণ রক্ষা করিতে পারি। (খ) কোন্ কৌশলে, কোন্ যুক্তিতে, কোন্ প্রকারে কি অবলম্বনে, কোন্ বুদ্ধিতে এবং কোন্ আশ্বাসে, এ, রক্ষা পাইবে' এই রকম ও অন্যান্য অনেক রকম চিন্তা, আমার বিষণ্ণচিত্তে উপস্থিত হইতে লাগিল। (গ) এবং পুনরায় চিন্তা করিতে লাগিলাম—অত্যন্ত দীর্ঘ অথচ নিষ্প্রয়োজন এই চিন্তা করিয়া লাভ কি ?। শুভই হউক অশুভই হউক, যে কোন উপায়ে ইহার প্রাণরক্ষা করিতেই হইবে। (ঘ) কিন্তু একমাত্র মহাশ্বেতার সম্মিলন ব্যতীত ইহার প্রাণরক্ষার অন্য উপায় নাই। (ঙ) একটি নিশ্বাস পরিত্যাগ মাত্র ইহার জীবনের অবশিষ্ট রহিয়াছে তথাপি

(१) आयतया। (२) उपहसनमुपहासमिव।

মদনবিকারঃ (চ)। অতিতমতিগর্হিতেনাকৃত্যেনাপি (১) রক্ষণীয়ান্ (২) মন্যন্তে সুহৃদসূন্ সাধবঃ। তদতিক্রপণমকর্তব্যমপ্যেতদবশ্যমবশ্যকর্তব্যতামাপতিতম্ (ছ)। কিমন্যৎ ক্রিয়তে, কা বান্যা গতিঃ, সর্বথা প্রযামি তস্যাঃ সকাশম্, আবেদয়াম্যেতামবস্থাম্" ইতি চিন্তযিত্বা চ (৩) কদাচিদনুচিতপ্রবৃত্তং মাং বিজ্ঞায় সঞ্জাতলজ্জো নিবারয়েদিত্যনিবেদ্যৈব তস্মৈ তৎপ্রদেশাৎ সব্যাজমুত্থায়াগতো-ঽস্মি (জ)। তদেবমবস্থিতে যদত্রাবসরপ্রাপ্তম্ ঈদৃশস্য চানুরাগস্য সদৃশম্, মদ্গ-

(চ) অথ কার্য্যে সর্বস্বৈব লোপবর্ণনাৎ বাঞ্ছিত কার্য্যং প্রতীঘাততা ক্ষমমিবেদং মদনবেদনা লোপং যাস্যতী-ত্যাহ অথেতি। অথাবসান্তরক্ষমঃ কালবিলম্বাসহঃ। সুতরামবিলম্বমিবাস্য প্রতীকারায় ময়া যতিতব্যমিতি ভাবঃ। এতদনুরূপং বাক্যং যথা শাকুন্তলে—"দূরমতন্মথা অথমিদং কালহরণস্য।"

(ছ) ইদানীং প্রতীকারোপায়মেব প্রবর্তনমনুচিতমিত্যভিধাতুং তত্র সাধুসম্মতিমাহ অততমিতি। অকৃত্যে-নাতিমাত্রং নিন্দিতেনৈব অকর্তব্যেন কর্তুমশক্যেনাপি উপায়েন। তদস্মাৎ, অতিক্রপণম্ অত্যন্তলজ্জাকরম্ অক-র্তব্যমপি সুহৃদস্যাদিতি ভাবঃ, এতৎ মহাশ্বেতয়া সহ পুণ্ডরীকস্য সঙ্গমনম্। আপতিতং প্রাপ্তম্।

(জ) কিমিতি। তস্যা মহাশ্বেতায়াঃ। অনুচিতে কার্য্যে প্রবৃত্তঃ স তথোক্তস্তম্। সঞ্জাতলজ্জঃ পুণ্ড-রীক ইতি শেষঃ, নিবারয়েৎ গমনাৎ অনিবেদ্যোনং নিবেদ্য, ইতি শেষঃ। তস্মৈ পুণ্ডরীকায়। সব্যাজং পুষ্পাহরণাদিব্যাজসহিতং যথা তথা।

(ঝ) তদিতি। তদস্মাৎ এবমবস্থিতে ইত্থম্ভূতে প্রস্তাবে। অবসরপ্রাপ্তং এতৎকালোচিতম্। ঈদৃশস্য

এ তপস্যার বিরুদ্ধ বলিয়া অনুচিত নিজের কামবিকারকে উপহাসের ন্যায় মনে করিয়া, বালকতাবশতঃ ও চতুরতা নাই বলিয়া, নিজেই যাইয়া মহাশ্বেতার সহিত মিলিত হইয়া নিশ্চয়ই অভিলাষ পূর্ণ করিতে পারিবে না। (চ) অথচ ইহার এই কামবিকার আর বিলম্ব সহিতে পারিতেছে না। (ছ) অত্যন্ত গর্হিত এবং অকর্তব্য হইলেও যে কোন উপায়ে বন্ধুর প্রাণরক্ষা করা উচিত—সাধুগণ এইরূপ মনে করিয়া থাকেন ; অতএব অত্যন্ত লজ্জাকর এবং অকর্তব্য হইলেও এই কার্য্য আমার অবশ্যই করিতে হইবে। (জ) অন্য আর কি করিব, অন্য উপায়ই বা কি আছে ; নিশ্চয়ই মহাশ্বেতার নিকটেই যাই, যাইয়া এই অবস্থা জানাই' এইরূপ চিন্তা করিয়া আবার ভাবিলাম—'আমি অসঙ্গত কার্য্যে প্রবৃত্ত হইয়াছি, ইহা জানিয়া হয় ত পুণ্ডরীক, আমাকে আসিতে নিষেধ করিবে ; এই জন্য তাহাকে না জানাইয়াই আমি কোন ছল করিয়া সে স্থান হইতে উঠিয়া আসিয়াছি। (ঝ) অতএব এইরূপ ঘটনায় এখন যাহা উচিত, এই জাতীয় অনুরাগের যাহা যোগ্য, আমার আগমনের পক্ষে যাহা সঙ্গত এবং

(১) অকৃত্যেনাপি। (২) পরিরক্ষণীয়ান্। (৩) ক্বচিৎ চকারো নাস্তি।

तदागमनस्य चानुरूपम्, आत्मनो वा समुचितम्, तत्र प्रभवति भवती" इत्यभिधाय किमियं वक्ष्यतीति मन्मुखासक्तदृष्टिस्तूष्णीमासीत्। (झ)

अहन्तु तदाकर्ण्य सुखामृतमये ह्रद इव निमग्ना, अनुरागरसमयमुदधिमिवावतीर्णा, सर्व्वानन्दानामुपरि वर्त्तमाना, सर्व्वमनोरथानामग्रमिवाधिरूढा, सर्व्वोत्सवानामतिभूमिमिवाधिशयाना, तत्कालोपजातया लज्जया किञ्चिदवनम्यमानवदनत्वादस्पृष्टकपोलोदरैः ग्रथितैरिवोपर्य्युपरि पतनानुबन्धदर्शितमालाक्रमैः अप्राप्तपक्ष्मसंश्लेषतया उपजातप्रथिमभरैरमलैरानन्दवाष्पजलबिन्दुभिः स्रवद्भिरावेद्यमानप्रहर्षप्रसरा, (१) तत्क्षणमचिन्तयम् (ञ)। 'दिष्ट्या तावदयमनङ्गो मामिव

परा काष्ठा मतम् इत्यर्थः। सदृशं योग्यम्। तत्र कार्य्ये भवती त्वं प्रभवति समर्था भवसि, इच्छानुरूपं कर्त्तुमर्हसीत्यर्थः। एतेन भवत्या च गत्वा पुण्डरीकेण सह सङ्गन्तव्यमिति व्यज्यत इति वस्तुना वस्तुध्वनिः।

(ञ) अहमिति। सुखमेव अमृतं पीयूषं तन्मये ह्रदे निमग्नेव। अत्र निरङ्गकेवलरूपकोत्प्रेक्षयो-रङ्गाङ्गिभावेन सङ्करः। अतिरनुराग एव रसो जलं तन्मयमुदधिम् अवतीर्णेव, तत्रापि तादृशानुराग[illegible] ममानुरागस्य मनसा दुर्व्विषहत्वादिति भावः। अत्रापि पूर्व्ववदलङ्कारः, तथा शृङ्गारस्थायिभावस्य रतेः [illegible] वीचादानात् स्थायिनः स्वशब्दवाच्यतादोषः, स च आह्लादमयमिति पाठेन समाधेयः। वर्त्तमाना स्थिता इव अत्र प्रतीयमाना क्रियोत्प्रेक्षालङ्कारः। अग्रम् अधिरूढेव। अत्र वाच्या क्रियोत्प्रेक्षा। अतिभूमिं सर्व्वोत्कर्षस्थानम् अधिशयाना अधितिष्ठन्तीव। वाच्या क्रियोत्प्रेक्षा। किञ्चिदवनम्यमानं वदनं यस्यास्तस्या भावस्तत्त्वं तस्मात् अस्पृष्टे कपोलयोरुदरे मध्यभागौ यैस्तैः, पतनानुबन्धेन पूर्व्वपूर्व्वस्य परपरवर्त्तिना अविच्छिन्नपतनानुसारेण दर्शितो मालायाः क्रमः परस्परसंलग्नतारूपा परिपाटी यैस्तैः, अतएव उपर्य्युपरि ग्रथितैरिव स्थितैः। अत्र वाच्या क्रियोत्प्रेक्षा। न प्राप्तः [illegible] पक्ष्मसु नेत्रलोमसु संश्लेषः सम्बन्धो यैस्तेषां भावस्तया हेतुना, उपजातः प्रथिमभरः स्थूलताभारो येषां तैः, अन्यथा तु अश्रुबिन्दूनां पक्ष्मलग्नतया स्थूलत्वं स्यादिति भावः। आवेद्यमानः सूच्यमानः प्रहर्षप्रसरः प्रकृष्टानन्दातिशयो यस्याः सा।

নিজেরও যাহা উচিত, আপনি তাহাই করিতে পারেন" এই কথা বলিয়া কপিঞ্জল, 'ইনি কি বলেন' এই জন্য আমার মুখে দৃষ্টি সংলগ্ন করিয়া নীরব হইয়া রহিলেন।

(ঞ) কিন্তু আমি সেই সকল কথা শুনিয়া সুখরূপ অমৃতের হ্রদেই যেন নিমগ্ন হইলাম, অনুরাগরূপ জলের সমুদ্রেই যেন অবগাহন করিলাম, সকল প্রকার আনন্দের উপরেই যেন অবস্থান করিতে লাগিলাম, সকল আশার উপরেই যেন আরোহণ করিলাম এবং সকল উৎসবের চরম সীমায়ই যেন অধিষ্ঠান করিতে লাগিলাম; তখন লজ্জা উৎপন্ন হইয়া আমার মুখমণ্ডলকে ঈষৎ অবনত করিয়া দিল; সেই জন্য, নির্ম্মল আনন্দাশ্রু বিন্দুগুলি কপোলযুগলের মধ্যভাগ স্পর্শ না করিয়া, অবিচ্ছিন্ন-পতন-অনুসারে মালার পরিপাটী দেখাইয়া, পর পর যেন গ্রথিত হইয়া এবং নয়নের লোমে সংযুক্ত না হওয়ায় অত্যন্ত স্থূল হইয়া পড়িতে লাগিল;

(१)···प्रसरा।

तमप्यनुबध्नाति, यत्सत्यमनेन (१) मे सन्तापयताप्यंशेन (२) दर्शितानुकूलता (ट)। यदि च सत्यमेव तस्येदृशी दशा वर्त्तते, (३) ततः किमिव नोपकृतमनेन, किं वा नोपपादितम्, को वानेनापरः समानो बन्धुः (ठ)। कथं वा कपिञ्जलस्य स्वप्नेऽपि वितथा भारती प्रशान्ताकृतेरस्माद्वदनान्निष्क्रामति (ड)। इत्थम्भूते किं मयापि प्रतिपत्तव्यम्? तस्य वा पुरः किमभिधातव्यम्?' इत्येवं विचारयन्त्या एव प्रविश्य ससम्भ्रमा प्रतीहारी मामकथयत्---"भर्त्तृदारिके! त्वमसुस्थशरीरेति (४) परिजनादुपलभ्य महादेवी प्राप्ता" इति (ढ)। तच्च श्रुत्वा कपिञ्जलो महाजनसम्मर्द्दभीरुः सत्वरमुत्थाय "राजपुत्रि! महानयमुपस्थितः कालातिपातः।

---

(ट) दिष्ट्येति। दिष्ट्या भाग्येन। तं पुण्डरीकमपि अनुबध्नाति अनुसरति आविशतीत्यर्थः। अतएव मां सन्तापयतापि अनेन मदनेन मे मम अंशेन यत् सत्यम् अनुकूलता दर्शिता, नतु साकल्येन, अद्यापि सङ्गमाभावादिति भावः। यत्सत्यमित्येकमेव पदं दर्शितेति क्रियाया विशेषणम्।

(ठ) यदीति। तस्य पुण्डरीकस्य ईदृशी कपिञ्जलोक्तप्रकारा। अनेन मदनेन। उपपादितं सम्पादितम्। अनेन मदनेन समानः अपरः को वा मम बन्धुः, अपि तु कोऽपि नेत्यर्थः, अनेनैव ममाशायाः पूरितप्रायत्वादिति भावः।

(ड) ननु कपिञ्जलवचनस्य सत्यत्वे किं प्रमाणमित्याह कथमिति। प्रशान्ताकृतेः अप्रतारणासूचकसौम्यमूर्त्तेः कपिञ्जलस्य अस्माद्वदनात् स्वप्नेऽपि कथं वितथा मिथ्या भारती निष्क्रामति कथमपि नेत्यर्थः। अत्र प्रशान्ताकृतिरेव वाक्यस्य सत्यत्वे प्रमाणम्, ईदृशाकृतेः कदाचिदपि मिथ्यावचनाश्रवणादिति भावः।

(ढ) इत्थमिति। इत्थम्भूते वृत्तान्ते इति शेषः। प्रतिपत्तव्यम् अङ्गीकर्त्तव्यम्। तस्य पुरो वा पुण्डरीकस्य समीपे वा किमभिधातव्यं गत्वा वक्तव्यम्, अथवा वाचिकं प्रेषयितव्यम्। इत्येवं विचारयन्त्या एव मम गृहं इति शेषः। उपलभ्य ज्ञात्वा। महादेवी गन्धर्वराजमहिषी महाश्वेताया माता।

---

সুতরাং সেই অশ্রুবিন্দুগুলি, আমার অত্যন্ত আনন্দের সূচনা করিতেছিল—এই অবস্থায় তখন আমি চিন্তা করিতে লাগিলাম। (ট) সৌভাগ্যবশতই এই কন্দর্প, আমার ন্যায় তাঁহারও অনুসরণ করিতেছেন; অতএব সত্যই ইনি, আমাকে সন্তপ্ত করিয়াও, কোন অংশে আমার আনুকূল্য দেখাইয়াছেন। (ঠ) যদি সত্যই, তাঁহার এইরূপ অবস্থা হইয়া থাকে, তবে কামদেব আমার কোন্ উপকার না করিলেন, কোন্ কার্য্যই বা সম্পাদন না করিলেন এবং কামদেবের তুল্য অন্য বন্ধুই বা আমার কে আছে? (ড) শান্তমূর্ত্তি কপিঞ্জলের মুখ হইতে স্বপ্নেই বা মিথ্যা বাক্য নির্গত হইবে কেন? (ঢ) এই জাতীয় ঘটনায় আমিই বা কি অঙ্গীকার করি? তাঁহার নিকটেই বা কি বলিয়া পাঠাই? আমি মনে মনে এইরূপ বিতর্ক

---

(१) एतेन। (२) कियतांशेन। (३) कश्चित् वर्त्तत इति नास्ति। (४) अस्वस्थशरीरेति।

भगवांश्च भुवनत्रयचूडामणिरस्तमुपगच्छति दिवसकरः । तद्गच्छामि । सर्वथाभिमत-सुहृत्-प्राण-रक्षा-दक्षिणार्थं मयायमुपरचितोऽञ्जलिः, एष मे परमो विभवः" इत्यभिधाय प्रतिवचनकालमप्रतीक्ष्यैव पुरोयायिना अम्बायाः प्रविशता कनकवेत्रलताकरेण प्रतीहारीजनेन कञ्चुकिलोकेन गृहीत-(१) ताम्बूल-कुसुम-पटवासाङ्गरागेण चामरव्यग्रपाणिना कुब्ज-किरात-बधिर-वामन-वर्षवर-(२) विकल-मूकानुगतेन (३) परिजनेन सर्वतः संरुद्धे द्वारदेशे कथमप्यवाप्तनिर्गमः प्रययौ (घ) । अम्बा तु मत्समीपमागत्य सुचिरं स्थित्वा स्वभवनमयासीत् । तया तु तस्मा-

(घ) तथेति । महतो जनसम्मर्द्दात् महादेव्या समागतानां लोकानाम् अत्यन्तात् सङ्घर्षात् भीरुमर्यादलः, मदीयं प्रश्रयं कांक्षिन एतावस्थानादिति भावः । कालातिपातः समयविलम्बः, तत्र तत्र गन्तुमिच्छायां सत्यामपि महादेव्यामपस्थितायां तदसम्भवादिति भावः । सर्वथैव अभिमतस्य मनोमतस्य सुहृदः प्राणरक्षाया दक्षिणार्थम् अयमञ्जलिः उपरचितः कृतः । एषः अञ्जलिरचनारूप एव मे मम परमो विभवः सम्पत्तिः, इत उत्कृष्टं तपस्विनो मे धनं नास्ति यत् तुभ्यं दातव्यमिति भावः । अम्बायाः पुरोयायिना अग्रगामिना सता प्रविशतेत्यर्थः । कनकवेत्रलता स्वर्णखचिता वेत्रयष्टिः करे यस्य तेन । गृहीताः ताम्बूलं कुसुमं पटवासः पिष्टातकः अङ्गरागः अङ्गविलेपनद्रव्यञ्च ते येन तेन, चामरेण व्यग्रौ व्यासक्तौ पाणी यस्य तेन । कुब्जाः वक्रदेहाः, किराताः क्षुद्रदेहाः, बधिराः श्रवणशक्तिहीनाः, वामनाः खर्वाकृतयः, वर्षवराः क्लीवाः, विकलाः विकृताङ्गाः, मूकाः वाक्शक्तिविहीनाश्च तैरनुगतेन । कथमपि कष्टेन अवाप्तो लब्धः निर्गमो निर्गमनमार्गो येन स तादृशः कपिञ्जलः । एतेन जनसङ्घर्षभयात् आत्मनिर्गमनमपि कपिञ्जलः कोऽपि न ज्ञातवानिति सूचितम् ।

করিতেছিলাম—এমন সময়ে প্রতিহারী আমার গৃহমধ্যে তাড়াতাড়ি প্রবেশ করিয়া আসিয়া আমাকে কহিল—রাজকন্যে ! 'আপনার শরীর অসুস্থ হইয়াছে, ইহা পরিজনবর্গের নিকট জানিয়া মহারাণী উপস্থিত হইয়াছেন।' (৭) এই কথা শুনিয়া কপিঞ্জল, অত্যন্ত লোক-সজ্ঘর্ষের ভয়ে তাড়াতাড়ি উঠিয়া বলিলেন—"রাজকন্যে ! এই গুরুতর কালবিলম্ব উপস্থিত হইয়াছে। এদিকে, ত্রিভুবনের চূড়ামণি ভগবান্ সূর্য্যও, অস্তে যাইতেছেন। অতএব আমি চলিলাম। সর্ব্বপ্রকারে মনোমত বন্ধুর প্রাণরক্ষার দক্ষিণার জন্য এই হাত জোড় করিতেছি ; এইমাত্রই আমার পরম ধন" এই কথা বলিয়া, প্রত্যুত্তরের সময় প্রতীক্ষা না করিয়াই তিনি দ্বারদেশে কোনপ্রকারে নির্গমনের পথ পাইয়া চলিয়া গেলেন ; কারণ, স্বর্ণখচিত বেত্রযষ্টিধারী প্রতীহারিগণ, কঞ্চুকিগণ এবং তাম্বূল, পুষ্প, আবীর ও অঙ্গলেপনদ্রব্য লইয়া চামরহস্ত পরিজনবর্গ, মাতৃদেবীর অগ্রে অগ্রে প্রবেশ করিতেছিল এবং তাহাদের পশ্চাৎ পশ্চাৎ কুব্জ, ক্ষুদ্রদেহ, বধির, বামনবীর, নপুংসক, বিকলাঙ্গ ও মূকগণ আসিতেছিল ; তাহাতে দ্বারদেশ,

(१) आसक्तीन… । (२)…वर्षवर… । (३)…कलमूकानुगतेन ।

গত্য কিং কৃতং কিমভিহিতং কিমাচেষ্টিতমিতি শূন্যহৃদয়া সর্ব্বং নালক্ষয়ম্। (ত)

গতায়াঞ্চ তস্যাম্, (১) অস্তমুপগতে ভগবতি হারীত-হরিত-বাজিনি সরোজিনীজীবিতেশ্বরে চক্রবাকসুহৃদি সবিতরি, (থ) লোহিতায়মানে পশ্চিমাশামুখে, হরিতায়মানেষু কমলবনেষু, নীলায়মানে পূর্ব্বদিগ্বিভাগে, পাতালপঙ্ককলুষেণ মহাপ্রলয়-জলধিপয়ঃপূরেণেব তিমিরেণাবষ্টভ্যমানে জীবলোকে, কিংকর্ত্তব্যতামূঢ়া তামেব তরলিকামপৃচ্ছম্---(দ) 'অয়ি তরলিকে! কথং ন পশ্যসি, হৃদমাকুলং

(ত) অম্বেতি। তয়া অম্বয়া। কিমাচেষ্টিতং কিমর্থং কো যত্নঃ কৃতঃ। শূন্যহৃদয়া বিষয়ান্তরজ্ঞান-রহিতচিত্তা, কেবলপুণ্ডরীকবিষয় এবোৎকটং চিন্তনাদিতি ভাবঃ।

(থ) গতায়ামিতি। তস্যামম্বায়াম্। হারীতো হরিদ্বর্ণপক্ষিবিশেষঃ, তদ্বৎ হরিতাঃ পালাশবর্ণা বাজিনো ঘোটকা যস্য তস্মিন্, সরোজিনীজীবিতেশ্বরে পদ্মিনীপ্রাণনাথে, চক্রবাকস্য পক্ষিণঃ সুহৃদ বন্ধৌ, সতি সূর্য্যে চক্রবাকদম্পত্যোঃ সংযোগাদসতি চ বিয়োগাদিতি ভাবঃ। সবিতরি সূর্য্যে অস্তমুপগতে সতি। অত্র ছেকানুপ্রাসবৃত্ত্যনুপ্রাসয়োঃ সংসৃষ্টিঃ, তথা হারীতেত্যাদিবিশেষণত্রয়ং প্রাকৃতার্থস্য ন কিঞ্চিদুপকুর্ব্বত ইত্যপুষ্টার্থতাদোষঃ, স চ তৎপরিত্যাগেনৈব সমাধেয়ঃ।

(দ) লোহিতেতি। পশ্চিমাশামুখে প্রতীচীমুখে লোহিতায়মানে সতি, সন্ধ্যারাগাদিতি ভাবঃ। কমল-বনেষু হরিতায়মানেষু সৎসু, পদ্মানাং মুদ্রিততয়া পত্রমাত্রপ্রভাপ্রকাশাদিতি ভাবঃ। পূর্ব্বদিগ্বিভাগে নীলায়মানে সতি, তিমিরোদ্গমাদিতি ভাবঃ। পাতালস্য যঃ পঙ্কঃ কর্দ্দমস্তদ্বৎ কলুষম্ আবিলং মলিনং তেন। অত্র লুপ্তোপমালঙ্কারঃ। পঙ্কস্যাধিকমালিন্যদ্যোতনার্থং পাতালপদম্। মহাপ্রলয়ে জলধেঃ পয়ঃপূরো জলৌঘস্তেনেব সর্ব্বাবরকেণেত্যর্থঃ, তিমিরেণান্ধকারেণ, জীবলোকে জগতি অবষ্টভ্যমানে আক্রম্যমাণে সতি। উপমালঙ্কারঃ।

(ধ) অয়ীতি। হৃদমাকুলম্ অতীব বিহ্বলম্, উদ্বেগাদিনানাবিধভাবোদয়াদিতি ভাবঃ। অপ্রতিপদ্যা

সকল দিকেই রুদ্ধ হইয়া গিয়াছিল। (ত) মা, আমার নিকট আসিয়া কি করিলেন, কি বলিলেন এবং কিন্নিমিত্ত কোন্ চেষ্টা করিলেন—এই সকলই আমি শূন্যমনে লক্ষ্য করিতে পারিয়াছিলাম না।

(থ) তিনি চলিয়া গেলে, যাঁহার ঘোটকগুলি হারিলপক্ষীর ন্যায় হরিদ্বর্ণ এবং যিনি পদ্মিনীর প্রাণেশ্বর ও চক্রবাকের সখা, সেই ভগবান্ সূর্য্যদেব অস্তমিত হইলেন; (দ) পশ্চিমদিক্ রক্তবর্ণ হইয়া উঠিল; পদ্মবন হরিদ্বর্ণ হইল, পূর্ব্বদিক্ নীলবর্ণ ধারণ করিল এবং পাতালের কর্দ্দমের ন্যায় মলিনবর্ণ ও মহাপ্রলয়কালীন সমুদ্রের জলপ্রবাহের ন্যায় সর্ব্বব্যাপী অন্ধকার আসিয়া জগৎসংসার আশ্রয় করিল—এমন সময়ে আমি কিংকর্ত্তব্য বিমূঢ় হইয়া সেই

(১) তস্যাম্।

मे हृदयम्, अप्रतिपत्तिविह्वलानि चेन्द्रियाणि। न स्वयमल्पमपि कर्त्तव्यमलमस्मि (१) ज्ञातुम्, उपदिशतु मे भवती यदत्र साम्प्रतम् (ध)। अयमेवं त्वत्समक्षमेवाभिधाय गतः कपिञ्जलः। यदि तावदितरकन्यकेव विहाय लज्जाम्, उत्सृज्य धैर्य्यम्, उन्मुच्य (२) विनयम्, अचिन्तयित्वा जनापवादम्, अतिक्रम्य सदाचारम्, उल्लङ्घ्य शीलम्, अवगणय्य कुलम्, अङ्गीकृत्यायशः, रागान्धवृत्तिः अननुज्ञाता पित्रा, अननुमोदिता मात्रा, स्वयमुपगम्य ग्राहयामि पाणिम्; —एवं गुरुजनातिक्रमादधर्म्मो महान् (न)। अथ धर्म्मानुरोधादितरपक्षावलम्बनद्वारेण मृत्युमङ्गीकरोमि, एवमपि प्रथमं तावत् स्वयमागतस्य प्रथमप्रणयिनस्तत्रभवतः कपिञ्जलस्य प्रणयप्रसरभङ्गः (प)। पुनरपरं यदि कदाचिदस्य

---

कर्त्तव्यनिश्चयाभावेन विह्वलानि आकुलानि। अतएव स्वयमात्मना अल्पमपि कर्त्तव्यं ज्ञातुं निश्चेतुं नालमस्मि न समर्थास्मि। सुतरामेव अत्र विषये यत् साम्प्रतं युक्तम्, तद्भवती मे उपदिशतु।

(न) अयमिति। अयं कपिञ्जलः, त्वत्समक्षमेव एवमभिधाय गत इत्यन्वयः। इतरकन्यकेव नीचकुलोद्भवकन्येव। उन्मुच्य परित्यज्य, विनयं शिक्षां शिक्षाजनितेन्द्रियवेगदमनमित्यर्थः। रागेण कामासक्त्या अन्धा सदसद्विवेकहीना वृत्तिरध्यवसायो यस्याः सा। एवम् इत्थं तदित्यर्थः, गुरुजनानां जनकजनन्यादीनाम् अतिक्रमात् अनुमतेरप्यनपेक्षणात् महान् अधर्म्मो भवेदिति शेषः।

(प) ननु तर्हि तत्रागत्य पूर्ववदेव स्वगृहे स्थीयतामित्याह अथेति। इतरपक्षस्य स्वगृहावस्थानपक्षस्य तेन पाणिग्रहणाभावपक्षस्येत्यर्थः अवलम्बनद्वारेण मृत्युमङ्गीकरोमि। एतेन तत्पाणिग्रहणाभावे मम मरणमवश्यम्भावीति सूचितम्। प्रथमं तावत् दूषणमेतदिति शेषः। प्रणयप्रसरस्य प्रार्थनातिशयस्य भङ्गो निष्फलतासम्पादनम्।

---

তরলিকাকেই জিজ্ঞাসা করিলাম—(ধ) তরলিকে! তুমি দেখিতেছ না কেন আমার মন যে বড়ই আকুল হইয়াছে; এবং কর্ত্তব্য স্থির করিতে না পারায় ইন্দ্রিয়গুলিও বিহ্বল হইয়া পড়িয়াছে; আমি নিজে অল্পও কর্ত্তব্য স্থির করিতে পারিতেছি না; সুতরাং এ বিষয়ে যাহা যুক্তিসঙ্গত হয়, তুমিই আমাকে তাহার উপদেশ দাও। (ন) কপিঞ্জল এইমাত্র তোমার সমক্ষেই এইরূপ বলিয়া গেলেন; এখন যদি আমি, ইতরজাতীয় কন্যার ন্যায় লজ্জা, ধৈর্য্য ও বিনয় পরিত্যাগ করিয়া, লোকাপবাদের চিন্তা না করিয়া, সদাচার অতিক্রম করিয়া, স্বভাব উল্লঙ্ঘন করিয়া, বংশের অবজ্ঞা করিয়া এবং লোকনিন্দা স্বীকার করিয়া, অনুরাগবশতঃ সদসদ্বিবেচনাবিহীন হইয়া, পিতার অনুমতি না লইয়া এবং মাতার অনুমোদন না পাইয়া, আপনিই যাইয়া পাণিগ্রহণ করাই; তাহা হইলে গুরুজনের অতিক্রম করায় গুরুতর অধর্ম্ম হয়। (প) আবার যদি ধর্ম্মের অনুরোধে অপর পক্ষ অবলম্বন করিয়া

---

(१) क्षमम्। (२) अवमुच्य।

जनस्य मत्कृतादाशाभङ्गात् प्राणविपत्तिरुपजायते, तदपि मुनिजनवधजनितं महदेनो भवेत्" (फ)। इत्येवमुच्चारयन्त्यामेव मयि, आसन्न-(१) चन्द्रोदयजन्मना विरलविरलेनालोकेन वसन्तवनराजिरिव कुसुमरजसा धूसरतां वासवी दिगयासीत्। (ब)

ततः शशि-केशरि-कर-नखर-विदार्य्यमाण-(२) तमः-करि-कुम्भ-सम्भवेन मुक्ताफलक्षोदेनेव धवलतामुपनीयमानम्, (भ) उदयगिरि-सिद्ध-सुन्दरी-कुच-च्युतेन चन्दनचूर्णराशिनेव पाण्डुरीक्रियमाणम्, (म) चलित-जलधि-जल-कल्लो-

(फ) ननु धर्म्माद्यपेक्षया अकिञ्चित्करत्वात् भवतु नाम तत्प्रणयप्रसरभङ्गस्तेन का हानिरित्याह पुनरिति। धर्म्मानुरोधादितरपक्षावलम्बनद्वारेण पुनरपरमिदं दूषणमित्यर्थः। तस्य जनस्य पुण्डरीकस्य। मनसा पतित्वेन वृतत्वात् पुण्डरीकनामानुच्चारणमिति बोध्यम्। प्राणानां विपत्तिर्विनाशः। तदपि तदापि। महदेनो महापातकं भवेत्, "ब्रह्महत्या सुरापानम्" इत्यादिमनुवचनात् आत्मनश्च तत्र निमित्तत्वादिति भावः।

(ब) इतीति। वासवस्य इन्द्रस्येयमिति वासवी पूर्व्वा दिक्, कुसुमरजसा वसन्तवनराजिरिव, आसन्नात् अव्यवहितोत्तरकालभाविनः चन्द्रोदयाज्जन्म यस्य तेन विरलविरलेन अल्पाल्पेन आलोकेन धूसरतामयासीत्। श्रौतोपमालङ्कारः।

(भ) तत इति। शशी चन्द्र एव केशरी सिंहः विदारणकर्त्तृत्वसाम्यात् तस्य कराः किरणा एव नखरास्तैः विदारणकरणत्वसाम्यात् विदार्य्यमाणो भिद्यमानः तमोऽन्धकार एव करिकुम्भः श्यामत्वसाम्यात् तस्मात् सम्भवेन उत्पन्नेन, मुक्ताफलक्षोदेनेव मुक्ताकणेनेव इन्दुधाम्ना, धवलतामुपनीयमानं प्राप्यमानम्, पश्चिमेतरद्दिगन्तरमिति वक्ष्यमाणस्य विशेषणमेतत्। अत्र समस्तवस्तुविषयं साङ्गरूपकं जात्युत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः।

(म) उदयेति। उदयगिरौ या सिद्धसुन्दर्य्यो देवयोनिविशेषाङ्गनास्तासां कुचेभ्यः स्तनेभ्यः च्युतेन गलितेन, चन्दनचूर्णराशिनेव इन्दुधाम्ना, पाण्डुरीक्रियमाणं दिगन्तरम्। अत्र जात्युत्प्रेक्षालङ्कारः।

মৃত্যু স্বীকার করি, তাহা হইলেও প্রথম দোষ এই যে, আপনা আপনি উপস্থিত এবং প্রথমপ্রার্থী মাননীয় কপিঞ্জলের গুরুতর প্রার্থনা ভঙ্গ করিতে হয়; (ফ) এবং দ্বিতীয় দোষ এই যে, আমাদ্বারা আশাভঙ্গ হওয়ায় কখন যদি সেই ব্যক্তির প্রাণের বিপদ জন্মে, তাহা হইলেও মুনিজনের বধজনিত মহাপাতক হইবে' (ব) আমি এইরূপ বলিতেছিলাম— এমন সময়ে, পুষ্পের রেণুতে বসন্তকালের বনশ্রেণীর ন্যায় পূর্ব্বদিক্, সন্নিহিত চন্দ্রোদয় হইতে উৎপন্ন অল্প অল্প আলোকে, ধূসরবর্ণ হইয়া উঠিল।

(ভ) তাহার পর, চন্দ্ররূপ সিংহের কিরণরূপ নখদ্বারা বিদীর্ণ অন্ধকাররূপ হস্তীর কুম্ভ হইতে সম্ভূত মুক্তাচূর্ণের ন্যায় চন্দ্রের কিরণ, পূর্ব্বদিক্ ধবল করিয়া তুলিল; (ম) উদয়াচল-

(१) क्वचित् आसन्नेति पाठो नास्ति। (२) शशिकेशरिविदार्य्यमाण, शशिकेशरिकरविदार्य्यमाण...।

लानिलोत्क्षिप्तेन वेलापुलिन-सिकतोद्गमेनेव पाण्डुतामापाद्यमानम्, पश्चिमेतर-दिगिन्दुधाम्ना दिगन्तरमदृश्यत (य)। शनैः शनैश्चन्द्रदर्शनान्मन्दमन्दस्मिताया दशन-प्रभेव ज्योत्स्ना निष्पतन्ती निशाया मुखशोभामकरोत् (र)। तदनु रसातलाद-वनीमवदार्य (१) उद्गच्छता शेषफणामण्डलेनेव (२) रजनीकरबिम्बेन (३) अरा-जत रजनी (ल)। क्रमेण च सकलजीवलोकानन्दकेन कामिनीजनवल्लभेन किञ्चि-दुन्मुक्तबालभावेन मकरध्वजबन्धुभूतेन समुपारूढरागेण सुरतोत्सवोपभोगैकयो-ग्येन अमृतमयेन यौवनेनेव शशिना रमणीयतामनीयत यामिनी। (व)

(य) चलितेति। चलितस्य जलधिजलस्य पूर्वसमुद्रतोयस्य कल्लोलानां महातरङ्गाणाम् अनिलैर्वायुभिः उत्क्षिप्त-उत्थानं प्रापितस्तेन, वेलापुलिनस्य तीरान्तिकस्थतोयोत्थितदेशस्य सिकतानाम् उद्गमेन ऊर्द्ध्वगमनेन शौक्ल्यसाम्यप्रतिपादनाय आकाशोद्गतवालुकयेवेत्यर्थः इन्दुधाम्ना चन्द्रकिरणेन, पाण्डुतामापाद्यमानं प्राप्य-मानम्, पश्चिमेतरत् पश्चिमाया दिशः सम्पूर्णविपरीतं पूर्वमित्यर्थः दिगन्तरम् अदृश्यत लोकैरिति शेषः। अत्रापि उत्प्रेक्षालङ्कारः। तथा अलङ्कारचयनशक्तिप्रदर्शनाय एकार्थ एव प्रयुक्तं विशेषणद्वयं नाधिकदोषायेति भाष्यम्।

(र) शनैरिति। चन्द्रदर्शनाद्धेतोः मन्दमन्दं स्मितं प्रकाशो हास्यञ्च यस्यास्तस्या निशायाः, दशनप्रभेव दन्तकान्तिरिव शनैः शनैः निष्पतन्ती ज्योत्स्ना, मुखशोभां तस्या निशाया एव प्रथमभागसौन्दर्य्यं वदनसौन्दर्य्यञ्च अकरोत्। अत्र चन्द्रनिशयोः पुंस्त्रीलिङ्गाभ्यां स्मितकार्य्येण च नायकनायिकाव्यवहारसमारोपात् समासोक्तिर-लङ्कारो उत्प्रेक्षया सङ्कीर्य्यते।

(ल) तदन्विति। रजनी रात्रिः, अवनीमवदार्य्य पृथिवीं भित्त्वा रसातलात् पातालात् उद्गच्छता उत्ति-ष्ठता, शेषस्य शुभ्रवर्णस्य अनन्तनागस्य फणामण्डलेनेव श्वेतेन वर्त्तुलेन चेति भावः, रजनीकरबिम्बेन चन्द्र-मण्डलेन अराजत। अत्र द्रव्योत्प्रेक्षालङ्कारः।

(व) क्रमेणेति। किञ्चिदुन्मुक्त ईषत्परित्यक्तो बालभावः शैशवं प्रथमोदितभावश्च येन तेन। मकरध्वजस्य मदनस्य बन्धुभूतेन, उद्दीपकत्वादित्युभयत्रापि भावः। समुपारूढ उत्पन्नः रागोऽनुरागो रक्तिमा

ञ्चিত সিন্ধুরমণীগণের স্তন হইতে নিপতিত চন্দন-চূর্ণ-রাশির ন্যায় চন্দ্রের কিরণ, পূর্ব্বদিক পাণ্ডুরবর্ণ করিল (য) এবং বেগবান্ পূর্ব্ব-সমুদ্রের মহাতরঙ্গের বায়ুতে উত্তোলিত, তীরের নিকটবর্ত্তী চড়া হইতে আকাশে উত্থিত বালুকারাশির ন্যায় চন্দ্রের কিরণ, সেই পূর্ব্বদিক পাণ্ডুবর্ণ করিল—ইহা লোকে দেখিতে লাগিল। (র) চন্দ্রকে দর্শন করিয়া মন্দ-মন্দহাস্য-কারিণী রজনীর দন্তপ্রভার ন্যায় জ্যোৎস্না ধীরে ধীরে ভূতলে পতিত হইতে থাকিয়া, সেই রজনীর মুখ শোভা-সম্পাদন করিল। (ল) তাহার পর, ভূতল বিদারণ করিয়া পাতাল হইতে উত্থিত অনন্তনাগের ফণামণ্ডলের ন্যায় চন্দ্রমণ্ডলদ্বারা রাত্রিটী শোভা পাইতে লাগিল। (ব) ক্রমে সমস্ত জীবলোকের আনন্দজনক, কামিনীগণের প্রীতিকর, কামদেবের বন্ধু

(१) अवदीर्य्य। (२) शेषफणमण्डलेनेव। (३) रजनिकरबिम्बेन।

অথ তং প্রত্যাসন্ন-সমুদ্র-বিদ্রুম-প্রভা-পাটলিতমিব উদয়-গিরি-সিংহ-কর-তলাহত-নিজ-(১) হরিণ-শোণিত-শোণীকৃতমিব রতি-কলহ-কুপিত-রোহিণী-চরণালক্তক-রস-লাঞ্ছিতমিব অভিনবোদয়-রাগলোহিতং (২) রজনীকরম্ (৩) উদিতং বিলোক্য অন্তর্জ্বলিতমদনানলাপ্যন্ধকারিতহৃদয়া, তরলিকোৎসঙ্গ-বিধৃতশরীরাপি মন্মথহস্তবর্ত্তিনী, চন্দ্রগতনয়নাপি মৃত্যুমালোকয়ন্তী তৎক্ষণ-

---

চ যেন তেন। সুরতোৎসবস্য রমণানন্দস্য উপভোগে একযোগ্যঃ সর্ব্বথা সমর্থস্তেন, তেনোঽতিশয়োদ্দীপকত্বাদিতি ভাবঃ। তথা অমৃতময়েন প্রমোদবহুলেন সুধাত্মকেন চ। যৌবনেনেব আরোহতা শরীরং গগনঞ্চ অধিরোহতা শশিনা কর্ত্রা, যামিনী রমণীয়তাম্ অনীয়ত প্রাপ্যত, একত্র স্বাবির্ভাবেন সর্ব্বাঙ্গপূরণাৎ অন্যত্র জ্যোৎস্নয়া প্রকাশাদিতি ভাবঃ। অত্র শশিনো যৌবনসাম্যং শাব্দং যামিন্যা রমণীসাম্যন্ত্বার্থমিতি শ্লিষ্টানুপ্রাণিতা একদেশবিবর্ত্তিন্যুপমালঙ্কারঃ।

(ঙ) অথেতি। অথানন্তরং অভিনবোদয়রাগলোহিতম্, অতএব প্রত্যাসন্নস্য উভয়োরপ্যুদয়াচলনাতিদূরম্ অবস্থিতস্য সমুদ্রস্য পূর্ব্বসাগরস্য বিদ্রুমাণাং প্রবালানাং প্রভাভিঃ পাটলিতম্ আরক্তীকৃতমিব, উদয়গিরৌ যঃ সিংহস্তস্য করতলেন আহতঃ প্রহৃতো যো নিজহরিণঃ স্বক্রোড়বর্ত্তী মৃগস্তস্য শোণিতেন রক্তেন শোণীকৃতমিব রক্তবর্ণীকৃতমিব তথা রতিকলহে কুপিতা যা রোহিণী তদাখ্যা নিজভার্য্যা তস্যাশ্চরণয়োরলক্তকরসেন লাক্ষাদ্রবেণ লাঞ্ছিতমিব চরণপ্রহারাৎ চিহ্নিতমিব, উদিতং তং রজনীকরং চন্দ্রং বিলোক্যাহম্, অন্তর্জ্বলিতমদনানলাপ্যন্ধকারিতহৃদয়েতি বিরোধঃ, অন্ধকারিতহৃদয়া তদুদ্বেগাদুৎফুল্লতারহিতচিত্তেতি সমাধানম্, তরলিকয়া উৎসঙ্গে স্বক্রোড়ে বিধৃতং স্থাপিতং শরীরং যস্যাঃ সা তাদৃশী সত্যপি মন্মথহস্তবর্ত্তিনীতি বিরোধঃ, মন্মথহস্তবর্ত্তিনী কামবশতাপন্নেতি সমাধানম্, তথা চন্দ্রগতনয়নাপি মৃত্যুমালোকয়ন্তীতি বিরোধঃ, পুণ্ডরীকসঙ্গমাভাবে মদনাত্যাচারাদাত্মনো মরণং সম্ভাবয়ন্তীতি সমাধানম্। ঈদৃশী সতী তৎক্ষণমচিন্তয়ম্। অত্র পদার্থহেতুককাব্যলিঙ্গসঙ্কীর্ণাঃ প্রথমাস্তিস্রঃ ক্রিয়োৎপ্রেক্ষাঃ, পরে চ ত্রয়ো বিরোধাভাসা ইত্যেতেষাং পরস্পরনিরপেক্ষতয়া সংসৃষ্টিঃ।

---

রাগসমন্বিত ( অনুরাগযুক্ত, রক্তবর্ণ ), সম্ভোগসুখের একমাত্র যোগ্য ও অমৃতময় (আমোদময়, সুধাময়) এবং অল্প পরিমাণে বালভাব-পরিত্যাগকারী, শরীরারোহী যৌবনের ন্যায় গগনারোহী চন্দ্রমণ্ডল, রাত্রিটীকে মনোহর করিয়া তুলিল।

(ঙ) তাহার পর, নূতন উদয়রাগে রক্তবর্ণ বলিয়া, নিকটবর্ত্তী পূর্ব্বসমুদ্রের প্রবাল-মণির কিরণে রক্তবর্ণের ন্যায়, উদয়াচলস্থিত সিংহের করপ্রহারে নিঃসৃত নিজের ক্রোড়স্থিত হরিণের রক্তে আরক্তীকৃতের ন্যায় এবং সম্ভোগ-বিবাদে কুপিত রোহিণীদেবীর চরণের আলতার রসে রঞ্জিতের ন্যায় উদিত সেই চন্দ্রমণ্ডলটি দেখিয়া, আমার অন্তরে কামানল জ্বলিতে থাকিলেও, হৃদয়ে অন্ধকার ছিল; তরলিকা তাহার ক্রোড়ে আমার শরীর ধারণ করিয়া রাখিলেও, আমি কামদেবের হস্তগত ছিলাম এবং চন্দ্রের উপর দৃষ্টি থাকিলেও, আমি মৃত্যু

---

(১) ক্বচিন্ নিজপদং নাস্তি। (২)...উদয়লোহিতং। (৩) রজনিকরং।

मचिन्तयम्—(श) 'एकत्र खलु मधुमास-(१) मलयमारुतप्रभृतयः समस्ताः, एकत्र चायं पापकारी चन्द्रहतको न शक्यते सोढुम्। इदमतिदुर्विषहमदन-वेदनातुरञ्च (२) मे हृदयम्। अस्य चोद्गमनमिदं सदाहज्वरस्य (३) अङ्गार-वर्षः, शीतार्त्तस्य तुषारपातः, विषस्फोट-(४) मूर्च्छितस्य कृष्णसर्पदंशः,' (ष) इत्येवं चिन्तयन्तीमेव (५) चन्द्रोदयोपनीता कमलवनम्लानिनिद्रेव (६) मूर्च्छा मां निमीलितलोचनामकार्षीत् (स)। अचिरेण च सम्भ्रान्ततरलिकोपनीताभि-श्चन्दनचर्चाभिस्तालवृन्तानिलैश्चोपलब्धसंज्ञा तामेवाकुलाकुलां मूर्त्तेनेवाधिष्ठितां

(श) एकत्रेति। एकत्र एकस्मिन् पक्षे। मदनोद्दीपने मधुमासादीनां सर्वेषां तुल्य एक एवायं चन्द्र इति भावः। अतएव सोढुं न शक्यते। तेन च इदं मे हृदयम् अतिदुर्विषहया मदनवेदनया आतुरं जातमिति शेषः। अस्य च चन्द्रहतकस्य इदमुद्गमनमुदयः, दाहज्वरेण सह विद्यमानस्य सदाहज्वरस्य जनस्य सम्बन्धे अङ्गारवर्षं ज्वलत्काष्ठवृष्टिस्वरूपम्, शीतार्त्तस्य जनस्य सम्बन्धे तुषारपातस्तत्स्वरूपम्, तथा विषस्फोटेन विषवद्वेदनाजनकव्रणविशेषेण मूर्च्छितस्य जनस्य सम्बन्धे कृष्णसर्पदंशो विजातीयविषधरदंशनस्वरूपम्, मदनवेदनार्त्तस्य जनस्य सम्बन्धे पुनरतीववेदनाकरमिति भावः। अत्र "निर्माणकौशलं धातु" रित्यादिदर्पणोदाहृतवत् निरङ्गं मालारूपकमलङ्कारः।

(ष) इत्येवमिति। चन्द्रोदयेन उपनीता उपस्थापिता, कमलवनस्य म्लानिः सङ्कोच एव निद्रा सेव, मूर्च्छा मां निमीलितलोचनां मुद्रितनयनामकार्षीत्। अत्रोपमालङ्कारः।

(स) अचिरेणेति। किञ्च, सम्भ्रान्तया सत्वरया तरलिकया उपनीताभिर्दत्ताभिः चन्दनस्य चर्चाभि-र्लेपनैः, तरलिकाकृतैस्तालवृन्तानिलैश्च, अचिरेणाहम् उपलब्धसंज्ञा सती, आकुलाकुलां सर्वावस्थादशानेव अतीवविह्वलाम्, मूर्त्तेनेव मूर्त्तिमतेव विषादेन अधिष्ठितामाश्रिताम्, मम ललाटे विधात्रा यान्त्यर्थं स्थापिता स्वल्पी

দেখিতেছিলাম—এই অবস্থায় তখন আমি চিন্তা করিতে লাগিলাম। (শ) চৈত্রমাস ও মলয়বায়ু প্রভৃতি সকল উদ্দীপক পদার্থ এক দিকে, আর পাপাচারী খলস্বভাব এই চন্দ্র এক দিকে; সুতরাং ইহাকে আর সহ্য করিতে পারিতেছি না। আমার এই হৃদয়ও, অত্যন্ত দুঃসহ মদন বেদনায় পীড়িত হইতেছে। হায়! এই চন্দ্রের উদয়টা, দাহজ্বর-পীড়িত লোকের পক্ষে অগ্নিসংযুক্ত অঙ্গার-বৃষ্টিস্বরূপ, শীতার্ত্ত ব্যক্তির পক্ষে হিম-পাতস্বরূপ এবং বিস্ফোটের বেদনায় মূর্চ্ছিত লোকের পক্ষে ভয়ঙ্কর সর্পের দংশনস্বরূপ; (ষ) আমি এইরূপ চিন্তা করিতেছিলাম—এমন সময়ে চন্দ্রোদয়নিবন্ধন পদ্মবনের সঙ্কোচ-নিদ্রার ন্যায় মূর্চ্ছা আসিয়া আমার নয়নযুগল মুদ্রিত করিয়া ফেলিল। (স) তখন তরলিকা, সত্বর হইয়া আমার অঙ্গে চন্দন-লেপন ও তালবৃন্তের বায়ুসঞ্চালন করিতে লাগিল, তাহাতে, আমি অচিরকালমধ্যে

(१) मदनमधुमास…। (२) अतिदुर्विषहं मदनातुरञ्च, अतिदुर्विषहमदनातुरञ्च। (३) सदाहज्वरवतः। (४) विषविस्फोटी…। (५) चिन्तयन्तीमेव। (६) म्लानिनिद्रेव।

विधाईन, मल्ललाट-विधृत-स्रवच्चन्द्रकान्तमणिशलाकाम्, अविच्छिन्न-वाष्पजल-धारान्धकारितमुखीं रुदतीं तरलिकामपश्यम् (छ)। उन्मीलितलोचनाञ्च मां सा कृतपादप्रणामा चन्दनपङ्कार्द्रेण करयुगलेन बद्धाञ्जलिरवादीत्---"भर्त्तृदारिके! किं लज्जया गुरुजनापेक्षया वा। प्रसीद, प्रेषय माम्, आनयामि ते हृदयदयितं जनम्, उत्तिष्ठ स्वयं वा तत्र गम्यताम्, अतःपरमसमर्थास्मि सोढुमिमं प्रबल-चन्द्रोदय-विजृम्भमाणोत्कलिकाशतमुदधिमिव मकरध्वजम्" इत्येवं वादिनीं तामहमवोचम्---(१) (ज) 'उन्मत्ते! किं मन्मथेन। मन्वयं सर्वविकल्पानपह-रन्, (२) सर्वोपायदर्शनान्यनुसारयन्, सर्वान्तरायान् (३) अन्तरयन्, सर्वशङ्का-

चन्द्रकरस्पर्शात् जलं स्रवन्ती चन्द्रकान्तमणिशलाका यया तां तथा अविच्छिन्नया वाष्पजलधारया अन्धकारितं सञ्जातान्धकारं मलिनमित्यर्थः मुखं यस्यास्ताम्। अथ मूर्त्तेवेति मूर्त्तिसंयोगिन्नोत्प्रेक्षणाद्गुणोत्प्रेक्षा-लङ्कारः।

(छ) उन्मीलितेति। किञ्च, कृतः पादयोर्मम चरणयोः प्रणामो यया सा, सा तरलिका। चन्दनस्य पङ्केन मदङ्गलेपनकाललग्नेन गाढद्रवेण आर्द्रं तेन। प्रबलः प्रकृष्टो यश्चन्द्रोदयस्तेन विजृम्भमाणं वर्द्धमानम् उत्कलिकाशतम् उत्कण्ठासमूहस्तरङ्गसमूहश्च यस्मिन् तं तादृशम्, उदधिं समुद्रमिव मकरध्वजं ध्वजरूप-लक्षणं यस्य तं मकरकेतुं त्वयि समुत्पन्नं कामम्, सोढुम् असमर्थास्मि। अतएव स्वयं वा तत्र गम्यतामिति भावः। अत्र पूर्णोपमालङ्कारः।

(ज) उन्मत्त इति। हे उन्मत्ते! नानाविधप्रलापादस्य च वास्तविकार्थानवबोधादिति भावः। मन्मथेन किम् एकेन कन्दर्पेण किं कृतमित्यर्थः। नन्वित्यामन्त्रणे। येन हि, मयोः सकाशं तस्मिन्गमने मदनात्या-

সংজ্ঞালাভ করিয়া, সেই তরলিকাকেই রোদন করিতে দেখিলাম, তখন সে, আমার অবস্থা দেখিয়া অত্যন্ত বিহ্বল হইয়া পড়িয়াছিল, বিষাদ যেন মূর্ত্তিমান্ হইয়া তাহার উপরে অধি-ষ্ঠান করিতেছিল, আমার ললাটের উপরিভাগে জলস্রাবী একটি চন্দ্রকান্তমণির শলাকা ধারণ করিয়াছিল এবং অবিচ্ছিন্ন অশ্রুজলের ধারাতে তাহার মুখমণ্ডল মলিন করিয়াছিল। (ক) আমি নয়নযুগল উন্মীলন করিলাম, তখন তরলিকা, আমার চরণে প্রণাম করিয়া, চন্দনের রসে আর্দ্র স্বকীয় হস্তযুগল দ্বারা অঞ্জলি বন্ধন করিয়া আমাকে বলিল—রাজকন্যে! লজ্জা কিংবা গুরুজনের অপেক্ষা করিয়া ফল কি? আপনি প্রসন্ন হউন, আমাকে পাঠাইয়া দিন, আমি আপনার প্রাণবল্লভকে আনয়ন করি, অথবা উঠুন, আপনি নিজেই সেই স্থানে গমন করুন; ইহার পর আপনার এই কামবেদনা আমি আর সহ্য করিতে পারিব না; কারণ—সুস্পষ্ট চন্দ্রোদয়ে সমুদ্রের তরঙ্গের ন্যায় আপনারও উৎকণ্ঠা শতগুণে বৃদ্ধি পাইতেছে" তরলিকা এই-

(१) तामवोचम्। (२) अपाहरन्। (३) क्वचित् सर्वानिति नास्ति।

উপজাতশঙ্কা চাচিন্তয়ম্—'ইদমপরং কিমপ্যুপক্ষিপ্তং দৈবেন,' ইতি। (গ)

অথ নাতিদূরোদ্গতেন ত্রিভুবনপ্রাসাদমহাপ্রণালানুকারিণা সুধাসলিলপ্রবাহানিব (১) বহতা চন্দনরসনির্ঝরনিকরানিব ক্ষরতা অমৃতসাগরপূরানিবোদ্গিরতা শ্বেতগঙ্গাপ্রবাহসহস্রাণীব বমতা চন্দ্রমণ্ডলেন প্লাব্যমানে (২) জ্যোৎস্নয়া ভুবনান্তরালে, (ঘ) শ্বেতদ্বীপনিবাসমিব সোমলোকদর্শনসুখমিবানুভবতি জনে,

---

(গ) উপজাতেতি। কিঞ্চ, উপজাতাশঙ্কং প্রতি প্রস্থিতায়া মে দক্ষিণং লোচনং দুর্নিমিত্তনিবেদকম্ অমঙ্গলসূচকং যথা স্যাত্তথা অস্পন্দত। কিমপি অশুভমিত্যর্থঃ, উপক্ষিপ্তম্ উপস্থাপিতম্, স্ত্রীণাং দক্ষিণনয়নস্পন্দনস্য বন্ধুবিচ্ছেদসূচকত্বাদিতি ভাবঃ।

(ঘ) অথেতি। অথানন্তরং প্রদোষসময এব তস্মাৎ প্রাসাদশিখরাদবাতরমিতি দূরেণান্বয়ঃ। ত্রিভুবনমেব প্রাসাদস্তস্য মহাপ্রণালং বিশালজলনির্গমনমার্গম্ অনুকরোতীতি তেন। সলিলতুল্যশীতলকিরণনিঃসারণাৎ বর্তুলত্বাচ্চ সৌধোপরিপ্রান্তবর্তি বর্তুলাকারপ্রণালানুকারিত্বং চন্দ্রস্যেতি বোধ্যম্। অত্র নিরঙ্গকেবলরূপকোপমযোরেকাশ্রয়ানুপ্রবেশরূপঃ সঙ্করঃ। সুধা সৌধলেপনদ্রব্যং তদ্যুক্তং সলিলমিতি সুধাসলিলং তস্য প্রবাহৌঘান্ বহতেব, তাদৃশশ্বেতকিরণাদিতি সর্বত্র ভাবঃ। চন্দনরসস্য নির্ঝরনিকরান্ ধারাসমূহান্ ক্ষরতেব। অমৃতসাগরস্য সুধাসমুদ্রস্য পূরৌঘান্ উদ্গিরতেব। তথা শ্বেতগঙ্গায়াঃ প্রবাহাণাং সহস্রাণি বমতেব। চন্দ্রমণ্ডলেন কর্ত্রা, জ্যোৎস্নয়া করণেন, ভুবনান্তরালে প্লাব্যমানে সতি। অত্র উৎপ্রেক্ষাচতুষ্টয়স্য চতসৃণাং ক্রিয়োৎপ্রেক্ষাণাং পরস্পরনিরপেক্ষতয়া সংসৃষ্টিঃ। কেবলশুভ্রতাদ্যোতনায় যমুনাজলাদ্যসম্পৃক্তভাগবোধনায় শ্বেতগঙ্গেতি শ্বেতপদম্।

(ঙ) শ্বেতেতি। জনে লোকে, শ্বেতদ্বীপে নিবাসমবস্থিতিমিব, তথা সোমলোকস্য দর্শনসুখমিব অনুভবতি সতি, সর্বশ্বেতানুভবাদিতি ভাবঃ। অত্র ক্রিয়োৎপ্রেক্ষাগুণোৎপ্রেক্ষয়োর্মিথোনিরপেক্ষতয়া সংসৃষ্টিঃ।

---

সেই তরলিকাকেই অবলম্বন করিয়া কোন প্রকারে গাত্রোত্থান করিলাম। (গ) উঠিয়া সেই দিকেই চলিলাম, তখন আমার দক্ষিণ নয়ন স্পন্দিত হইয়া অমঙ্গল সূচনা করিল, তাহাতে আশঙ্কা জন্মিল, তাই চিন্তা করিলাম যে, 'বিধাতা, এই আর একটি কিছু উপস্থিত করিলেন।'

(ঘ) তদনন্তর, চন্দ্রমণ্ডল, আকাশের অনতিদূরে উঠিয়া জ্যোৎস্নাদ্বারা সমস্ত জগতের মধ্যস্থান প্লাবিত করিল; তখন সেই চন্দ্রমণ্ডলটি, ত্রিভুবনরূপ অট্টালিকার উপরিভাগের নর্দ্দামার নলের অনুকরণ করিতেছিল, চূর্ণসংযুক্ত জলধারা যেন বহন করিতেছিল, চন্দনরসের প্রবাহসমূহ যেন নিঃসারণ করিতেছিল, অমৃতসমুদ্রের জলরাশি যেন উদ্গিরণ করিতেছিল এবং শ্বেতগঙ্গার অসংখ্য প্রবাহ যেন বমন করিতেছিল। (ঙ) জগতের লোক যেন শ্বেতদ্বীপে

---

(১)···পূরানিব। (২) আপ্লাব্যমানে।

(ङ) महावराह-दंष्ट्रामण्डलनिभेन शशिना क्षीरसागरोदरादिवोद्धि्रयमाणे मही-मण्डले, (च) प्रतिभवनमङ्गनाजनेन विकचकुमुदगन्धैश्चन्दनोदकैरुपक्षिप्य-माणेषु चन्द्रोदयार्घेषु, (छ) कामिनी-प्रहित-सुरत-दूती-सहस्र-सङ्कुलेषु राज-मार्गेषु, (ज) नीलांशुकावगुण्ठनासु चन्द्रालोकभयचकितासु कमलवनलक्ष्मीष्विव नीलोत्पलप्रभापिहितासु इतस्ततः पलायमानास्वभिसारिकासु, (झ) प्रति-कुमुदमाबद्धमधुकरमण्डलासु प्रबुध्यमानासु भवनदीर्घिकाकुमुदिनीषु (ञ)

---

(ङ) महीति। महीमण्डले, महावराहस्य नारायणस्य तृतीयावतारस्य दंष्ट्रामण्डलनिभेन शुभ्रत्वादिति भावः, शशिना क्षीरसागरस्य उदरादभ्यन्तरादुद्धि्रयमाण इव सति, क्षीरक्षरणवत् सर्वतः श्वेतकिरणप्रसरणादिति भावः। अत्रार्थोपमाक्रियोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः।

(च) प्रतीति। प्रतिभवनं प्रत्येकगृहे अङ्गनाजनेन कर्त्रा, विकचानां प्रस्फुटितानां कुमुदानां गन्धो येषु तैस्तादृशैश्चन्दनोदकैः करणैः, चन्द्रोदयार्घेषु उपक्षिप्यमाणेषु दीयमानेषु सत्सु।

(छ) कामिनीति। राजमार्गेषु, कामिनीभिः प्रहिताः प्रियतमान्तिकेषु प्रेरिता याः सुरतदूत्यस्तासां सहस्रेण समूहेन सङ्कुलेषु व्याप्तेषु सत्सु।

(ज) नीलेति। नीलांशुकैः कृष्णवर्णवसनैः अवगुण्ठनम् अन्धकारसाम्येन तत्र लोकानामदर्शनार्थं शरीरवेष्टनं यासां तासु, अतएव नीलोत्पलानां प्रभाभिः पिहितासु आच्छादितासु कमलवनलक्ष्मीष्विव अभिसारिकासु नायिकाविशेषेषु, चन्द्रस्य आलोकेन प्रकाशेन यद्भयं लोककर्तृकदर्शनाद्भयं तेन चकितासु उद्विग्नासु सतीषु, इतस्ततः पलायमानासु सतीषु,। अत्र पदार्थहेतुककाव्यलिङ्गसङ्कीर्णा श्रौतोपमालङ्कारः। अभिसारिकालक्षणमुक्तं साहित्यदर्पणे—

"अभिसारयते कान्तं या मन्मथवशंवदा। स्वयं वाभिसरत्येषा धीरैरुक्ताभिसारिका।"

(झ) प्रतीति। कुमुदं कुमुदं प्रतीति प्रतिकुमुदम्, आबद्धं धृतं मधुकरमण्डलं भ्रमरसमूहो याभिस्तासु, भवनदीर्घिकायाः कुमुदिनीषु, प्रबुध्यमानासु प्रकाशमानासु सतीषु। अत्र चन्द्रोदयेन समस्तकुमुदिनीनामेव प्रकाशात् भवनदीर्घिकापदोपादानेन अविशेषे विशेषाख्यदोषः, स च भवनदीर्घिकापदपरिहारेणैव परिहरणीयः।

---

বাস করিতেছিল এবং চন্দ্রলোকদর্শনের সুখ যেন অনুভব করিতেছিল। (ঙ) আদিবরাহের দন্তমণ্ডলের তুল্য চন্দ্রমণ্ডল যেন পৃথিবীমণ্ডলকে ক্ষীরোদসাগরের ভিতর হইতে উত্তোলন করিতেছিল। (চ) প্রত্যেক গৃহে রমণীগণ, প্রস্ফুটিত-কুসুম-যুক্ত চন্দনজলদ্বারা চন্দ্রোদয়ের উদ্দেশে অর্ঘ দান করিতেছিল। (ছ) রাজপথগুলি কামিনীগণের প্রেরিত রতিদূতীগণে ব্যাপ্ত হইয়াছিল। (জ) অভিসারিকা নায়িকাগণ, নীলবর্ণ বসনে সমস্ত শরীর আবৃত করিয়া, নীলোৎপলের প্রভায় আচ্ছাদিত পদ্মবনের শোভার ন্যায় বিরাজ করিতে থাকিয়া, চন্দ্রের আলোকমধ্যে লোকের দর্শনের ভয়ে উদ্বিগ্ন হইয়া চারিদিকে পলায়ন করিতে লাগিল। (ঝ) বাটীস্থিত দীর্ঘিকার কুমুদিনীগুলি প্রস্ফুটিত হইল, তাহাতে

स्फुटित-कुमुदवन-बहल-धूलि-धवलितोदरे निशा-नदी-पुलिनायमाने अन्तरीक्षे, (१) (ट) चन्द्रोदयानन्दनिर्भरे महोदधाविव रतिरसमय इव उत्सवमय इव विलासमय इव प्रीतिमय इव जीवलोके, (ठ) शशिमणिप्रणाल-निर्झरे प्रमोद-मुखर-मयूर-रव-रम्ये प्रदोषसमये, (ड) गृहीत-विविध-कुसुम-ताम्बूलाङ्गराग-पटवास-चूर्णया तरलिकयानुगम्यमाना, तेनैव मूर्च्छा-निहितेन किञ्चिदाश्याम-चन्दन-ललाटिका-लग्न-धूसरा-कुलालकेन अन्तरस-

(ट) स्फुटितेति । अन्तरीक्षे आकाशे, स्फुटितस्य कुमुदवनस्य बहलधूलिभिः प्रचुरपरागैः धवलितं शुभ्रीकृतम् उदरमभ्यन्तरं यस्य तस्मिन् तादृशे सति, अतएव निशैव नदी नीलत्वसाम्यादिति भावः, तस्याः पुलिनायमाने तोयोत्थितवालुकामयदेशवदाचरति सति परागाणां वालुकावद्धवलत्वादिति भावः । अत्र पदार्थहेतुकं काव्यलिङ्गं निरङ्गकेवलरूपकक्यङ्गतोपमयोरेकाश्रयानुप्रवेशरूपः सङ्करस्त्वनयोः पुनरङ्गाङ्गिभावेन सङ्करः ।

(ठ) चन्द्रोदयेति । चन्द्रस्य उदयेन आनन्दनिर्भरः प्रमोदातिशयो यस्मिन् तादृशे, अतएव महोदधाविव स्फीते इति शेषः, जीवलोके प्राणिगणे, रतिरसमये इव शृङ्गारमये इव, उत्सवमये इव, विलासमये इव तथा प्रीतिमये इव च सति । अत्र पदार्थहेतुककाव्यलिङ्गोपमयोरङ्गाङ्गिभावेन सङ्करः, अनयो गुणोत्प्रेक्षायाश्च उत्प्रेक्षाणां मिथोनिरपेक्षतया पुनः संसृष्टिः, तथा रतिरसेति स्थायिभावस्य स्वशब्दोक्तिदोषः रसस्य स्वशब्दोक्तिदोषश्च, तौ च उत्कण्ठामय इवेति पाठेन समाधेयौ ।

(ड) शशीति । शशिमणयश्चन्द्रकिरणस्पर्शेन जलस्राविणश्चन्द्रकान्ता एव प्रणाला जलनिर्गमनालानि तेषां निर्झरो यस्मिन् तादृशे, तथा प्रमोदेन मुखराणां शब्दायमानानां मयूराणां रवैः रम्ये मनोहरे प्रदोषसमये जाते सति । अत्र निरङ्गकेवलरूपकमलङ्कारः ।

(ढ) गृहीतेति । गृहीतानि विविधानि कुसुमानि ताम्बूलानि अङ्गरागः पटवासचूर्णानि च यया तया । मूर्च्छानिहितेन मूर्च्छाकाले तरलिकया दत्तेन । किञ्चिदाश्याना कालेन शुष्कतया ईषद्घनीभूता या चन्दनस्य ललाटिका ललाटे तिलकविशेषस्तत्र लग्ना अतएव धूसराः, आकुला विकीर्णा अलका चूर्णकुन्तला

প্রত্যেক কুমুদের উপর ভ্রমরগণ আসিয়া বসিতে লাগিল। (ট) প্রস্ফুটিত কুমুদের রেণুতে আকাশের মধ্যস্থান ধবলবর্ণ করিয়া তুলিল, তাহাতে আকাশটি, রাত্রিরূপ নদীর পুলিনের ন্যায় বিরাজ করিতে লাগিল। (ঠ) চন্দ্রের উদয়ে আনন্দে পরিপূর্ণ প্রাণিগণ, মহাসমুদ্রের ন্যায় স্ফীত হইয়া, যেন শৃঙ্গারময়, উৎসবময়, বিলাসময় এবং হর্ষময় হইয়া উঠিল। (ড) চন্দ্রকান্তমণিরূপ পয়ঃনালা হইতে জল-নিঃসরণ হইতে লাগিল, এই ভাবে—আমোদবশতঃ শব্দায়মান ময়ূরগণের রবে মনোহর হইয়া প্রদোষকাল উপস্থিত হইল। (ঢ) এমন সময়ে আমি, পদ্মরাগমণির কিরণে নির্ম্মিতের ন্যায় একখানি রক্তবর্ণ বসনে মস্তক অবগুণ্ঠন করিয়া সেই অট্টালিকার উপর হইতে নামিলাম; তখন তরলিকা নানাবিধ পুষ্প, তাম্বূল, অঙ্গলেপনদ্রব্য ও আবীর-চূর্ণ লইয়া আমার পশ্চাৎ পশ্চাৎ আসিতে লাগিল। তরলিকা, আমার ললাটে যে

(१) अन्तरिक्षे ।

ঙ্গাঙ্গরাগবৈশসেনার্দ্রেণ, (১) তথৈব চ তয়া কণ্ঠস্থিতয়াক্ষমালয়া শ্রবণশিখর-চুম্বিন্যা চ পারিজাতমঞ্জর্য্যা, পদ্মরাগরত্নরশ্মিনির্ম্মিতেনেব রক্তাংশুকেন কৃতশিরো ঽবগুণ্ঠনা কেনচিদাত্মীয়েনাপি পরিজনেনানুপলক্ষ্যমাণা তস্মাৎ প্রাসাদশিখরাদ-বাতরম্। (ঢ)

অবতীর্য্য চ পারিজাতকুসুম-মঞ্জরী-পরিমলাকৃষ্টেন রিক্তীকৃতোপবনেন কুমুদ-বনান্যপহায় ধাবতা মধুকরজালেন নীলপটাবগুণ্ঠনবিভ্রমমিব (২) সম্পাদ-যতানুবধ্যমানা প্রমদবনপক্ষদ্বারেণ নির্গত্য তৎসমীপমুদচলম্। (ণ)

প্রয়ান্তী চ তরলিকাদ্বিতীয়মপরিজনম্ (৩) আত্মানমালোক্য (৪) অচিন্তয়ম্,

---

বন তেন। আর্দ্রেণ তদানীমপি কিঞ্চিৎ ক্লিন্নেন। চন্দনরসস্য যচ্চর্চা লেপনমিবাঙ্গরাগঃ স এব চ বেশস্তেন উপলক্ষিতা। কিঞ্চ, তথৈব তদানীং দৃষ্টরূপেণৈব, কণ্ঠস্থিতয়া অক্ষমালয়া তস্য কুমারস্য জপমালয়া চোপ-লক্ষিতা। তথা শ্রবণশিখরচুম্বিন্যা কর্ণোপরিবর্ত্তিন্যা, তয়া পারিজাতমঞ্জর্য্যা চোপলক্ষিতা। তথা পদ্মরাগরত্নস্য রশ্মিভিঃ কিরণৈর্নির্ম্মিতেনেব, রক্তত্বসাম্যাদিতি ভাবঃ, রক্তাংশুকেন কৃতং শিরসঃ অবগুণ্ঠনং যয়া সা। অত্র ক্রিয়োৎপ্রেক্ষালঙ্কারঃ।

(ণ) অবেতি। পারিজাতকুসুমমঞ্জর্য্যাঃ পরিমলেন সৌরভেণ আকৃষ্টেন। রিক্তীকৃতং সর্ব্বেষামেবা-গমনাৎ শূন্যীকৃতম্ উপবনং যেন তেন। নীলপটেন যদবগুণ্ঠনং তস্য বিভ্রমং বিলাসং শোভাং সম্পাদয়তেব, মস্তকোপরিভ্রমণাদিতি ভাবঃ, মধুকরজালেন ভ্রমরসমূহেন, অনুবধ্যমানা অনুগম্যমানা অহম্, প্রমদবনস্য অন্তঃপুরোপবনস্য পক্ষদ্বারেণ পার্শ্বদ্বারেণ নির্গত্য, তস্য কুমারস্য সমীপম্ উদচলং প্রস্থিতবতী। অত্রাপি ক্রিয়োৎপ্রেক্ষালঙ্কারঃ।

(ত) প্রয়ান্তীতি। তরলিকৈব দ্বিতীয়া যস্য তম্, অতএব অপরিজনম্ অন্যপরিজনবর্জ্জিতম্। অত্র

---

চন্দনের টিপ দিয়াছিল, তখন তাহা কিছু ঘন হইয়া গিয়াছিল, সুতরাং আলুলায়িত কেশ-কলাপ তাহার উপরে সংলগ্ন হইয়া ধূসরবর্ণ হইয়াছিল; আর মূর্চ্ছার সময়ে আমার শরীরে তরলিকা, যে চন্দন লেপন করিয়া দিয়াছিল, তখনও তাহা আর্দ্র ছিল এবং সেই মাত্র আমার বেশবিন্যাস হইয়াছিল; সেই জপের মালা তখনও সেই ভাবেই আমার গলায় ছিল এবং সেই পারিজাতমঞ্জরীটিও সেই ভাবেই আমার কাণের উপরে ছিল; আমি নামিলাম বটে, কিন্তু আমার কোন পরিজনও আমাকে দেখিতে পাইল না।

(ণ) আমি নামিয়া, উদ্যানের পার্শ্ব-দ্বার দিয়া নির্গত হইয়া তাঁহার নিকট চলিলাম; তখন ভ্রমরগণ, পারিজাতপুষ্প-মঞ্জরীটির সৌরভে আকৃষ্ট হইয়া, উদ্যানটি শূন্য করিয়া এবং কুমুদবন পরিত্যাগ করিয়া, নীলবর্ণ বসনের অবগুণ্ঠন-শোভাই যেন সম্পাদন করিতে করিতে আমারই পশ্চাৎ পশ্চাৎ আসিতে লাগিল।

(ত) আমি যাইবার সময়ে, আপনাকে কেবল তরলিকা-সহায় ও অন্য-পরিজন-বিহীন

---

(১) আর্দ্রার্দ্রেণ। (২)…বিভ্রমানিব। (৩) তরলিকাদ্বিতীয়পরিজনম্। (৪) অবলোক্য।

—'প্রিয়তমাভিসরণপ্রবৃত্তস্য জনস্য কিমিব কৃত্যং বাহ্যেন পরিজনেন (ত)। নন্বেত এব পরিজনলীলামুপদর্শয়ন্তি। তথাহি, সমারোপিতশরাসনাহিত-সায়কোঽনুসরতি কুসুমায়ুধঃ, দূরপ্রসারিতকরঃ করমিব কর্ষতি শশী, প্রস্খলন-ভয়াৎ পদে পদেঽবলম্বতে রাগঃ, লজ্জাং পৃষ্ঠতঃ কৃত্বা পুরঃ সহেন্দ্রিয়ৈর্ধাবতি হৃদয়ম্, নিশ্চয়মারোপ্য নয়ত্যুৎকণ্ঠা' ইতি (থ)। প্রকাশঞ্চাবদম্—'অয়ি তরলিকে! অপি নাম মামিবায়মিন্দুহতকস্তমপি করেণ (১) কচগ্রহাকৃষ্টমভিমুখমান-

উদচলমিত্যভিধায় প্রয়ান্তীত্যভিধানাৎ ''এবমুক্তো মন্ত্রিমুখ্যৈ রাবণঃ প্রত্যভাষত।'' ইতি দর্পণোদাহৃত-বদ্ভগ্নপ্রক্রমতাদোষঃ, স চ 'প্রাসাদশিখরাদবাতরম্। অবতীর্য্য চ' ইত্যুক্তবৎ প্রয়ান্তীত্যত্র 'উচ্চলন্তী' ইতি পাঠেন সমাধেয়ঃ। প্রিয়তমস্য প্রিয়তমায়া বা অভিসরণে প্রবৃত্তস্য জনস্য নায়িকায়া নায়কস্য বা, বাহ্যেন বহিরঙ্গেন পরিজনেন কিং নাম কৃত্যং কর্ত্তব্যং প্রয়োজনমস্তি, অপি তু কিমপি নেত্যর্থঃ।

(থ) ননু তর্হি রক্ষণাবেক্ষণাদিকং পরিজনকার্য্যং কৈঃ কর্ত্তব্যমিত্যাহ নন্বিতি। নন্বিত্যবধারণে। এতে বক্ষ্যমাণাঃ কুসুমায়ুধাদয়ঃ পরিজনস্য লীলাং ব্যবহারম্। সমারোপিতশরাসনে সজ্যে ধনুষি আহিতঃ সায়কো যস্য স তাদৃশঃ কুসুমায়ুধঃ, অনুসরতি। এতেনাস্য পৃষ্ঠরক্ষিত্বং সূচিতম্। দূরে প্রসারিতঃ করঃ কিরণো হস্তশ্চ যেন স তাদৃশঃ শশী করং কর্ষতীব হস্তমাকৃষ্য নয়তীব। অত্র ক্রিয়োৎপ্রেক্ষালঙ্কারঃ। রাগোঽনুরাগঃ প্রস্খলনভয়াৎ পদে পদে প্রতিপদক্ষেপম্ অবলম্বতে ধারয়তি। অনয়োঃ পার্শ্বরক্ষিত্বং ধ্বনিতম্। হৃদয়ং কর্ত্তৃ, লজ্জাং পৃষ্ঠতঃ কৃত্বা পৃষ্ঠে সমাদায় দূরীকৃত্য চ ইন্দ্রিয়ৈর্নয়নাদিভিঃ সহ পুরঃ অগ্রতো ধাবতি, তথা নিশ্চয়মারোপ্য ধ্রুবং তব প্রিয়সমাগমো ভবিষ্যতীতি নিশ্চয়বুদ্ধিমুৎপাদ্য নয়তি। অনয়োঃ সম্মুখরক্ষিত্বং প্রতিপাদিতম্।

(দ) প্রকাশমিতি। অপি নাম অয়মিন্দুহতকঃ খলস্বভাবশ্চন্দ্রঃ মামিব তমপি কুমারং করেণ কিরণে-নৈব পাণিনা, কচেষু কেশেষু যো গ্রহো গ্রহণং তেন আকৃষ্টং সন্তং মমাভিমুখমানয়েৎ। তথা সতি মদ্বরলাভেন ভদ্রং ভবেদিতি ভাবঃ। অত্র কিরণহস্তয়োর্ভেদেঽপি শ্লেষেণাভেদাধ্যবসায়াদতিশয়োক্ত্যলঙ্কারঃ।

দেখিয়া চিন্তা করিতে লাগিলাম—যে ব্যক্তি, বল্লভজনের নিকট অভিসারে প্রবৃত্ত হয়, তাহার আবার বাহিরের পরিজনে প্রয়োজন কি?। (থ) কারণ—ইহারাই পরিজনের কার্য্য-সম্পাদন করিয়া থাকেন। যথা,—কামদেব, সজ্য ধনুতে বাণ সন্ধান করিয়া অনুসরণ করিতে থাকেন; চন্দ্র, দূরে কর প্রসারিত করিয়া হস্তধারণ করিয়াই যেন নিয়া যাইতে থাকেন; পড়িয়া যাইবার ভয়ে, অনুরাগ আসিয়া প্রত্যেক পদক্ষেপে ধারণ করিতে থাকে; মন, লজ্জাকে পিছনে রাখিয়া অন্যান্য ইন্দ্রিয়ের সহিত অগ্রে অগ্রে ধাবিত হইতে থাকে এবং 'নিশ্চয়ই প্রিয়তমের সহিত সম্মিলন হইবে' এইরূপ নিশ্চয় ধারণা জন্মাইয়া উৎকণ্ঠা আসিয়া নিয়া যাইতে থাকে।' (দ) তাহার পর প্রকাশ করিয়া কহিলাম—'তরলিকে! এই খলস্বভাব চন্দ্র, আমার ন্যায় তাঁহাকেও করদ্বারা কেশধারণপূর্ব্বক আকর্ষণ করিয়া আমার দিকে কিছু

(১) কিরণে…।

येत्" (द)। इत्येवंवादिनीञ्च मामसौ विहस्याब्रवीत्—"भर्त्तृदारिके! मुग्धासि, किमस्य तेन जनेन। अयमात्मनैव तावन्मदनातुर इव भर्त्तृदारिकायां (१) तास्ताश्चेष्टाः करोति। तथाहि प्रतिबिम्बच्छलेन स्वेदसलिलकणिकाचितम् (२) चुम्बति कपोलयुगलम्, लावण्यवति पयोधरभारे निपतति, प्रस्फुरितकरः स्पृशति रसनावलिमणीन्, निर्म्मल-नख-लग्नमूर्त्तिः पादयोः पतति (ध)। किञ्चास्य मदनातुरस्येव वपुस्तापाच्छुष्कचन्दनानुलेपपाण्डुतां वहति, ३। मृणालवलयधवलान् करान् धत्ते, प्रतिमाव्याजेन स्फटिकमणिकुट्टिमेषु निपतति,

(ध) इतीति। असौ तरलिका। मुग्धा सरलबुद्धिरसि, अतएवैवं ब्रवीषीति भावः। अस्य चन्द्रस्य, तेन जनेन कुमारेण किं प्रयोजनम्। अयं चन्द्रः, आत्मनैव स्वयमेव। तास्ता मदनातुरसम्बन्धिनीः सर्वाः, चेष्टा व्यवहारान् करोति। स्वेदसलिलकणिकाचितं घर्म्मजलबिन्दुव्याप्तं तव कपोलयुगलं प्रतिबिम्बच्छलेन चुम्बतीव। अत्र सापह्नवा प्रतीयमाना क्रियोत्प्रेक्षालङ्कारः। ननु कार्य्येण कामुकव्यवहारसमारोपेऽपि समासोक्तिः, अयमात्मनैव तावदित्यादिना द्वयोरपि प्रस्तुतत्वात् प्रस्तुते अप्रस्तुतव्यवहारसमारोपस्यैव समासोक्ति-विषयत्वात्। लावण्यवति पयोधरभारे तव विस्तृतस्तनयुगले निपतति प्रतिबिम्बच्छलेन लगतीव, बलसा नाय-कवदिति भावः। अत्रापि पूर्ववदलङ्कारः। प्रस्फुरितः प्रदीप्तः सात्त्विकभावोदयात् प्रकम्पितश्च करः किरणो हस्तश्च यस्य स तादृशः सन्, रसनावलेः काञ्चीदाम्नः मणीन् स्पृशति, नीवीस्खलनसमये नायकवदिति भावः। अत्र किरणहस्तयोर्भेदेऽपि श्लेषेणाभेदाध्यवसायादतिशयोक्तिरलङ्कारः। तथा निर्म्मलेषु नखेषु तव चरणनखेषु लग्ना संक्रान्ता मूर्त्तिर्यस्य स तादृशः सन् तव पादयोः पततीव, अपराद्धनायकवदिति भावः। अत्र प्रतीयमाना क्रियोत्प्रेक्षालङ्कारः।

(न) किञ्चेति। किञ्च अपि च। मदनातुरस्येव अस्य चन्द्रस्य वपुः कर्त्तृ, तापात् मदनसन्तापादिव, शुष्को यश्चन्दनस्य अनुलेपः प्रलेपस्तद्वत् पाण्डुतां वहति धारयति। अत्रोपमासङ्कीर्णा प्रतीयमाना हेतूत्प्रेक्षा-

পথ আনিবে কি ?' (ধ) আমি এইরূপ বলিতেছিলাম, তখন তরলিকা হাস্য করিয়া আমাকে বলিল—"রাজকন্যে ! আপনি সরলবুদ্ধি কি না, তাই এইরূপ বলিতেছেন ; প্রকৃতপক্ষে সেই ব্যক্তি দ্বারা চন্দ্রের প্রয়োজন কি ? চন্দ্র যে, নিজেই কামাতুরের ন্যায় আপনার প্রতি সেই সকল ব্যবহার করিতেছে। দেখুন—ঘর্ম্ম-জল-বিন্দু-সমূহে ব্যাপ্ত আপনার গণ্ডযুগলকে প্রতিবিম্বচ্ছলে যেন চুম্বন করিতেছে, লাবণ্যযুক্ত স্তনমণ্ডলে যেন লাগিয়া পড়িতেছে, প্রস্ফুরিত-করে আপনার কাঞ্চীদামের মণিগুলিকে স্পর্শ করিতেছে এবং আপনার নির্ম্মল নখসমূহে লগ্নদেহ হইয়া চরণযুগলেই যেন পতিত হইতেছে। (ন) বিশেষতঃ কামাতুরের ন্যায় চন্দ্রের শরীরটা, কাম-সন্তাপবশতই যেন চন্দনের শুষ্ক প্রলেপের ন্যায় পাণ্ডুবর্ণ বহন করিতেছে, মৃণাল-বলয়ের ন্যায় শুভ্রবর্ণ কিরণ ধারণ করিতেছে। প্রতিবিম্বচ্ছলে স্ফটিকময় ভূমিতে লুণ্ঠিত হইতেছে, কেতকী পুষ্পের অভ্যন্তরস্থ কেসরের ন্যায় ধূসরবর্ণ চরণ হইয়া প্রতিবিম্বচ্ছলে

(१) भर्त्तृदारिकायाः। (२)···अञ्चितम्। (३) भजति।

केतकी-गर्भ-केसर-धूसर-पादः कुमुद-सरांस्यवगाहते, सलिलशीकरार्द्रान् शशि-मणीन् करैरामृशति, द्वेष्टि विघटितचक्रवाकमिथुनानि कमलवनानि। एतै-श्चान्यैश्च तत्कालोचितैरालापैस्तया सह तमुद्देशमभ्युपागमम्। (न)

तत्र च मार्ग-लता कुसुम-रजोधूसरं चरणयुगलं कैलासतटाच्चन्द्रोदय-प्रस्नुत-(१) चन्द्रकान्तमणिप्रस्रवणे प्रक्षालयन्ती, (२) यस्मिन् प्रदेशे स आस्ते तस्मिन्नेव चास्य सरसः पश्चिमे तटे पुरुषस्येव रुदितध्वनिं विप्रकर्षान्नातिव्यक्त-

---

लङ्कारः। मृणालवलयवत् धवलान् मृणालवलयेन धवलान्, करान् किरणानेव हस्तान् धत्ते, मदनसन्तापज-त्वादिति भावः। अत्र किरणहस्तयोर्भेदेऽपि श्लेषेणाभेदाध्यवसायादतिशयोक्तिरलङ्कारः। प्रतिमाव्याजेन प्रतिबिम्ब-च्छलेन, स्फटिकमणीनां कुट्टिमेषु बद्धभूमिषु निपतति लुठति, मदनातुरवत् सन्तापनिवृत्त्यर्थमिति भावः। अत्रापह्नुतिरलङ्कारः। केतक्याः पुष्पस्य गर्भकेसरवत् अभ्यन्तरस्थकिञ्जल्कवत् धूसरः पादः किरण एव चरणो यस्य स तादृशः, प्रतिमाव्याजेन कुमुदसरांसि कैरवपूर्णसरोवरान् अवगाहते मदनसन्तापशान्त्यर्थमिति भावः। अत्र अपह्नुतिरलङ्कारः पूर्ववदतिशयोक्तिश्च, अनयोरङ्गाङ्गिभावेन सङ्करः। मदनतापेन चरणस्यापि पाण्डुता जातेति प्रदर्शनार्थं केतकीत्यादिविशेषणमिति नापुष्टार्थतादोषः। सलिलशीकरैः स्वस्पर्शेन निःसृतजल-बिन्दुभिः आर्द्रान् क्लिन्नांस्तान् शशिमणीन् चन्द्रकान्तान् करैः किरणैरेव हस्तैः आमृशति स्पृशति, मदनताप-निवृत्त्यर्थमिति भावः। अत्राप्यभेदाध्यवसायमूलातिशयोक्तिरलङ्कारः। तथा विघटितानि रात्रिवियोगस्य नैसर्गि-कत्वाद्वियुक्तानि चक्रवाकाणां पक्षिणां मिथुनानि दम्पतयः येभ्यस्तानि तादृशानि कमलवनानि, द्वेष्टि एभिरेव कमलवनैश्चक्रवाकमिथुनानि विघटितानीति मन्यमानस्तानि सङ्कोचयन् तेषु विद्वेषं करोतीव, ये किल प्रिय-तमयोः कण्ठलग्नं न सहन्ते तान् प्रति सम्मिलनेच्छोः कामार्तस्य विद्वेषो युज्यत एवेति भावः। अत्र प्रतीयमाना क्रियोत्प्रेक्षालङ्कारः। तमुद्देशं तेन कुमारेणाध्यासितपूर्वं प्रदेशम् अभिलक्ष्यीकृत्य उपागमम्।

(प) तत्रेति। किञ्च। कैलासतटात् चन्द्रकान्तमणिमयादित्यर्थः, चन्द्रोदयेन प्रस्नुतं गलितं यच्चन्द्र-कान्तमणीनां प्रस्रवणं निर्झरस्तस्मिन्, मार्गे पथि यानि लताकुसुमानि तेषां रजोभिः परागैर्धूसरं स्वकीयं चरणयुगलं प्रक्षालयन्ती अहम्। स कुमारः। अस्य सरसः अच्छोदस्य। विप्रकर्षाद्दूरत्वात् नातिव्यक्ताम् अनतिं-स्पष्टं रुदितध्वनिं रोदनशब्दम्, उपालक्षयम् अशृणवम्।

---

কুমুদপূর্ণ সরোবরে অবগাহন করিতেছে, জলকণাতে আর্দ্র চন্দ্রকান্তমণির উপরে হস্ত আম-র্শন করিতেছে এবং রাত্রি উপস্থিত হওয়ায় চক্রবাকদম্পতিগণ, যে পদ্মবনের নিকট হইতে চলিয়া গিয়াছে, সেই পদ্মবনগুলিকে যেন বিদ্বেষ করিতেছে।' এই প্রকার এবং সেই সময়ের উপযুক্ত অন্যান্য অনেক প্রকার আলাপ করিতে করিতে তরলিকার সহিত সেই স্থান লক্ষ্য করিয়া চলিলাম।

(প) সেখানে চন্দ্রের উদয়ে, কৈলাস পর্ব্বতের শৃঙ্গ হইতে চন্দ্রকান্তমণির জল নিঃসৃত হইতেছিল, এদিকে পথের লতাজাত কুসুমের রেণুতে আমার চরণযুগল ধূসরবর্ণ হইয়া গিয়া-

---

(१)…प्रस्नुत…। (२) क्षालयन्ती।

मुपाक्षालयम् (प)। दक्षिणेतरचक्षुःस्फुरणेन च प्रथममेव ममस्याहितशङ्का, तेन सुतरामवदीर्णहृदयेव किमप्यनिष्टमन्तः कथयतेव विषण्णेनान्तरात्मना "तरलिके! किमिदम्" इति सभयमभिदधाना वेपमानगात्रयष्टिस्तदभिमुखम् (१) अतित्वरितमगच्छम्। (फ)

अथ निशीथप्रभावाद्दूरादेव विभाव्यमानस्वरमुन्मुक्तार्त्तनादम् "हा हतोऽस्मि, हा दग्धोऽस्मि, हा वञ्चितोऽस्मि, हा किमिदमापतितम्, किं वृत्तम्, उत्सन्नोऽस्मि, (२)। दुरात्मन्! मदनपिशाच! पाप! निर्घृण! किमिदमकृत्यमनुष्ठितम्? आः पापे! दुष्कृतकारिणि! दुर्विनीते! महाश्वेते! किमनेन

---

(फ) दक्षिणेति। किञ्च। दक्षिणेतरचक्षुःस्फुरणेन दक्षिणनयनस्पन्दनेन, आहिता उत्पादिता शङ्का आनङ्को यस्याः सा अहम्, तेन रुदितध्वनिना सुतरामत्यन्तम् अवदीर्णहृदयेव सती। ईदृशेनान्तरात्मना कारणेन सभयमभिदधाना। वेपमाना कम्पमाना गात्रयष्टिर्यष्टिवत् कृशं शरीरं यस्याः सा।

(ब) अथेति। निशीथप्रभावात् रात्रिप्रभावेण सर्वेषामापि निःशब्दत्वादित्यर्थः। "निशीथस्तु पुमानर्द्धरात्रे स्यात् रात्रिमात्रके।" इति मेदिनी। केचित्तु अर्द्धरात्रप्रभावादिति व्याचक्षते, तदसत् प्रदोषसमये निर्गताया महाश्वेतायाः कियन्मात्रपथातिक्रम एवार्द्धरात्रासम्भवात्। दूरादेव विभाव्यमानः अयं कपिञ्जलस्य स्वर इत्थं परिचीयमानः स्वरो यस्य तम्, उन्मुक्तार्त्तनादम्, इत्येतानि चान्यानि च विलपन्तं कपिञ्जलमश्रौषमिति परेणान्वयः। हतोऽस्मि दैवेन। दग्धोऽस्मि शोकानलेन। वञ्चितोऽस्मि विधात्रा। आपतितम् उपस्थितम्। वृत्तं जातम्। उत्सन्नो दैवेन मूलादुत्खातोऽस्मि। निर्घृण! निर्द्दय! अकृत्यमकार्य्यम्। अनेन पुण्डरीकेण

---

ছিল, সুতরাং সেই জলে চরণযুগল প্রক্ষালন করিতেছিলাম;—এমন সময়ে, তিনি যে স্থানে ছিলেন, অচ্ছোদ সরোবরের সেই পশ্চিমতীরে, দূরত্বনিবন্ধন অস্পষ্ট কোন পুরুষের যেন রোদনধ্বনি শুনিতে পাইলাম। (ফ) এদিকে প্রথমেই দক্ষিণ-চক্ষু স্পন্দিত হইয়া আমার মনে আশঙ্কা জন্মাইয়াছিল, সুতরাং আবার সেই রোদনধ্বনি শুনায় হৃদয় যেন বিদীর্ণ হইয়া গেল এবং অন্তরাত্মা বিষণ্ণ হইয়া মনের নিকট যেন কোন বিপদের সংবাদ বলিতে লাগিল, তখন আমি ভয়ের সহিত বলিলাম—'তরলিকে! এ ব্যাপারটা কি'; আমার কিন্তু শরীর কাঁপিতে লাগিল—এই অবস্থায় আমি অতি তাড়াতাড়ি সেই দিকে যাইতে লাগিলাম।

(ব) তদনন্তর, রাত্রির নিস্তব্ধতাবশতঃ দূর হইতেই স্বর শুনিয়া বুঝিতে পারিয়াছিলাম যে, কপিঞ্জল উন্মুক্ত কণ্ঠে আর্ত্তনাদ করিতেছেন—"হায়! মরিলাম, হায়! কপাল পুড়িল, হায়! বঞ্চিত হইলাম, হায়! একি উপস্থিত হইল, কি ঘটিল, এ যে একেবারে উৎসন্ন হইলাম। দুরাত্মন্! মদনপিশাচ! পাপিষ্ঠ! নির্দ্দয়! এ কি অকার্য্য অনুষ্ঠান করিলি? আ পাপিষ্ঠে! পাপকারিণি! দুর্বিনীতে! মহাশ্বেতে! এ, তোর কি অপকার করিয়াছিল?

(১) कञ्चित् कुत्रचिन्नास्ति। (२) उच्छिन्नोऽस्मि।

तेऽपकृतम् ? आः पाप ! दुश्चरित ! चन्द्र ! चाण्डाल ! (१) कृतार्थोऽसि ?, इदानीमपगतदाक्षिण्य ! दक्षिणानिलहतक ! पूर्णास्ते मनोरथाः, कृतं यत् कर्त्तव्यम् ? (२) वहेदानीं यथेष्टम् (ब) हा भगवन् ! श्वेतकेतो ! पुत्रवत्सल ! न वेत्सि मुषितमात्मानम्, हा धर्म्म ! निष्परिग्रहोऽसि, हा तपः ! निराश्रयमसि, हा सरस्वति ! विधवासि, हा सत्य ! अनाथमसि, हा सुरलोक ! शून्योऽसि (भ) सखे ! प्रतिपालय माम्, अहमपि भवन्तमनुयास्यामि, न शक्नोमि भवन्तम् (३) विना क्षणमप्यवस्थातुमेकाकी । कथमपरिचित इवादृष्टपूर्व इवाद्य मामेकपदे उत्सृज्य प्रयासि, कुतस्तवेयमतिनिष्ठुरता, कथय त्वदृते क्व गच्छामि, कं याचे,

ते तव किमपकृतम, यस्त्वमेव निमित्तीभूय एनं व्यापादितवतीति भावः । चाण्डाल ! चाण्डालतुल्यातिनृशंस ! । कृतार्थोऽसि पुण्डरीकस्य मृत्युविधानादिति भावः । इदानीं न तु पूर्वमिति भावः, अपगतं दाक्षिण्यं यस्य तत्सम्बोधनम्, खलस्वभाव दक्षिणवायो ! । अत्र दाक्षिण्यशब्दस्य दक्षिणदिग्वर्त्तित्वार्थकत्वे विरोधात् औदार्य्यार्थकत्वे च तत्समाधानाद्विरोधाभासोऽलङ्कारः । इदानीं यथेष्टम् इच्छानुसारेण वह सञ्चर ।

(भ) हेति । आत्मानं मुषितं दैवेनापहृतसर्वस्वं न वेत्सि न जानासि । निष्परिग्रहः स्वीकारो यस्य स तादृशोऽसि, त्वमितः परं कस्य परिग्रहं कुर्य्या इति भावः । विधवासि पत्युः पुण्डरीकस्य मरणादिति भावः । एतेनास्य वाचस्पतित्वं ध्वनितम् । सुरलोक ! स्वर्ग ! ।

(म) सखे इति । प्रतिपालय प्रतीक्षस्व । एकपदे सहसा । "तत्क्षणे स्यादेकपदे तूर्णम्" इति हलायुधः । उत्सृज्य परित्यज्य । त्वदृते त्वां विना । शरणमुपैमि रक्षकं लभे । अन्धोऽस्मि त्वच्छोकजनितमोहेन दृष्टिशक्तिलोपादिति भावः । शून्या इत्यादौ सर्वत्र तवाभावादिति भावः । लोकास्त्रीण्यपि भुवनानि, निर्मं विदधति सुखं येषु ते तादृशा जाता इति शेषः । स्मितपूर्वम् अभिभाषितुं शीलं यस्य स तथोक्तस्तस्य भावः सा । स्नुधातोः आर्द्रत्वेऽपि शक्ति मुख्यता न यायिकानां मते परिचितस्वरैरोष्ठाय्यमाणैः स्ना इतोऽसीत्यादिशब्दैः कं पश्य-

আঃ পাপিষ্ঠ ! দুশ্চরিত্র ! চন্দ্র ! চণ্ডাল ! কৃতার্থ হইয়াছ ? হে দক্ষিণবায়ো ! এখন তোমার সে দাক্ষিণ্য দূরীভূত হইয়াছে, মনের অভিলাষ পূর্ণ হইয়াছে, যাহা করিবার তাহা করিয়াছ, এখন ইচ্ছানুসারে বহিতে থাক । (ভ) হা ! ভগবন্ শ্বেতকেতো ! পুত্রবৎসল ! আপনার সর্ব্বস্ব অপহৃত হইয়াছে, তাহা জানিতে পারিতেছেন না । হা ধর্ম্ম ! তুমি এখন কাহাকে গ্রহণ করিবে ? হা তপস্তে ! তুমি এখন নিরাশ্রয় হইলে, হা সরস্বতি ! তুমি বিধবা হইলে, হা সত্য ! তুমি অনাথ হইলে, হা স্বর্গলোক ! তুমি শূন্য হইলে । (ম) সখে ! পুণ্ডরীক ! আমার প্রতীক্ষা কর, আমিও তোমার অনুগামী হইব ; কারণ—তোমাকে ছাড়িয়া আমি একাকী ক্ষণকালও থাকিতে পারিব না । যাহার সহিত পরিচয় হয় নাই এবং যাহার সঙ্গে কখনও দেখা হয় নাই—এইরূপ লোকের ন্যায় তুমি কেন আজ আমাকে হঠাৎ

(१) चण्डाल ! । (२) क्वचित् यदिति नास्ति । (३) भवता ।

कं शरणमुपैमि । अन्धोऽस्मि संवृत्तः, शून्या मे दिशो जाताः, निरर्थकं जीवितम्, अप्रयोजनं तपः, निःसुखाश्च लोकाः । केन सह परिभ्रमामि, कमालपामि । (१) उत्तिष्ठ देहि मे प्रतिवचनम्, (२) क्व तन्ममोपरि सुहृत्प्रेम, क्व सा स्मितपूर्वाभिभाषिता च" इत्येतानि चान्यानि च विलपन्तं कपिञ्जलमश्रौषम् । (म)

तच्च श्रुत्वा पतितैरिव प्राणैर्दूरादेव मुक्तैकताराक्रन्दा सरस्तीरलतासक्तिलुच्यमानांशुकोत्तरीया (३) यथाशक्तित्वरितैरज्ञात-सम-विषम-भूमिभाग-विन्यस्तैः पादप्रक्षेपैः प्रस्खलन्ती पदे पदे, केनाप्युत्क्षिप्य नीयमानेव तं प्रदेशं गत्वा, (य)

---

विषयकं बोधमकार्षमित्यर्थः, "यदाश्रौषं द्रौपदीं रङ्गमध्ये" इत्यादिवत् । श्रवणेन्द्रियजन्यप्रत्यक्षे शक्तिं ब्रुवतां मीमांसकानां मते तु तादृशशाब्दबोध एव लक्षणेति । अथवा धातूनामनेकार्थत्वात् अश्रौषं स्वरपरिचयादनुमानेन कपिञ्जलमज्ञासिषमित्यर्थः ।

(य) तच्चेति । पतितैरिव बहिर्गतैरिव बहिर्गन्तुमुद्यतैरिवेत्यर्थः प्राणैरुपलक्षिता, दूरादेव मुक्तः एकतारः अत्युच्च आक्रन्दो रोदनध्वनिर्यया सा, सरसस्तीरेषु या लतास्तासु आसक्त्या लङ्घयितुमनवकाशात संलग्नतया लुच्यमानं छिद्यमानम् अंशुकं परिहितवस्त्रम् उत्तरीयं वस्त्रञ्च यस्याः सा, यथाशक्तित्वरितैः शक्त्यनतिक्रमेण शीघ्रकृतैः, अज्ञातेषु अपरिचितेषु समविषमेषु समतलविषमतलेषु भूमिभागेषु विन्यस्तैः पादप्रक्षेपैः पदे पदे प्रस्खलन्ती, केनापि जनेन उत्क्षिप्य उत्तोल्य नीयमानेवाहम्, तं कुमाराध्युषितं प्रदेशं गत्वा तत्क्षणविगतजीवितं तं महाभागमद्राक्षमिति परेणान्वयः । इतः पुंसि द्वितीयैकवचनान्तपदानि महाभागमिति वक्ष्यमाणस्य विशेषणानि । अत्र क्रियोत्प्रेक्षालङ्कारः ।

---

পরিত্যাগ করিয়া যাইতেছ ? তোমার এই অত্যন্ত নিষ্ঠুরতা আজ কোথা হইতে আসিল ? বল, তোমাকে ছাড়িয়া কোথায় যাইব, কাহার নিকট প্রার্থনা করিব এবং কাহার শরণ লইব ? আমি অন্ধ হইয়াছি, আমার সকল দিক্ শূন্য বলিয়া বোধ হইতেছে জীবন অনর্থক মনে করিতেছি, তপস্যার প্রয়োজন নাই এবং ত্রিভুবনের কোথাও সুখ নাই। আমি কাহার সহিত বিচরণ করিব এবং কাহার সঙ্গে আলাপ করিব। ভাই! উঠ, আমার কথার উত্তর দাও, আমার উপরে তোমার সেই বন্ধুর প্রণয় আজ কোথায় গেল এবং ঈষৎ হাস্য করিয়া সেই কথা বলা আজ কোথায় গেল"—তখন কপিঞ্জল এই রকম ও অন্যান্য অনেক রকম বিলাপ করিতেছিলেন।

(য) তাহা শুনিয়া আমার প্রাণ যেন বহির্গত হইতে উদ্যত হইল, আমি দূর হইতেই মুক্তকণ্ঠে উচ্চৈঃস্বরে রোদন করিয়া উঠিলাম সরোবরের তীরবর্ত্তী লতাতে সংলগ্ন হইয়া আমার পরিহিত ও উত্তরীয় বস্ত্র ছিঁড়িয়া যাইতে লাগিল, অপরিচিত সমতল ও বিষমতল ভূমিতে শক্তি অনুসারে দ্রুতবেগে পদক্ষেপ করায় প্রত্যেক পদক্ষেপেই পড়িয়া যাইতে লাগিলাম

---

(१) केन वार्त्तां करोमीत्यधिकः पाठः क्वचित् (२) मे विश्रमतः । ...लतानुषज्यमान...।

समुपोढमोहनिद्रे च द्राघीयोवीचिविचलितवपुषि विरुवति विरहिणि चक्रवाक-चक्रवाले, (ब) निर्वृत्ते च (१) चन्द्रोदये विद्रुते हर्ष-नयनजलकण-नीहारिणि वियद्विहारिणि मनोहारिणि विद्याधराभिसारिकाजने, (श) चन्द्रापीडः सुप्तामालोक्य महाश्वेतां पल्लवशयने शनैः शनैः (२) समुपाविशत्। अस्यां वेलायां किं नु खलु मामन्तरेण चिन्तयति वैशम्पायनः, किं वा वराकी पत्रलेखा, किं वा राजपुत्त्रलोकः' इति चिन्तयन्नेव निद्रां ययौ। (ष)

अथ क्षीणायां क्षणदायामुषसि सन्ध्यामुपास्य शिलातलोपविष्टायां पवित्राण्य-घमर्षणानि जपन्त्यां महाश्वेतायाम्, निर्वर्त्तितप्राभातिकविधौ चन्द्रापीडे, (स)

---

(ब) समुपोढेति। किञ्च। विरहिणि निशागमे चक्रवाकदम्पत्योर्विरहस्य स्वाभाविकत्वादिति भावः, अतएव समुपोढा उत्पन्ना मोहनिद्रा दुःखान्मूर्च्छारूपा निद्रा यस्य तस्मिन् तथा द्राघीयसीभिरत्यन्तदीर्घाभिः वीचिभिरच्छोदसरस्तरङ्गैः विचलितं कम्पितं वपुर्यस्य तस्मिन्, चक्रवाकानां पक्षिणां चक्रवाले मण्डले समूहे, विरुवति रवं कुर्वति सति। अत्र छेकानुप्रासोऽलङ्कारः।

(श) निर्वृत्त इति। किञ्च। चन्द्रोदये निर्वृत्ते निष्पन्ने चन्द्रोदयेन तिमिरापगम इति भावः, हर्षनयन-जलकणा आनन्दाश्रुबिन्दव एव नीहारास्तुषारा यस्य सन्तीति तस्मिन्, वियद्विहारिणि आकाशचारिणि, मनो-हारिणि परमसुन्दरे, विद्याधराभिसारिकाजने विद्रुते अन्यदर्शनभयात् पलायिते सति। अत्र हर्षेत्यादिपदे निरङ्गं केवलरूपकम्, तथा हारिणीत्यस्य एकक्रमेणावृत्त्या यमकस्थानयोः संसृष्टिः।

(ष) अन्विति। सुप्तां निद्रिताम्। मामन्तरेण विना। वराकी क्षुद्रा।

(स) अथेति। क्षणदायां रात्रौ क्षीणायां क्षयमुपगतायाम् उषसि प्रभातकाले। अघमर्षणानि "ऋतञ्च सत्यञ्च"त्यादिमन्त्रान्। चन्द्रापीडे च निर्वर्त्तितो निष्पादितः प्राभातिकविधिः प्रातःकृत्यं येन तस्मिन् सति।

---

উপস্থিত হওয়ায় চক্রবাকদম্পতিগণ, পরস্পর বিচ্ছিন্ন ও মোহ-নিদ্রায় অভিভূত হইয়া রব করিতেছিল, এদিকে অচ্ছোদসরোবরের বৃহৎ বৃহৎ তরঙ্গ তাহাদিগকে কাঁপাইতেছিল। (শ) আকাশচারী পরমসুন্দর বিদ্যাধররমণীগণ শিশিরের ন্যায় আনন্দাশ্রু বিসর্জ্জন করতঃ অভিসারে যাইতেছিল, কিন্তু চন্দ্রের উদয়ে অন্ধকার দূরীভূত হওয়ায় তাহারা ইতস্ততঃ পলা-য়ন করিতে লাগিল। (ষ) এমন সময়ে চন্দ্রাপীড়, মহাশ্বেতাকে নিদ্রিত দেখিয়া ধীরে ধীরে পল্লবময় শয্যার উপরে উপবেশন করিলেন এবং চিন্তা করিতে লাগিলেন যে,—'এই সময়ে বৈশম্পায়ন আমাকে না দেখিয়া কি চিন্তা করিতেছেন,—বালিকা পত্রলেখাই বা কি ভাবি-তেছে এবং রাজপুত্রগণই বা কি মনে করিতেছেন' এইরূপ চিন্তা করিতে করিতে নিদ্রিত হইয়া পড়িলেন।

(স) তদনন্তর রাত্রি অতীত হইলে প্রভাতকালে, মহাশ্বেতা সন্ধ্যাবন্দন শেষ করিয়া

---

(१) निर्वृत्ते च। (२) क्वचित् विश्रान्तोऽसि।

तरलिका षोड़शवर्षवयसा, सावष्टम्भाकृतिना, मद-खेदालस-गजराज-गमन-गुरूणि (१) पदानि निक्षिपता, (च) पर्युषितचन्दनाङ्गराग-धूसरोरुदण्डद्वयेन, कुङ्कुम-राग-पिञ्जरारुणेन, चामीकर-शृङ्खला-कलाप-निविड़-नियमितं कक्षाबन्धातिरिक्त-प्रेङ्खत्पल्लवमधरवास एव केवलं वसानेन, (छ) निरुदरतया विभक्त-मध्येन, विपुलवक्षसा, दीर्घानुवृत्तपीनबाहुना, (ज) वामप्रकोष्ठदोलायमान-माणिक्यवलयेन, कर्णाभरणमणिविप्रकीर्य्यमाणमधोमुखकिरणेन्द्रायुधजालं वर्णा-

---

(ङ) तरेति। प्रत्यूषस्येव केयूरकनाम्ना गन्धर्वदारकेणानुगम्यमाना तरलिका प्रादुरासीदिति परेणान्वयः। अत्र तृतीयैकवचनान्तपदानि गन्धर्वदारकेणेति वक्ष्यमाणस्य विशेषणानि। षोड़श वर्षाणि वयो यस्य तेन। सावष्टम्भा सबला आकृतिर्यस्य तेन। मदखेदेन मदवहनपरिश्रमेण अलसो मन्दगामी यो गजराजस्तस्येव गमने गुरूणि मन्थराणि, पदानि पदन्यासान्, निक्षिपता कुर्वता। अत्र लुप्तोपमालङ्कारः।

(च) पर्य्युषितेति। पर्य्युषितेन पूर्वदिनकृतत्वादगतरसेन शुष्केण चन्दनाङ्गरागेण धूसरम् ऊरुदण्डद्वयं यस्य तेन। कुङ्कुमरागेण कुङ्कुमरसकृताङ्गरागेण पिञ्जरः कस्मिंश्चिदंशे शुष्कत्वात् पिङ्गलवर्णः अथ च कस्मिंश्चिदंशे अरुणश्च तदानीमप्यशुष्कत्वात् रक्तवर्णश्चेति तेन। चामीकरस्य स्वर्णस्य शृङ्खलानां कलापेन आवल्या निविड़ं दृढ़ं यथा तथा नियमितं बद्धम्, तथा कक्षाबन्धात् कटिबन्धादतिरिक्तं अधिकभूतम् अतएव प्रेङ्खत् वायुना चलत् पल्लवमञ्चलं यस्य तत्, केवलम् अधरवास एव अधोवस्त्रमेव वसानेन परिदधता, न पुनरुत्तरीयवसनं धारयतीति भावः।

(छ) निरिति। निरुदरतया कृशोदरतया अनुदरा कन्येतिवदत्राल्पार्थे निःशब्दः। विभक्तमध्येन क्षीणकटिना। दीर्घौ आयतौ, अनुवृत्तौ सुगोलौ, पीनौ स्थूलौ च बाहू यस्य तेन।

(ज) वामेति। वामे प्रकोष्ठे मणिबन्धादूर्द्ध्वदेशे दोलायमानं भुजान्दोलनाच्चञ्चलं माणिक्यवलयं रत्नकटकं

---

একখানি প্রস্তরখণ্ডের উপরে উপবেশন করিয়া পবিত্র অঘমর্ষণমন্ত্র জপ করিতেছিল, চন্দ্রাপীড়ও প্রাতঃকৃত্য সমাপন করিয়া অবস্থান করিতেছিলেন (ঙ) এমন সময়ে কেয়ূরকনামে একটি গন্ধর্ববালকের সহিত তরলিকা আসিয়া সেই প্রভাতকালেই সেখানে উপস্থিত হইল; সেই বালকটির বয়স ষোড়শ বর্ষ বলিয়া বোধ হইতেছিল, আকৃতিও সবল ছিল এবং সে, মদপরিশ্রমে মন্দগামী গজরাজের ন্যায় ধীরে ধীরে পদক্ষেপ করিয়া আসিতেছিল, (চ) শুষ্ক চন্দনের অঙ্গরাগে তাহার ঊরুযুগল ধূসরবর্ণ ছিল এবং কুঙ্কুমের অঙ্গরাগে কোন স্থান পিঙ্গলবর্ণ ও কোন স্থান রক্তবর্ণ ছিল; সে কেবল পরিধেয় বস্ত্রই পরিধান করিয়াছিল, সেই বস্ত্রখানা স্বর্ণশৃঙ্খলাবলীতে দৃঢ়বদ্ধ ছিল, এবং তাহার কটিবন্ধনের অতিরিক্ত অঞ্চলটুকু বায়ুভরে কাঁপিতেছিল; (ছ) তাহার উদর কৃশ ছিল বলিয়া কটিদেশও কৃশ ছিল, বক্ষঃস্থল বিস্তৃত ছিল এবং বাহুযুগল দীর্ঘ, সুগোল ও স্থূল ছিল; (জ) বাম হস্তে একটি রত্নবলয় দুলিতেছিল, কর্ণালঙ্কারের মণি হইতে ইন্দ্রধনুর ন্যায় নানাবর্ণের কিরণজাল নীচের দিকে পড়িতেছিল, তাহাতে বোধ

---

(१) मन्दखेदालस...,...गजगमनगुरूणि।

शुकोत्तरीयमिवैकस्कन्धविन्यस्तमुद्वहता, (ख) चूतपल्लवकोमलमनवरतताम्बूल-बहल-रागान्धकारमधरं दधता, (ग) कर्णान्तायतस्य स्वभावधवलस्य धवलिम्ना लोचनयुगलस्य धवलयतेव दिगन्तराणि कुमुदवनानीव वर्षता पुण्डरीकमयमिव दिवसं कुर्वता, (घ) कनकपट्ट-पृथु-ललाटेन, अलि-कुल नील-सरल शिरसिजेन, अग्राम्याकृतिना, राजकुल-सम्पर्क-चतुरेण, गन्धर्वदारकेण केयूरकनाम्नानुगम्यमाना प्रत्यूषस्येव प्रादुरासीत् (ङ)। आगत्य च कोऽयमित्युपजातकुतूहला

---

यस्य तेन । कर्णाभरणे कर्णालङ्कारे यो मणिस्तस्मात्, विप्रकीर्य्यमाणं कर्णाभरणेनाधो विक्षिप्यमाणम्, अधोमुखाः किरणा इन्द्रायुधानि नानावर्णत्वादिन्द्रचापानीव तेषां जालं समूहम्, एकस्मिन् स्कन्धे विन्यस्तमर्पितम्, अर्थो रक्तवर्णत्वेन रञ्जितमंशुकं वस्त्रांशुकं तद्रूपमुत्तरीयमिव उद्वहता दधता । अत्र लुप्तोपमाजात्युत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः ।

(ग) चूतेति । चूतस्य आम्रस्य पल्लववत् कोमलम्, तथा अनवरतेन ताम्बूलेन ताम्बूलचर्वणेन बहलो घनः रागो रक्तिमा अन्धकारः श्यामिमेव मालिन्यञ्च यस्मिन् तम् । अधिकताम्बूलचर्वणेनाधरे मालिन्यमपि जायत इति द्रष्टव्यम् । अधरं दधता ओष्ठं धारयता । अत्र लुप्तोपमालङ्कारः ।

(घ) कर्णेति । कर्णान्तायतस्य स्वभावधवलस्य लोचनयुगलस्य धवलिम्ना धवलतया दिगन्तराणि धवलयतेव, अतएव कुमुदवनानि वर्षतेव, दिवसं पुण्डरीकमयं श्वेतपद्मव्याप्तं कुर्वतेव, लोचनयुगलस्य धवलप्रभाप्रसरणात् कुमुदपुण्डरीकयोश्च धवलत्वादिति भावः । अत्र तिस्र एव क्रियोत्प्रेक्षा वाक्यार्थहेतुकमेकं काव्यलिङ्गञ्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः, तथा धवलपदस्य वारं वारमुपादानादनवीकृतत्वदोषः, स च 'स्वभावधवलस्य लोचनयुगलस्य प्रभया दिगन्तराणि लिम्पतेव' इति पाठेन समाधेयः ।

(ङ) कनकेति । कनकपट्टवत् स्वर्णफलकवत् पृथु विस्तृतं ललाटं यस्य तेन । अलिकुलवत् भ्रमरसमूहवत् नीलाः कृष्णाः सरलाः शिरसिजाः केशा यस्य तेन । अत्र लुप्तोपमालङ्कारः । अग्राम्या नागरीया भद्रोचिता आकृतिर्यस्य तेन । तथा राजकुले गन्धर्वराजबाट्यां सम्पर्केण सर्वदावस्थानसम्बन्धेन चतुरेण, नानाविधजनैर्नानाविधालापकार्य्याचरणादिति भावः । प्रादुरासीदुपस्थिताऽभवत् ।

---

হইতেছিল যে,—সে যেন এক স্কন্ধে অর্পিত একখানা রক্তবর্ণ উত্তরীয় বসন ধারণ করিতেছে; (গ) আমের পল্লবের ন্যায় কোমল ও সর্ব্বদা তম্বুল চর্ব্বণ করায় রক্ত ও মলিনবর্ণ ওষ্ঠযুগল ধারণ করিতেছিল; (ঘ) আকর্ণবিস্তৃত এবং স্বভাবতই ধবলবর্ণ নয়নযুগলের ধবলপ্রভাদ্বারা সে যেন দিগ্‌দিগন্তর ধবলবর্ণ করিতেছিল; তাহাতে বোধ হইতেছিল যে, সে যেন, শ্বেতোৎপলসমূহ বর্ষণ করিতেছে এবং দিনটাকে যেন শ্বেতপদ্মময় করিতেছে; (ঙ) তাহার ললাটদেশ, স্বর্ণফলকের ন্যায় বিস্তৃত ছিল; কেশকলাপ, ভ্রমরসমূহের ন্যায় কৃষ্ণবর্ণ ও সরল ছিল এবং আকৃতিটিও ভদ্রলোকের মতনই ছিল; আর সে, রাজবাটীতে বাস করায় বেশ চতুর ছিল।

চন্দ্রাপীড়ং সুচিরমালোক্য (১) মহাশ্বেতায়াঃ সমীপমুপসৃত্য কৃতপ্রণামা সবিনয়মুপাবিশৎ। (চ)

অনন্তরঞ্চাতিদূরাবনতেনোত্তমাঙ্গেন প্রণম্য কেয়ূরকোঽপি মহাশ্বেতাদৃষ্টিনিসৃষ্টং নাতিসমীপবর্ত্তি শিলাতলং ভেজে (ছ)। সমুপবিষ্টশ্চ (২) তমদৃষ্টপূর্ব্বমধঃকৃতকুসুমায়ুধমুপহসিতসুরাসুরগন্ধর্ব্ববিদ্যাধররূপং রূপাতিশয়ং চন্দ্রাপীড়স্য দৃষ্ট্বা বিস্ময়মাপেদে। (জ)

পরিসমাপ্তজপা তু মহাশ্বেতা পপ্রচ্ছ তরলিকাম্—"কিং ত্বয়া দৃষ্টা প্রিয়সখী কাদম্বরী কুশলিনী ? করিষ্যতি বা তদস্মদ্বচনম্ ?" ইতি। (ঝ)

---

(চ) আগত্যেতি। অদৃষ্টপূর্ব্বঃ পুরুষঃ ক ইত্যুৎপন্নং কুতূহলং যস্যাঃ সা, তরলিকেতি শেষঃ।

(ছ) অনেতি। অতিদূরাবনতেন অত্যন্তাবনতেন উত্তমাঙ্গেন মস্তকেন। প্রণম্য মহাশ্বেতামিত্যর্থঃ। মহাশ্বেতয়া দৃষ্ট্যা দৃষ্টিভঙ্গ্যা নিসৃষ্টং অর্পিতং নির্দ্দিষ্টমিত্যর্থঃ শিলাতলং ভেজে আশ্রিতবান্ তত্রোপবিবেশেত্যর্থঃ।

(জ) সমুপেতি। সমুপবিষ্টশ্চ কেয়ূরকঃ। অধঃকৃতঃ পরাজিতঃ কুসুমায়ুধঃ কন্দর্পো যেন তম্, তথা উপহসিতং স্বাপেক্ষয়ান্যূনত্বাদুপহাসতাং নীতং সুরাসুরগন্ধর্ব্ববিদ্যাধরাণাং রূপং যেন তম্, রূপাতিশয়ং সৌন্দর্য্যাতিরেকম্।

(ঝ) পরীতি। অস্মদ্বচনং মম বচনানুরূপং কার্য্যং আত্মপালিয়াদ্ধ্যমিত্যর্থঃ।

---

(চ) আসিয়া চন্দ্রাপীড়কে দেখিয়া তরলিকার 'ইনি কে ?' এইরূপ কৌতূহল জন্মিল; তাই সে, বহুকাল পর্য্যন্ত চন্দ্রাপীড়কে দেখিয়া, মহাশ্বেতার নিকটে যাইয়া, তাহাকে সবিনয়ে নমস্কার করিয়া উপবেশন করিল।

(ছ) তাহার পর কেয়ূরকও অত্যন্ত অবনত মস্তকে মহাশ্বেতাকে প্রণাম করিল, পরে মহাশ্বেতা, তাহার বসিবার জন্য অনতিনিকটবর্ত্তী একখানা প্রস্তরখণ্ডকে নয়নভঙ্গীদ্বারা নির্দ্দিষ্ট করিয়া দিল; কেয়ূরক তাহার উপরে উপবেশন করিল। (জ) কেয়ূরক উপবেশন করিয়া চন্দ্রাপীড়ের সেই অলৌকিক সৌন্দর্য্য দেখিয়া বিস্ময়াপন্ন হইল; কারণ—সেরূপ সৌন্দর্য্য পূর্ব্বে আর দেখে নাই, এবং সে সৌন্দর্য্য কামদেবের সৌন্দর্য্যকেও পরাস্ত করিয়াছিল এবং দেবতা, দানব, গন্ধর্ব্ব ও বিদ্যাধরগণের সৌন্দর্য্যকেও উপহাস করিতেছিল।

(ঝ) এদিকে মহাশ্বেতা জপ সমাপন করিয়া তরলিকাকে জিজ্ঞাসা করিল,—'তরলিকে ! তুই আমার প্রিয়সখী কাদম্বরীকে ভাল দেখিয়াছিস্ ত ? সে আমার কথামত কাজ করিবে ত ?।"

---

(১) অবলোক্য। (২) উপবিষ্টশ্চ।

अथ सा तरलिका विनयावनतमौलिरीषदालम्बित-(१) कर्णपाशमतिमधुरया गिरा व्यज्ञिपत्—"भर्त्तृदारिके! दृष्टा खलु मया भर्त्तृदारिका कादम्बरी सर्वतः कुशलिनी। विज्ञापिता च निखिलं भर्त्तृदुहितुः सन्देशम्। आकर्ण्य च यत्तया सन्तत-मुक्त-मुक्ता-स्थूलाश्रु-(२) बिन्दुवर्षं रुदित्वा प्रतिसन्दिष्टम्, तदेव तयैव विसर्जितस्तस्या एव वीणावाहकः (३) केयूरकः कथयिष्यति इत्युक्त्वा विरराम। (अ)

विरतवचसि तस्यां केयूरकोऽब्रवीत्—"भर्त्तृदारिके! महाश्वेते! देवी कादम्बरी दृढ़दत्तकण्ठग्रहा त्वां विज्ञापयति—'यदियमागत्य मामवदत्तरलिका, तत् कथय किमयं गुरुजनानुरोधः? किमिदं मच्चित्तपरीक्षणम्? किं गृहनिवासापराधनिपुणोपालम्भः? किं प्रेमविच्छेदाभिलापः? किं भक्तजन-परित्यागोपायः? किंवा प्रकोपः? (ट)। जानास्येव मे सहज-प्रेम-निस्यन्द-(४)

(अ) अथेति। विनयेन अवनतो मौलिर्यस्याः सा। ईषदालम्बितौ मनागवनमनेन किञ्चिदवनतौ कर्णपाशौ सुन्दरकर्णयुगलं यस्मिन् कर्मणि तद्यथा तथा। भर्त्तृदुहितुस्तव। तया कादम्बर्या, सन्ततं अविच्छिन्नधारं यथा तथा मुक्तानि त्यक्तानि मुक्तावत् स्थूलानां अश्रुबिन्दूनां वर्षाणि यस्मिन् कर्मणि तद्यथा तथा रुदित्वा यत् प्रतिसन्दिष्टम्, तदेव केयूरकः कथयिष्यतीति सम्बन्धः।

(ट) विरतेति। दृढ़ं दत्तः कण्ठग्रह आलिङ्गनं यया सा। गृहे निवासः स्थितिरेवापराधस्तस्मिन् निपुणोपालम्भ उपयुक्ततिरस्कारः त्वयि वनी वसन्त्यामहं यद्गृहे वसामि तस्यापराधस्य योग्यतिरस्कारः किमित्यर्थः। प्रेमविच्छेदाय आवयोः प्रणयभङ्गाय अभिलाप उक्तिः। भक्तजनस्य अनुरक्ताया ममेत्यर्थः परित्यागोपायः किम्।

(ঞ) তাহার পর তরলিকা, মস্তক অবনত করিয়া, সুন্দর কর্ণযুগল ঈষৎ নোয়াইয়া অতিমধুর বাক্যে জানাইল—"রাজকন্যে! আমি, রাজকন্যা কাদম্বরীকে সকল রকমেই ভাল দেখিয়া আসিয়াছি এবং আপনার সকল কথাই তাঁহাকে জানাইয়াছি। তিনি অবিচ্ছিন্ন ধারায় মুক্তার ন্যায় স্থূল অশ্রু-বিন্দু-বর্ষণপূর্ব্বক রোদন করিয়া যে প্রত্যুত্তর দিয়াছেন, তাহা এই কেয়ূরক বলিবে, এ তাঁহারই বীণাবাহক এবং তিনিই ইহাকে পাঠাইয়াছেন।" এই কথা বলিয়া তরলিকা বিরত হইল।

(ট) সে বিরত হইলে কেয়ূরক বলিতে লাগিল,—"রাজকন্যে! মহাশ্বেতে! কাদম্বরী দেবী, আপনার কণ্ঠে গাঢ় আলিঙ্গন করিয়া জানাইতেছেন যে—'এই তরলিকা আসিয়া আমাকে যে বলিল,—সে বিষয়ে তুমি বল দেখি,—'এটা কি গুরুজনের অনুরোধ? না—আমার মন পরীক্ষা করা? কিংবা আমি যে গৃহে বাস করিতেছি, এই অপরাধের উপযুক্ত

(१) ...अवलम्बित...। (२) ...सन्ततमुक्तस्थूलाश्रु...। (३) वीणावाहकः। (४)...निष्पन्द।

নির্ভরং হৃদয়ম্, এবমতিনিষ্ঠুরং সন্দিশন্তী কথমসি ন লজ্জিতা? তথামধুরভাষিণী কেনাসি শিক্ষিতা বক্তুমপ্রিয়ং পরুষমভিধাতুং বা? (ঠ) স্বস্থোঽপি তাবৎ ক ইব সহৃদয়ঃ কনীয়স্যবসানবিরসে কর্ম্মণীদৃশে মতিমুপসর্পয়েৎ? কিমুতাতিদুঃখাভিহতহৃদয়োঽস্মদ্বিধো জনঃ (ড)। সুহৃদ্দুঃখখেদিনি হি মনসি কেব সুখাশা? কেব নির্বৃতিঃ? কীদৃশাঃ সম্ভোগাঃ? কানি বা হসিতানি? (ঢ)। যেনেদৃশীং দশামুপনীতা প্রিয়সখী কথমতিদারুণং তমহং বিষমিবাপ্রিয়কারিণং

(ঠ) জানাসীতি। সহজং স্বাভাবিকং যৎ প্রেম তস্য নিস্যন্দেন রসেন নির্ভরং পরিপূর্ণং মে মম হৃদয়ং ত্বং জানাস্যেব, তথাপি এবমতিনিষ্ঠুরং পাণিগ্রাহণোপদেশরূপং সন্দিশন্তীত্যন্বয়ঃ।

(ড) ননু পাণিগ্রাহণে কো নাম দোষঃ, যেনৈবং বৈমত্যং দ্যোতয়সীত্যাহ স্বস্থ ইতি। স্বস্থোঽপি সুখশান্ত্যাদিনা সর্ব্বথা সুস্থচিত্তোঽপি ক ইব সহৃদয়ো হিতাহিতবিবেকসমর্থো জনঃ, ঈদৃশে কনীয়সি অত্যল্পে তুচ্ছে, অবসানবিরসে পরিণামদুঃখদায়িনি, তবেব বিরহাদিনেতি ভাবঃ, কর্ম্মণি পাণিগ্রাহণে মতিমুপসর্পয়েৎ বুদ্ধিমর্পয়েৎ, অপি তু কোঽপি নেত্যর্থঃ। সুতরাং বলবদস্বস্থানাং মাদৃশানান্তু কা কথেত্যাহ কিমুতেতি। তব দারুণদুঃখজনিতাতিদুঃখেনৈব মে হৃদয়মভিহতমিতি ভাবঃ।

(ঢ) ননু সত্যপ্যবসানবিরসে কর্ম্মণ্যস্মিন্ সুখাদিকমপি দৃশ্যত ইত্যাহ সুহৃদিতি। সুহৃদ্দুঃখখেদিনি বন্ধুজনদুঃখজনিতদুঃখভারাক্রান্তে। নির্বৃতিঃ শান্তিঃ। দুঃখভারাক্রান্তে হি মনসি সুখাদীনাং প্রবেশাবকাশ এব নাস্তীতি ভাবঃ।

(ণ) অথ ত্বয়াপি যৌবনকামঃ সর্ব্বথৈব সকামঃ করণীয় ইত্যাহ যেনেতি। যেন কামেন প্রিয়সখী ত্বম্ ঈদৃশীং দশাং অতীবদারুণশোকাতুরাবস্থাং উপনীতা প্রাপিতা, বিষমিব অপ্রিয়কারিণং অতিদারুণং তং কামং কথমহং সকামং পতিসমাগমেন পূর্ণমনোরথং কুর্য্যাং কর্ত্তুং শক্নুয়াম্, অপি তু কথমপি ন, তব ঘোরমনুকৃতেন মমাপি

তিরস্কার? অথবা প্রণয় ভঙ্গ করিবার জন্য একটা কথা মাত্র? না অনুরক্ত লোককে পরিত্যাগ করার একটা উপায়? অথবা কোন কারণ-জনিত ক্রোধ? (ঠ) তুমি ত জানই যে আমার হৃদয়, তোমারই অকৃত্রিম প্রেমে পরিপূর্ণ; তথাপি তুমি, এই জাতীয় অত্যন্ত নিষ্ঠুর খবর পাঠাইতে লজ্জিত হও নাই কেন? তুমি সেইরূপ মধুরভাষিণী ছিলে, কিন্তু এখন অপ্রিয় ও নিষ্ঠুর কথা বলিতে তোমাকে কে শিখাইল?। (ড) অথ, সুস্থচিত্ত হইয়াও কোন্ বুদ্ধিমান্ ব্যক্তি, তুচ্ছ ও পরিণামে দুঃখজনক এইরূপ কার্য্যে মন অর্পণ করে? সুতরাং আমাদের মত অত্যন্তদুঃখিতচিত্ত লোকের কথা আর বলিব কি?। (ঢ) আর যে চিত্ত, সর্ব্বদাই বন্ধুর দুঃখে দুঃখিত তাহাতে আবার সুখের আশা কি? শান্তিই বা কি? সম্ভোগই বা কি? এবং হাসপরিহাসই বা কি?। (ণ) বিশেষতঃ, যে কন্দর্প, তোমাকে এইরূপ দশায় উপনীত করিয়াছে, অত্যন্ত ভয়ঙ্কর ও বিষের ন্যায় অপ্রিয়কারী সেই কন্দর্পের অভিলাষ আমি কি করিয়া পূর্ণ করিতে পারি? দেখ—সূর্য্য অস্তগমন করায় পদ্মিনী তাঁহার বিরহে বিহ্বল হইয়া পড়িলে,

कामं सकामं कुर्य्याम्? दिवसकरास्तमयविधुरासु नलिनीषु सहवासपरिचया-च्चक्रवाकयुवतिरपि पतिसमागमसुखानि परित्यजति (१) किमुत नार्य्यः (ण)। अपि च (२) यत्र भर्त्तृविरहविधुरा परिहृतपरपुरुषदर्शना दिवानिशं निवसति प्रियसखी, कथमिव तन्मम हृदयमपरः प्रविशेज्जनः? (त)। यत्र च भर्त्तृविरह-विधुरा तीव्र-व्रत-(३) कर्षिताङ्गी प्रियसखी महत् कृच्छ्रमनुभवति, तत्राहमवगण-य्यैतत् कथमात्मसुखार्थिनी पाणिं ग्राहयिष्यामि! कथं वा मम सुखं भविष्यति? (थ) त्वत्प्रेम्णा चास्मिन् वस्तुनि मया (४) कुमारिकाजनविरुद्धं स्वातन्त्र्यमाल-

---

म्बनत्वादिति भाव। तथा च नलिनीषु दिवसकरस्य सूर्य्यस्य अस्तमयेन अस्तगमनेन विधुरासु सतीषु। सहवास-परिचयात् एकसरोवरवासप्रणयात्। यत्र तिर्य्यग्जातिरप्येवमाचरति तत्र किमुत नार्य्य इत्यर्थः। सुतरां त्वयि पतिविरहविधुरायां सत्यां मयापि पतिसमागमसुखं त्यज्यमेवेति भावः। अत्र दृष्टान्तोऽलङ्कारः।

(त) अपि चेति। यत्र हृदये। प्रियसखी त्वमित्यर्थः। निवसति सततचिन्ताविषयत्वादिति भावः। अपरो जनः पतिरित्यर्थः, कथं प्रविशेत् कथमपि नेति तात्पर्य्यम्, तत्रत्यायास्तव परपुरुषदर्शनाशङ्कया तस्यैव निषेधादिति भावः।

(थ) यत्रेति। यत्र यदा। तीव्रव्रतेन उग्रतपसा कर्षितानि शोषितानि अङ्गानि यया सा। प्रियसखी त्वमित्यर्थः। तत्र तदा। एतत्तव महत् कृच्छ्रम्। कथं पाणिं ग्राहयिष्यामि कथमपि नेत्यर्थः, समानसुख-दुःखयोः सख्योर्वैषम्यप्रसङ्गादिति भावः। कथं वा सुखं भविष्यति कथमपि नेति तात्पर्य्यम्, दुःखपूर्णचित्त-त्वादिति भावः।

(द) त्वदिति। अस्मिन् वस्तुनि पाणिग्राहणविषये। विनयः शिक्षागुणः समवधीरितः अवज्ञातः। गुरुवचनं पितृवाक्यम्। सहजमाभरणं स्वाभाविकालङ्काररूपा लज्जा समुत्सृष्टा परित्यक्ता। सा कादम्बरी।

---

তাহার সহিত একত্র বাস করায় প্রণয়বশতঃ যুবতি চক্রবাকপক্ষিণীও পতির সহিত সম্মিলন-সুখ পরিত্যাগ করে; এ অবস্থায় রমণীগণের কথা বলিবার কি আছে?। (ত) বিশেষতঃ, তুমি পতিবিরহে আকুল হইয়া পর-পুরুষের দর্শন পর্য্যন্ত পরিত্যাগ করিয়া যে হৃদয়ে দিবারাত্রি বাস করিতেছ, আমার সেই হৃদয়ে অন্য লোক প্রবেশ করিবে কিরূপে?। (থ) আর তুমি যখন ভর্ত্তার বিরহে বিহ্বল হইয়া, গুরুতর ব্রতাবলম্বনে শরীরকে শোষণ করিতে থাকিয়া গুরুতর কষ্ট অনুভব করিতেছ, তখন আমি তাহা অগ্রাহ্য করিয়া কেবল নিজের সুখাভিলাষিণী হইয়া কিরূপে পাণিগ্রহণ করাইব? কিরূপেই বা তাহাতে আমার সুখ হইবে?। (দ) আমি তোমার প্রণয়বশতই এই বিষয়ে স্বাধীনতা অবলম্বন করিয়া নিন্দা স্বীকার করিয়াছি, বিনয়কে অবজ্ঞা করিয়াছি, পিতৃবাক্য লঙ্ঘন করিয়াছি, লোকাপবাদ

---

(१) त्यजति। (२) क्वचित् अपि चेति नास्ति। (३) क्वचित् तीव्रपदं न दृश्यते।
(४) क्वचित् मयेति नास्ति।

त्यक्तो जनमयशः, समवधीरितो विनयः, गुरुवचनमतिक्रान्तम्, (१) न गणितो लोकापवादः, वनिताजनस्य सहजमाभरणमुत्सृष्टा लज्जा, सा कथय कथमिव पुनरत्र प्रवर्त्तते ? (द)। तदयमञ्जलिरुपरचितः, प्रणामोऽयम्, इदञ्च पादग्रहणम्, अनुगृहाण माम्, वनमितो गतासि मे जीवितेन सहेति मा कृथाः स्वप्नेऽपि पुनरिममर्थं मनसि" इत्यभिधाय तूष्णीमभूत् (ध)

महाश्वेता तु तच्छ्रुत्वा सुचिरं विचार्य्य "गच्छ, स्वयमेवाहमागत्य यथार्हमाचरिष्यामि" इत्युक्त्वा केयूरकं प्राहिणोत् (न)। गते च केयूरके चन्द्रापीडमुवाच---"राजपुत्र ! रमणीयो हेमकूटः, चित्रा च चित्ररथराजधानी, बहुकुतूहलः किम्पुरुषविषयः, पेशलो गन्धर्वलोकः, सरलहृदया महानुभावा च कादम्बरी, यदि नातिखेदकरमिव गमनं कलयसि, नावसीदति वा गुरुप्रयोजनम्, अदृष्टचर-

---

अत्र पाणिग्रहणे। अत्र कथयेति वाक्यान्तरपदस्य सेत्यादिवाक्यान्तरे प्रवेशात् सङ्कीर्णता दोषः, स तु कथयेत्यस्य प्राक् पाठात् समाधेयः।

(ध) तदिति। इति हेतोः। स्वप्नेऽपि मनसि इममर्थं मदपायित्वाङ्गीकरणरूपं विषयं पुनर्मा कृथा न कुर्य्याः। तूष्णीमभूत् केयूरक इति शेषः।

(न) महेति। आगत्य गत्वा। यथार्हं यथायोग्यम्। अत्र आङ्पूर्वो गमधातुर्गमनार्थे अवाचक इत्यवाचकत्वदोषः, स च गत्वेति पाठेनैव समाधेय इति वदन्ति।

(प) गत इति। चित्रा आश्चर्य्या। किम्पुरुषविषयः किन्नरदेशः, बहूनि कुतूहलानि कौतुकोद्दीपकवस्तूनि यस्मिन् सः। पेशलः सुन्दरः। "चारौ दक्षे च पेशलः।" इत्यमरः। यदि त्वं गमनं अतिखेदकरमिव

---

অগ্রাহ্য করিয়াছি এবং স্ত্রীলোকের স্বাভাবিক অলঙ্কার লজ্জাও পরিত্যাগ করিয়াছি; অতএব বল দেখি—সেই কাদম্বরী কি করিয়া আবার এই বিষয়ে প্রবৃত্ত হইবে ?। (ধ) অতএব আমি এই হাত জোড় করিতেছি, এই প্রণাম করিতেছি এবং এই চরণ ধারণ করিতেছি, তুমি আমার প্রতি অনুগ্রহ কর; তুমি এ স্থান হইতে আমার জীবনের সহিতই বনে গিয়াছ; অতএব স্বপ্নেও যেন আবার এ বিষয় মনে করিও না" এই কথা বলিয়া কেয়ূরক নীরব হইল।

(ন) কিন্তু মহাশ্বেতা সেই সকল কথা শুনিয়া বহু সময় বিবেচনা করিয়া বলিল,—"কেয়ূরক ! তুমি চলিয়া যাও; আমি নিজেই আসিয়া যাহা উপযুক্ত হয়, তাহা করিব" এই কথা বলিয়া কেয়ূরককে বিদায় করিল। (প) এবং কেয়ূরক চলিয়া গেলে মহাশ্বেতা চন্দ্রাপীড়কে কহিল,—"রাজপুত্র ! হেমকূট পর্ব্বত অত্যন্ত মনোহর, গন্ধর্ব্বরাজ চিত্ররথের রাজধানীও বড়ই আশ্চর্য্য, কিন্নরদেশেও বহুতর কৌতূহলোদ্দীপক বস্তু রহিয়াছে, গন্ধর্ব্বলোকও

---

(१) अतिक्रान्तिमम्।

বিষয়কুতূহলি বা চেতঃ, মদ্বচনমনুরুধ্যতে বা ভবান্ (১) সুখদায়ি বা (২) আশ্চর্য্যদর্শনম্, (৩) অর্হামি বা প্রণয়ম্ (৪) ইমমপ্রত্যাখ্যানযোগ্যং বা জনং মন্যসে, সমারূঢ়ো বা পরিচয়লেশঃ, অনুগ্রাহ্যো বাঽয়ং জনঃ ততো নার্হসি নিষ্ফলাং কর্ত্তুমভ্যর্থনামিমাম্ (প)। ময়ৈব সহ গত্বা হেমকূটমতিরমণীয়তানিধানম্, তত্র দৃষ্ট্বা চ মন্নির্বিশেষাং কাদম্বরীম্, অপনীয় তস্যাঃ কুমতিমনোমোহবিলসিতম্, একমহো বিশ্রম্য শ্বোভূতে প্রত্যাগমিষ্যসি (ফ)। মম হি নিষ্কারণবান্ধবং ভবন্তমালোক্যৈব দুঃখান্ধকারভারাক্রান্তেন মহতঃ কালাদুচ্ছ্বসিতমিব চেতসা,

---

অধিকপরিশ্রমজনকমিব, ন কলয়সি ন মন্যসে। নাবরোধয়তি ন ব্যাহতং ভবতি। অদৃষ্টো ভূতপূর্বং ইত্যদৃষ্টচরঃ "ভূতপূর্বে চরট্" ইতি চরট্ প্রত্যয়ঃ। অদৃষ্টচরোঽনবলোকিতপূর্বো যো বিষয়ো দেশস্তস্মিন্ তদ্দর্শনে ইত্যর্থঃ কুতূহলমস্যাস্তীতি তৎ। অনুরুধ্যতে রক্ষিতুমিচ্ছতি, রুধিরত্র বাদিকঃ ইচ্ছার্থঃ। প্রণয়ং বা অর্হামি তব প্রণয়যোগ্যা বা ভবামি। ইমং মল্লক্ষণং জনম্। সমারূঢ় উৎপন্নঃ। অভ্যর্থনা তব গমনপ্রার্থনাম্।

(ফ) ময়েতি। অতিরমণীয়তায়া নিধানমাশ্রয়ম্। মন্নির্বিশেষা সর্বথৈব মম সমানাম্। কুমত্যা কুৎসিতবিচারেণ যো মনোমোহস্তদ্বিভ্রমঃ 'ত্বয়ি শোকার্ত্তায়াং নাহং পাণিং গ্রাহয়িষ্যামি' ইত্যেবংরূপস্তস্য বিলসিতং আচরিতম্ অপনীয় উপদেশেন দূরীকৃত্য, একম্ অহো দিবসং বিশ্রম্য, শ্বোভূতে পরদিনে।

(ব) মমেতি। হি নিশ্চিতম্। নিষ্কারণবান্ধবং মদ্দুঃখশ্রবণেন দুঃখিতচিত্তত্বাদুপদেশগ্রহণাঙ্গীকারাদিতি ভাবঃ, ভবন্তমালোক্যৈব বিদ্যমানায়া মম দুঃখান্ধকারভারাক্রান্তেন চেতসা, মহতো দীর্ঘাৎ কালাৎ পরম্

---

বেশ সুন্দর; আর কাদম্বরীও সরলচিত্তা ও অত্যন্ত উদার-প্রকৃতি; অতএব সে স্থানে গমন করাটা যদি অত্যন্ত পরিশ্রমকর বিবেচনা না করেন, কিংবা কোন গুরুতর কার্য্যের ব্যাঘাত না হয়, অথবা পূর্ব্বে যে দেশ দেখেন নাই, তাহা দেখিবার জন্য আপনার মনে যদি কৌতূহল থাকে, কিংবা আপনি যদি আমার অনুরোধ রক্ষা করিতে ইচ্ছা করেন, কিংবা কোন আশ্চর্য্য দর্শন করা যদি আপনার সুখ জন্মায়, অথবা আমি যদি আপনার প্রণয়ের যোগ্য হই, কিংবা যদি এই ব্যক্তিকে প্রত্যাখ্যান করা অনুচিত মনে করেন, অথবা আপনার সহিত আমার যদি পরিচয়ের লেশও জন্মিয়া থাকে, কিংবা এই ব্যক্তি যদি আপনার অনুগ্রহের যোগ্য হয়, তাহা হইলে অপনি আমার এই প্রার্থনা নিষ্ফল করিতে পারিবেন না। (ফ) অত্যন্ত সৌন্দর্য্যের আবাসভূমি সেই হেমকূট পর্ব্বতে আমারই সহিত গমন করিয়া, সেখানে আমারই মতন কাদম্বরীকে দেখিয়া, তাহার কু-সংস্কার-জনিত চিত্তভ্রমের আচরণ দূর করিয়া এবং একটি দিনমাত্র সেখানে বিশ্রাম করিয়া আবার পরদিন ফিরিয়া আসিবেন। (ব) আপনি বিনা কারণেই আমার বন্ধু হইয়াছেন-সুতরাং আপনাকে দেখিয়াই আমার চিত্ত দুঃখান্ধকারে পরিপূর্ণ হই-

---

(১) ভবন্মতিঃ। (২) অতিসুখদায়ি বা। (৩) অত্যাশ্চর্য্যদর্শনম্।
(৪) অর্হামি বা প্রণয়ম্,...প্রণয়ানিলম্।

श्रावयित्वा स्ववृत्तान्तमिमं सह्यतामिव गतः शोकः। दुःखितमपि जनं रमयन्ति सज्जनसमागमाः (ब)। परसुखोपपादनपराधीनस्य भवादृशां गुणोदयः" (भ)। इत्युक्तवतीं तां चन्द्रापीडोऽब्रवीत्—"भगवति! दर्शनात्प्रभृति परवानयं जनः कर्त्तव्येषु यथेष्टमशङ्कितया नियुज्यताम्" इत्यभिधाय तया सहैवोदचलत् (म)।

क्रमेण च गत्वा हेमकूटमासाद्य गन्धर्वराजकुलम्, समतीत्य काञ्चनतोरणानि सप्तकक्षान्तराणि कन्यान्तःपुरद्वारमवाप (य)। महाश्वेतादर्शनप्रधावितेन दूरादेव कृतप्रणामेन कनकवेत्रलताहस्तेन प्रतीहारजनेनोपदिश्यमानमार्गः

---

उच्छ्वसितमिव प्राणितमिव, इयन्तं कालं यावन्मृतमिवासीदिति भावः, तथा इमं स्ववृत्तान्तं श्रावयित्वा विद्यमानया मम शोकः सह्यतां गत इव, "शोकक्षोभे च हृदयं प्रलापैरेव धार्य्यते" इति न्यायादिति भावः। ननु कुत एतदित्याह दुःखितमिति सज्जनसमागमा दुःखितमपि जनं रमयन्ति आनन्दयन्ति, दर्शनेनैव नवसुखसम्पादनद्वारा चिरन्तनदुःखविध्वंसनादिति भावः। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः।

(भ) विशेषतस्त्वाह परेति। भवादृशां गुणोदयो दयादाक्षिण्यादीनां गुणानामभ्युदयः परेषां सुखोपपादनपराधीनः सुखोत्पादनपरायण इत्यर्थः, सुतरां मया सह तत्र गत्वा मामवश्यमेव सुखयिष्यसीति भावः। चन्द्रापीडस्य रूपादिगुणग्राममवलोक्यावश्यमेव कादम्बरी परिमुह्यन्ती कृतमपि शपथं परिहरिष्यतीति मत्वा चन्द्रापीडम् तत्र नेतुमेतावान् महाश्वेतायाः प्रयत्न इति बोध्यम्।

(म) इतीति। एतां महाश्वेताम्। परवान् पराधीनः सौजन्यातिशयात्त्वदधीन इत्यर्थः।

(य) क्रमेणेति। किञ्च, चन्द्रापीडो गत्वा, गन्धर्वराजस्य चित्ररथस्य कुलं वाटी यत्र तादृशं हेमकूटं पर्वतमासाद्य, काञ्चनानां तोरणानि येषु तादृशानि सप्तकक्षान्तराणि समतीत्येत्यन्वयः।

(र) महेति। महाश्वेतायाः दर्शनेन प्रधावितो द्रुतमागतस्तेन। कनकवेत्रलताः स्वर्णखचितवेत्रयष्टयो हस्तेषु यस्य तेन, प्रतीहारजनेन दौवारिकगणेन उपदिश्यमानो मार्गः पन्था यस्य सः, कुमारश्चन्द्रापीडः,

---

লেও বহুকালের পর যেন উচ্ছ্বসিত হইয়া উঠিয়াছে এবং আপনাকে নিজের এই বৃত্তান্ত শুনাইয়া সেই শোকটা যেন সহ্য হইয়াছে বলিয়া বোধ হইতেছে; কারণ, সজ্জনের সহিত সংসর্গ দুঃখিত ব্যক্তিকেও আনন্দিত করিয়া থাকে। (ভ) বিশেষতঃ, ভবাদৃশ ব্যক্তিদের গুণগ্রাম, সর্ব্বদাই পরের সুখসম্পাদনে প্রবৃত্ত থাকে।" মহাশ্বেতা এই কথা বলিলে চন্দ্রাপীড় তাহাকে বলিলেন,—"ভগবতি! আপনার সন্দর্শন হইতে আরম্ভ করিয়া এই ব্যক্তি আপনার অধীন হইয়া পড়িয়াছে; সুতরাং আপনি নিঃশঙ্কচিত্তে ইচ্ছানুসারে এই ব্যক্তিকে কর্ত্তব্য কার্য্যে নিযুক্ত করিতে পারেন।" এই কথা বলিয়া চন্দ্রাপীড় মহাশ্বেতার সঙ্গেই চলিলেন।

(য) ক্রমে যাইয়া, গন্ধর্ব্বরাজের রাজধানী হেমকূট পর্ব্বতে উপস্থিত হইয়া, স্বর্ণ-তোরণসমন্বিত সাতটি কক্ষা অতিক্রম করিয়া কন্যাপুরের দ্বারে উপস্থিত হইলেন। (র) তখন স্বর্ণখচিত-বেত্রযষ্টিধারী দৌবারিকগণ, মহাশ্বেতাকে দেখিয়া দ্রুত আসিয়া দূর হইতেই প্রণাম করিয়া

प्रविश्य (र) असंख्येयनारीशतसहस्रसम्बाधम्, (१) स्त्रीमयमपरमिव जीवलोकम्, (ल) इयत्तां ग्रहीतुमेकत्र त्रैलोक्यस्त्रैणमिव संगृहीतम्, (२) (व) अपुरुषमिव सर्गान्तरम्, (श) अङ्गनाद्वीपमिवापूर्वमुत्पन्नम्, (ष) पञ्चममिव नारीयुगावतारम्, (स) अपरमिव पुरुषद्वेषिप्रजापतिनिर्म्माणम्, (ह) अनेक-कल्प-कल्पनार्थमुत्पाद्य स्थापितमिवाङ्गनाकोषम्, (३) (क्ष) अतिविस्तारिणा युवतिजन-

कुमारीपुराभ्यन्तरं ददर्शेति परेणान्वयः । अत्र स्त्रीवलिवाहितीर्थ कवचनान्तपदानि कुमारीपुराभ्यन्तरमिति वक्ष्यमाणस्य विशेषणानि । मध्यार्श्वतामत्ययाचन्द्रापीड़ं न कश्चिन्नवारयामासेति बोध्यम् ।

(ल) असङ्ख्येति । असंख्येयानि संख्यातुमशक्यानि नारीणां शतसहस्राणि लक्षाणि तैः सम्बाधं सङ्कीर्णं व्याप्तम् । इदमङ्गनाकोषमित्यन्तं यावत् प्रत्येकविशेषणं प्रत्येव हेतुरिति बोध्यम । तथा च अतएव स्त्रीमयमपरं जीवलोकमिव । अत्र जात्युत्प्रेक्षालङ्कारः ।

(व) इयत्तामिति । इयत्ता ग्रहीतुम् एतावत्यो नार्य्य इति संख्यां ज्ञातुं विधिना एकत्र संगृहीतमानीतं त्रैलोक्यस्य त्रिभुवनस्य स्त्रैणं स्त्रीसमूहमिव । जात्युत्प्रेक्षा ।

(श) अपुरुषमिति । अपुरुषं सर्गान्तरमिव पुरुषवर्जितामन्यां विधेः सृष्टिमिव । अत्र क्रियोत्प्रेक्षा ।

(ष) अङ्गनेति । अपूर्वं नूतनमुत्पन्नम् अङ्गनानां स्त्रीणां द्वीपमिव । जात्युत्प्रेक्षा ।

(स) पञ्चममिति । पञ्चमं नारीयुगावतारमिव । चत्वारः सत्यादियुगावतारास्तु सन्त्येव किन्त्वसौ नारीमयस्तत्पञ्चम इव प्रतीत इति भावः । अत्र क्रियोत्प्रेक्षा ।

(ह) अपरमिति । अपरमन्यत् पुरुषद्वेषिणः प्रजापतेर्विधातुर्निर्म्माणं सृष्टिमिव । अत्रापि क्रियोत्प्रेक्षा । पुरुषद्वेषिपदेन केवलस्त्रीनिर्म्माणमेव सूचितम् ।

(क्ष) अनेकेति । अनेककल्पेषु कल्पनार्थं स्त्रीणामितसृष्ट्यर्थम् उत्पाद्य विधिना निर्म्माय स्थापितम् अङ्गनाकोषं स्त्रीभाण्डागारमिव । अत्र जात्युत्प्रेक्षा ।

অগ্রে অগ্রে পথ বলিয়া দিতে দিতে চলিল—এই অবস্থায় চন্দ্রাপীড় প্রবেশ করিয়া কন্যাপুরের অভ্যন্তরদেশ দেখিতে পাইলেন। (ল) দেখিলেন, সেই কন্যাপুর, লক্ষ লক্ষ রমণীগণে পরিপূর্ণ রহিয়াছে; তাহাতে, স্ত্রীময় আর একটি জীবলোকের ন্যায় বোধ হইতে লাগিল; (ব) ত্রিভুবনে কত স্ত্রীলোক আছে তাহার সংখ্যা জানিবার জন্য, বিধাতা যেন ত্রিভুবনের সমস্ত স্ত্রীলোক একত্র সংগ্রহ করিয়াছিলেন; (শ) পুরুষবর্জ্জিত আর একটি সৃষ্টি বলিয়া বোধ হইতে লাগিল; (ষ) স্ত্রীলোকময় নূতন আর একটি দ্বীপ যেন উৎপন্ন হইয়াছিল; (স) পঞ্চম নারীযুগ যেন অবতীর্ণ হইয়াছিল; (হ) পুরুষবিদ্বেষী বিধাতার অন্য আর একটি সৃষ্টি বলিয়া বোধ হইতেছিল; (ক্ষ) বিধাতা অন্য অন্য কল্পে স্ত্রীলোক সৃষ্টি করিবেন বলিয়া, আগেই তাহার কতকগুলি সৃষ্টি করিয়া স্ত্রীলোকের একটা ভাণ্ডার যেন সেখানে রাখিয়া দিয়াছিলেন; (ক)

(१)…सम्बाधः । (२) संवृतम् । (३)…कोशम् ।

लावण्यप्रभापूरेण प्लावितदिगन्तरेण सिञ्चतेवामृतरसविसरेण दिवसमार्द्रीकुर्वतेव भुवनान्तरालं बहुल-(१) प्रभावर्षिणा मरकतमणिमयेन सर्वतः परिगततया तेजोमयमिव, चन्द्रमण्डलसहस्रैरिव निर्म्मितसंस्थानम्, ज्योत्स्नयेव घटितसन्निवेशम्, आभरणप्रभाभिरिव निष्पादितदिगन्तरम्, (क) विभ्रमैरिव कृतसर्वोपकरणम्, (ख) यौवनविलासैरिवोत्पादितावयवम्, (ग) रतिविलसितैरिव रचित-(२) सञ्चयम्, (घ) मन्मथाचरितैरिव कल्पितावकाशम्, (ङ) अनुरागेण-

---

(क) लावण्येति। अतिविस्तारिणा अतिमहता, प्लावितानि व्याप्तानि दिगन्तराणि येन तेन, अतएव अमृतरसविसरेण पीयूषद्रवविसारेण करणेन दिवसं सिञ्चतेव, तथा अमृतरसविसरेणैव भुवनान्तरालमार्द्रीकुर्वतेव स्थितेन, युवतिजनानां लावण्यस्य यः प्रभापूरः कान्तिप्रवाहस्तेन करणेन, तथा बहुलप्रभावर्षिणा मरकतमणिमयेन भूषणेन च करणेन, सर्वतः समन्तात् परिगतं व्याप्तं तस्य भावस्तया हेतुना, तेजोमयमिव केवलतेजसा निर्म्मितमिव, चन्द्रमण्डलसहस्रैर्निर्म्मितं संस्थानमाकारो यस्य तदिव, तथा ज्योत्स्नया घटितो निर्म्मितः सन्निवेश आकृतिर्यस्य तदिव, लावण्यप्रभाचन्द्रमण्डलज्योत्स्नानां पाण्डुतासामान्यादिति भावः। तथा आभरणप्रभाभिर्निष्पादितानि दिगन्तराणि यस्य तादृशं, भूषणस्य बहुलप्रभावर्षणादिति भावः। अत्र सिञ्चतेव आर्द्रीकुर्वतेवेति च क्रियोत्प्रेक्षे तथा तेजोमयमिति निष्पादक्रियार्थे मयट्प्रत्ययात्तस्याश्चोत्प्रेक्षणात् निर्म्माणघटननिष्पादनानामपि क्रियाणामेवोत्प्रेक्षणात्ता अपि अतस्ताः क्रियोत्प्रेक्षास्तासाञ्च परस्परनिरपेक्षतया संसृष्टिः।

(ख) विभ्रमैरिति। विभ्रमैर्विलासैः कृतानि सर्वाणि उपकरणानि सामग्र्यो यस्य तदिव। क्रियोत्प्रेक्षा।

(ग) यौवनेति। यौवनविलासैरुत्पादिता अवयवाः प्रदेशा यस्य तदिव। क्रियोत्प्रेक्षा। पूर्वं विभ्रमाः कृत्रिमाः, अत्र तु यौवनविलासाः स्वाभाविका इति भेदः।

(घ) रतीति। रतेः कामभार्यायाः विलसितैर्विलासैः रचितो निर्म्मितः सञ्चयो व्यापारसमूहो यस्य तदिव। क्रियोत्प्रेक्षा।

(ङ) मन्मथेति। मन्मथाचरितैर्मदनाचरणैः कल्पितावकाशं निर्म्मितप्रदेशमिव। क्रियोत्प्रेक्षा।

যুবতিগণের লাবণ্যকান্তির বিস্তৃত প্রবাহ দিগ্‌দিগন্তর প্লাবিত করিয়া, অমৃত রসের ধারাতেই যেন দিনটাকে সিক্ত করিতেছিল এবং জগতের মধ্যস্থান সকল যেন আর্দ্র করিতেছিল এবং মরকতমণিময় আভরণ হইতে প্রচুর প্রভা নির্গত হইতেছিল; সুতরাং সেই লাবণ্য কান্তির প্রবাহে এবং সেই অলঙ্কারের আলোকে সকল দিক ব্যাপ্ত ছিল বলিয়া, সেই কন্যাপুরের ভিতরটা যেন আলোকময় বলিয়া বোধ হইতে লাগিল, এবং তাহার অংশগুলিকে বিধাতা যেন সহস্র চন্দ্রমণ্ডলদ্বারা নির্ম্মাণ করিয়াছিলেন; সমস্ত স্থানটাই যেন জ্যোৎস্নাদ্বারা প্রস্তুত করিয়াছিলেন এবং অলঙ্কারের আলোকেই যেন দিগ্‌দিগন্তর সৃষ্টি করিয়াছিলেন বলিয়া প্রতীতি হইতেছিল; (খ) কৃত্রিম হাব ভাবেই যেন তাহার সমস্ত সামগ্রী তৈয়ার করা হইয়াছিল; (গ) স্বাভাবিক যৌবনবিলাসেই যেন তাহার সমস্ত অংশ নির্ম্মিত হইয়াছিল; (ঘ) রতিদেবীর বিভ্রমদ্বারাই যেন কার্য্যকলাপ সৃষ্টি করা হইয়াছিল; (ঙ) কামদেবের আচরণেই

---

(१) बहुल…। (२) विरचित…।

বানুলিপ্তসকলপ্রদেশম্, (১)(চ) শৃঙ্গারময়মিব, সৌন্দর্য্যময়মিব, সুরতাধিদৈবত-ময়মিব, কুসুমশরময়মিব, কুতূহলময়মিব, আশ্চর্য্যময়মিব, সৌকুমার্য্যময়-মিব, কুমারঃ কুমারীপুরাভ্যন্তরং দদর্শ। (ছ)

অতিবহুলতয়া চ তস্য কন্যকাজনস্য সমন্তাদাননদ্যুতিভিরিন্দুবিম্ববৃষ্টি-মিব পতন্তীম্, (জ) অপাঙ্গবিক্ষেপৈর্বলিতকুবলয়বনময়ীমিব ক্রিয়মাণামব-নীম্, (ঝ) অনিভৃত-(২) ভ্রূলতাবিভ্রমৈঃ কাম-কার্ম্মুক-বিলাস-শতানীব (৩) প্রচলিতানি, (ঞ) শিরসিজকলাপান্ধকারৈর্বহুলপক্ষ-প্রদোষ-সার্থানিব সম্বধতঃ,

---

(চ) অন্বিতি। অনুরাগেণানুলিপ্তসকলপ্রদেশমিব। ক্রিয়োৎপ্রেক্ষা।

(ছ) শৃঙ্গারেতি। অত্র তু সর্ব্বত্র ব্যাপ্তৌ ময়ট্প্রত্যয়াত্তস্যাশ্চ ক্রিয়ারূপত্বাৎ ক্রিয়োৎপ্রেক্ষালঙ্কারঃ।

(জ) অতীতি। কিঞ্চ, চন্দ্রাপীড়ঃ, তস্য কন্যকাজনস্য অতিবহুলতয়া নিতান্তপ্রচুরতয়া হেতুনা, আনন-দ্যুতিভিস্তস্যৈব কন্যকাজনস্য বদনকান্তিভিঃ করণৈঃ, সমন্তাৎ পতন্তীম্ ইন্দুবিম্ববৃষ্টিমিব অদ্রাক্ষীদিতি পরেণান্বয়ঃ, এবমন্যত্রাপি। অত্র মুখকান্তিপ্রসরণেষু চন্দ্রমণ্ডলবর্ষণোৎপ্রেক্ষণাৎ ক্রিয়োৎপ্রেক্ষালঙ্কারঃ, তেন চ মুখানাং চন্দ্রমণ্ডলৌপম্যং ব্যজ্যতে ইত্যলঙ্কারেণালঙ্কারধ্বনিঃ, অন্যত্রাপ্যেবং ধ্বনিরূহনীয়ঃ।

(ঝ) অপাঙ্গেতি। অপাঙ্গবিক্ষেপৈঃ কটাক্ষপাতৈঃ, অবনীং ভূমিম্, বলিতং যৎ কুবলয়বনং নীলোৎপল-সমূহস্তন্ময়ীং ক্রিয়মাণামিব। অত্রাপি ক্রিয়োৎপ্রেক্ষালঙ্কারঃ।

(ঞ) অনীতি। অনিভৃতাঃ স্পষ্টা যে ভ্রূলতয়োর্বিভ্রমা নর্ত্তনানি তৈঃ, প্রচলিতানি বাণক্ষেপায় স্পন্দন-বন্তি, কামকার্ম্মুকস্য বিলাসশতানীব বিভ্রমসমূহানিব। অত্র জাত্যুৎপ্রেক্ষালঙ্কারঃ।

(ট) শিরসীতি। শিরসিজকলাপাঃ কেশপাশা এব কৃষ্ণত্বসাম্যাদন্ধকারাস্তৈঃ সম্বধতঃ সম্মিলতঃ, বহুল-পক্ষাণাং কৃষ্ণপক্ষাণাং প্রদোষসার্থান্ প্রদোষকালসমূহানিব। অত্র নিরঙ্গকেবলরূপকজাত্যুৎপ্রেক্ষয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ। "সার্থো বণিক্সমূহে স্যাদপি সঙ্ঘাতমাত্রকে।" ইতি মেদিনী।

---

যেন ভিতরটা নির্ম্মাণ করা হইয়াছিল; (চ) এবং অনুরাগদ্বারাই যেন সকল স্থান লেপিয়া দেওয়া হইয়াছিল; (ছ) এবং সেই কন্যাপুরের মধ্যস্থানটা যেন শৃঙ্গারময়, সৌন্দর্য্যময়, ……মদনবাণময়, কৌতুকময়, আশ্চর্য্যময় ও কোমলতাময় ছিল।

(জ) চন্দ্রাপীড় আরও দেখিলেন যে,—সেখানে কন্যারা খুব বেশী সংখ্যায় ছিল বলিয়া, সকল দিকেই তাহাদের মুখের শোভা প্রকাশ পাইতে থাকায় যেন চন্দ্রমণ্ডলের বর্ষা হইতে-ছিল; (ঝ) তাহারা কটাক্ষপাত করিয়া ভূতলটাকে যেন নীলোৎপলবনময় করিতেছিল; (ঞ) প্রকাশ্যভাবে ভ্রূক্ষেপ হইতে থাকায়, বহুতর কামধনুই যেন ঘূর্ণিত হইতেছিল; (ট) কেশকলাপরূপ অন্ধকার থাকায়, কৃষ্ণপক্ষের অসংখ্য প্রদোষ কালই যেন সম্মিলিত হইয়াছিল;

---

(১)…প্রদেশম্। (২) অভিনিভৃত…। (৩) কামকার্ম্মুকবলানীব।

(ঢ) স্মিতপ্রভাভিরুৎফুল্লকুসুম-ধবলানিব বসন্তদিবসান্ সঞ্চরতঃ, (ঠ) শ্বসিতা-নিলপরিমলৈর্মলয়মারুতানিব পরিভ্রমতঃ, (ড) কপোলমণ্ডলালোকৈর্মাণিক্য-দর্পণসহস্রাণীব স্ফুরিতানি, (ঢ) করতলরাগেণ রক্তকমলবনবর্ষিণমিব জীব-লোকম্, (ণ) কররুহকিরণস্ফুরণেন (১) কুসুমায়ুধশরসহস্রৈরিব সংছাদি-তানি দিগন্তরাণি, (২) (ত) আভরণকিরণেন্দ্রায়ুধজালকৈরুড্ডীয়মানানীব ভবন-(৩) ময়ূরবৃন্দানি, (থ) যৌবনবিকারৈরুৎপাদ্যমানানীব মন্মথসহস্রাণ্য-দ্রাক্ষীৎ। (দ)

উচিতব্যাপারব্যপদেশেন কুমারিকাণাং সখীহস্তাবলম্বেষু পাণিগ্রহণাণি,

---

(ঠ) স্মিতেতি। স্মিতপ্রভাভিঃ, সঞ্চরত উৎফুল্লকুসুমধবলান্ বসন্তদিবসানিব। অত্র উৎপ্রেক্ষা।

(ড) শ্বসিতেতি। শ্বসিতানিলপরিমলৈর্নিঃশ্বাসবায়ুসৌরভৈঃ, পরিভ্রমতো মলয়মারুতানিব। উৎপ্রেক্ষা।

(ঢ) কপোলেতি। কপোলমণ্ডলানামালোকৈর্দীপ্তিভিঃ স্ফুরিতানি মাণিক্যদর্পণসহস্রাণীব। উৎপ্রেক্ষা।

[ণ] করেতি। করতলানাং রাগেণ রক্তিম্না, জীবলোকং রক্তকমলবর্ষিণমিব। ক্রিয়োৎপ্রেক্ষা।

[ত] করেতি। কররুহাণাং নখানাং কিরণস্ফুরণেন প্রভাপ্রসরণেন, দিগন্তরাণি কুসুমায়ুধস্য মদনস্য শরসহস্রৈঃ সংছাদিতানীব। ক্রিয়োৎপ্রেক্ষা।

(থ) আভেতি। আভরণকিরণা ইন্দ্রায়ুধানীব অথবা আভরণকিরণা এবেন্দ্রায়ুধানি তৈষাং জালকৈঃ-সমূহৈঃ, উড্ডীয়মানানি ভবনময়ূরবৃন্দানীব, তদ্বর্ণানাং বিচিত্রত্বাদিতি ভাবঃ। অত্রোপমারূপ-কয়োঃ সন্দেহসঙ্করেণ সঙ্কীর্ণা উৎপ্রেক্ষালঙ্কারঃ।

[দ] যৌবনেতি। যৌবনবিকারৈঃ কন্যকাজনৈরুৎপাদ্যমানানি মন্মথসহস্রাণীব। উৎপ্রেক্ষা।

[ধ] উচিতেতি। চন্দ্রাপীড়ঃ, উচিতব্যাপারব্যপদেশেন কর্তব্যকার্যকরণচ্ছলেন অতিরিক্তং সুরত-

---

(ঠ) ঈষৎ হাস্যের প্রভা প্রকাশ পাইতে থাকায়, কতকগুলিই বসন্তকালের দিনই যেন প্রস্ফুটিত পুষ্পে ধবলবর্ণ হইয়া বিচরণ করিতেছিল; (ড) নিশ্বাসবায়ুর সৌরভ বহিতেছিল বলিয়া, মলয়-বায়ুই যেন পরিভ্রমণ করিতেছিল; (ঢ) কপোলমণ্ডলের প্রভা প্রকাশিত হওয়ায়, অসংখ্য মণি-ময় দর্পণই যেন দীপ্তি পাইতেছিল; (ণ) পাণিতলের রক্তিমা প্রকাশ পাইতে থাকায়, জগৎ-সংসার যেন রক্ত পদ্ম বর্ষা করিতেছিল; (ত) নখের কিরণ প্রসারিত হওয়ায়, দিগ্‌দিগন্তর যেন সহস্র সহস্র কামবাণে আবৃত হইয়াছিল; (থ) ইন্দ্রধনুর ন্যায় অলঙ্কারের কিরণসমূহ উত্থিত হইতে থাকায়, গৃহপালিত ময়ূরগণই যেন উড়িতেছিল; (দ) এবং সেই কন্যাগণ যৌবনবিকারেই যেন সহস্র সহস্র কামদেব সৃষ্টি করিতেছিল।

---

[১] কররুহস্ফুরণেন। [২] সংছাদিতদিগন্তরাণি, সংছাদিতমহদিগন্তম্। [৩] ভুবন।

वेणुवाद्येषु चुम्बनव्यतिकरान्, वीणासु कररुहव्यापारान्, कन्दुकक्रीडासु करतल-प्रहारान्, भवन-(१) लता-सेक-कलस-कण्ठेषु भुजलतापरिष्वङ्गान् लीलादोलासु नितम्ब-स्तन-(२) प्रेङ्खितानि, ताम्बूलवीटिकाखण्डनेषु दशनोपचारान्, बकुल-विटपेषु मधुगण्डूषप्रचारान्, अशोकतरुताडनेषु चरणाभिघातान्, उपहारकुसुम-स्खलनेषु सीत्कारान्, (३) अतिरिक्तं सुरतमिवाभ्यस्यन्तीनामपश्यत् ।

यत्र च (४) कन्यकाजनस्य कपोलतलालोक एव मुखप्रक्षालनम्, लोचनान्येव कर्णोत्पलानि, हसित-च्छवय एवाङ्गरागाः, निश्वासाः (५) एवाधिवासगन्ध-प्रयुक्तयः, अधरद्युतिरेव कुङ्कुमानुलेपनम्, (६) आलापा एव तन्त्रीनिनादाः, भुजलता एव चम्पकमालाः, (७) करतलान्येव लीलाकमलानि, स्तना एव

---

अभ्यस्यन्तीनामिव तासां कुमारिकाणामेतान्याचरणान्यपश्यदित्यन्वयः । तान्येव सुरतकालीनाचरणानि प्रदर्श-यितुमाह सखीत्यादि । सखीहस्तावलम्बेषु सखीनां करहस्तधारणेषु, पाणिग्रहणानि सुरतकालीनवल्लभकर्तृक-हस्तधारणानि । वेणुवाद्येषु वंशीवादनेषु चुम्बनव्यतिकरान् चुम्बनव्यापारान् । वीणासु वीणावादनेषु, कर-रुहव्यापारान् नखक्षतानि । कन्दुकक्रीडासु गेण्डुकविलासु । भवनलतानां ये सेककलसाः सेचनकुम्भास्तेषां कण्ठेषु, भुजलताभ्यां परिष्वङ्गानालिङ्गनानि लीलादोलासु तत्र दोलनेष्वित्यर्थः, नितम्बयोः स्तनयोश्च प्रेङ्खि-तानि आस्फालनानि । ताम्बूलवीटिकानाम् अवखण्डनेषु चर्वणेषु, दशनोपचारान् दन्तव्यापारणानि । बकुल-विटपेषु बकुलवृक्षेषु, मधुगण्डूषप्रचारान् तत्कुसुमविकासनाय मुखपूर्णमद्यप्रक्षेपान् । उपहाराय कुसुमानि उपहारकुसुमानि शोभासम्पादनाय भूतलन्यस्तानि पुष्पाणि तेषु स्खलनेषु पतनेषु, दृढतरदन्तप्रहारादिषु पीडा-व्यञ्जकाः 'सीत्' इत्येवं शब्दाः सीत्कारास्तान् । उपहारकुसुमस्खलनेषु तु भूतलपातसम्भावनाभयात् सीत्-कारप्रयोग इति बोध्यम् । अत्र सापह्नवक्रियोत्प्रेक्षालङ्कार इति दिक् ।

(म) यत्रेति । कपोलतलालोक एव गण्डस्थलप्रभैव, मुखं प्रक्षाल्यते अनेनेति मुखप्रक्षालनं तदुप-योगिजलस्वरूपम् । एतेन कपोलतलानां लावण्यातिशयो व्यज्यते । लोचनान्येव कर्णोत्पलानि, इत्यनेन लोचनानां नीलत्वं दीर्घत्वञ्च सूच्यते । हसितच्छवय एव हास्यद्युतय एव अङ्गरागाः । एतेन हसितच्छवी-नामतीव वैशद्यं द्योत्यते । निश्वासा एव अधिवासगन्धप्रयुक्तयः शरीरसंस्काराय गन्धप्रयोगाः । "संस्कारो गन्ध-माल्याद्यैः स्यात्तदधिवासन"मित्यमरः । एतेन निश्वासानामतीव सौगन्ध्यं ध्वन्यते । अधरेत्यादिना तयोरतीव

---

(ध) ... ... ... ... ... ।

(न) এবং যেখানে কন্যাগণের গণ্ডস্থলের লাবণ্যই মুখপ্রক্ষালনের জল, নয়নযুগলই কর্ণের উৎপল, হাস্যের শোভাই অঙ্গরাগ, নিশ্বাসবায়ুই শরীর-সংস্কারে গন্ধপ্রয়োগ, ওষ্ঠের প্রভাই কুঙ্কুম-লেপন, পরস্পর আলাপই তন্ত্রীর ঝঙ্কার, ভুজলতাই চম্পকপুষ্পের মালা, পাণি-

---

(१) भुवन...। (२)...स्थल...। (३) शीत्कारान् । (४) यत्र च । (५) निःश्वासाः ।
(६) कुङ्कुमसमालम्भनम् । (७) चम्पककर्णमालाः ।

दर्पणाः, निजदेहप्रभैवांशुकावगुण्ठनम्, जघनस्थलान्येव विलासमणिशिलातलानि, कोमलाङ्गुलिराग एव चरणालक्तकरसः, नखमणिमरीचय एव कुट्टिमोपहारकुसुमप्रकराः। (न)

यत्र चालक्तकरसोऽपि चरणातिभारः, बकुलमालिकामेखलाकलनमपि गमनविघ्नकरम्, अङ्गरागगौरवमप्यधिकश्वासनिमित्तम्, अंशुकभारोऽपि ग्लानिकारणम्, मङ्गलप्रतिसरवलयविधृतिरपि करतलविधुतिहेतुः, अवतंसकुसुमधारणमपि श्रमः, कर्णपूर-कमल-मधुकर-पक्ष-पवनोऽप्यायासकरः। (प)

---

रक्तत्वं सूच्यते। आलापा इत्यादिना तेषां परममधुरस्वरत्वम् द्योत्यते। भुजलतेत्यादिना तासां नितान्तकोमलगौरत्वं प्रत्याय्यते। लीलार्थानि कमलानि लीलाकमलानि। एतेन करतलानामारक्तत्वं गम्यते। स्तना इत्यादिना तेषां स्वच्छत्वं व्यज्यते। अंशुकावगुण्ठनं वस्त्रावरणम्। एतेन देहप्रभाप्राचुर्यं सूच्यते। जघनेत्यादिना तेषां विस्तीर्णता उज्ज्वलता निर्मलता च ध्वन्यते। कोमलानामङ्गुलीनामथोश्चरणाङ्गुलीनां रागः स्वाभाविकरक्तिमैव चरणालक्तकरसः। एतेन रागातिशयो व्यज्यते। नखमणीनां चरणनखापितानां मणीनां मरीचयः किरणा एव कुट्टिमेषु बद्धभूतलेषु उपहारकुसुमप्रकराः शोभासम्पादनाय विकीर्णपुष्पनिवहाः। एतेन नखमणिमरीचीनां पदे पदे पुञ्जीभावो धन्यते। सर्वत्र यथासम्भवमासीदासन्निति वा क्रियापदं योज्यम्। अत्र प्रत्येकवाक्य एव "मुखं तव कुरङ्गाक्षि! सरोजमिति नान्यथा" इति साहित्यदर्पणोदाहृतवत् सन्देहाभावेऽपि निरङ्गकेवलरूपकमलङ्कारः।

(प) यत्रेति। अलक्तकरसोऽपि चरणयोरलक्तकरसलेपोऽपि। बकुलमालिका बकुलकुसुममालेव मेखला काञ्ची तस्याः कलनमपि कट्यां धारणमपि गमनविघ्नकरम्, नितान्तभारबोधादिति भावः। अङ्गरागगौरवमपि गात्रलिप्ताङ्गरागद्रव्यभारोऽपि अधिकश्वासनिमित्तम्, परिश्रमजनकत्वादित्याशयः। अंशुकभारोऽपि परिहितसूक्ष्मवसनभारोऽपि। मङ्गलप्रतिसरो माङ्गलिकहस्तसूत्रमेव वलयं तस्य विधृतिर्धारणमपि करतलविधुतिहेतुः हस्तकम्पनकारणम्, भारातिशयानुभवादित्यभिप्रायः। श्रमः श्रमजनकम्, भारबोधादिति भावः। कर्णपूरकमलेषु कर्णाभरणीभूतपद्मेषु ये मधुकरास्तेषां पक्षपवनोऽपि पक्षकम्पनजनितवायुरपि आयासकरः, आधिक्यबोधादित्याशयः। सर्वत्र आसीदिति शेषः। अत्र प्रत्येकवाक्य एव असम्बन्धे सम्बन्धरूपातिशयोक्तिरलङ्कारः। तेन च तासां कुमारीणामतीव सौकुमार्यं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः।

---

তলই লীলাপদ্ম, স্তনমণ্ডলই দর্পণ, নিজদেহের কান্তিই বস্ত্রাবরণ, নিতম্বমণ্ডলই বিলাসের মণিশিলা, কোমল অঙ্গুলীসমূহের রক্তিমাই চরণের অলক্তক রস এবং নখের উপরে প্রদত্ত রত্নের কিরণই ভূতল-বিক্ষিপ্ত পুষ্প ছিল।

(প) আর যেখানে, আলতার রসও পায়ে ভার বোধ হইত, বকুলফুলের মালার চন্দ্রহার ধারণও গমনের বিঘ্ন করিত, অঙ্গরাগের ভারও অত্যন্ত শ্বাসের কারণ ছিল, সূক্ষ্ম বস্ত্রের ভারও গ্লানির কারণ হইত, মাঙ্গলিক হস্তসূত্র ধারণও হস্ত কম্পনের হেতু ছিল, মস্তকে পুষ্প-

तथा च यत्र सखीदर्शनेष्वकृतहस्तावलम्बनमुत्थानमतिसाहसम्, प्रसाधनेषु हारभारसहिष्णुता स्तनकाठिन्यप्रभावः, कुसुमावचयेषु द्वितीयकुसुम-(१) ग्रहण-मप्ययुवतिजनोचितम्, कन्यकाविज्ञानेषु माल्यग्रथनम् (२) अस्तुकुमारजनव्यापारः, देवताप्रणामेषु मध्यभागभङ्गो नातिविस्मयकरः। (फ)

---

(फ) अथ प्रकारान्तरैरपि तासामतिसौकुमार्य्यं प्रतिपादयितुमाह तथाचेति। तथा च अपि चेत्यर्थः। सखीदर्शनेषु नवागतासु सखीषु दृष्टास्वित्यर्थः, न कृतं सत्वरत्वेनावसराभावान्न विहितं हस्तावलम्बनं परिचारिकाया हस्तधारणं यस्मिन् तत्तादृशं यदुत्थानम् अभ्यर्थनार्थं गात्रोत्थानं तदप्यतिसाहसं हठकारित्वम्। एतेन दाक्षिण्यातिशयः सौकुमार्य्यातिशयश्च ध्वन्यते। प्रसाधनेषु अलङ्करणेषु, या हारस्य मुक्तामालया भारसहिष्णुता सा स्तनकाठिन्यप्रभावः केवलयोः स्तनयोरेव कठिनताया माहात्म्यम्, न पुनरन्याङ्गानामिति भावः। एतेनान्याङ्गानां कोमलतातिशयः स्तनयोः काठिन्यातिशयश्च व्यज्यते। कुसुमावचयेषु पुष्पचयनव्यापारेषु, द्वितीयकुसुमग्रहणम् एकस्मात् परम् अपरं पुष्पचयनमपि अयुवतिजनोचितम्, अपि तु कठिनपुरुषोचितमेवेत्यर्थः। एतेन मार्द्दवातिशयो द्योत्यते। कन्यकाविज्ञानेषु तत्रत्यकन्याजनोचितशिल्पकलासु मध्ये यन्माल्यग्रथनं पुष्पमालानुगुम्फनं तदपि अस्तुकुमारजनव्यापारः कठिनजनकार्य्यम्। एतेनापि सौकुमार्य्यातिशयः सूच्यते। देवताप्रणामेषु देवताभ्यो नमस्कारकालेषु मध्यभागभङ्गः कटिदेशस्य द्वैधीभावो यन्नाभवत्, स द्वैधीभावाभावः अतिविस्मयकरः, तासां कटिदेशा ईदृशक्षीणा आसन्, यन्नमस्कारवेलायां मस्तकनमने तद्भङ्गसम्भावनैवासीत्, सुतरां यत्तद्भङ्गो न बभूव तदतिविस्मयकरमेवेति भावः। अथवा मध्यभागभङ्गः कटिदेशद्वैधीभावः, नातिविस्मयकरो नाधिकाश्चर्य्यजनकः, अतिकृशत्वेन सम्भवपरत्वात्, नमनमात्रेण शरीरस्यैव भङ्ग इति किंचिद्विस्मयकरत्वमभवदेवेति भावः, अतएव अतिशब्दप्रयोगोऽपि सङ्गच्छते। एतेन कटिदेशानामतीव क्षीणत्वं ध्वन्यते। अत्रापि प्रत्येकवाक्य एव यथायोगमसम्बन्धे सम्बन्धरूपातिशयोक्तिरलङ्कारः।

---

ধারণও পরিশ্রম জন্মাইত এবং কর্ণালঙ্কার-পদ্মের উপরে উপবিষ্ট ভ্রমরগণের পক্ষবায়ুও কন্যাগণের ক্লেশ জন্মাইত।

(ফ) এবং যেখানে কোন কোন কন্যা নবাগত সখীদিগকে দেখিয়া পরিচারিকাদের হস্ত ধারণ না করিয়াই যে গাত্রোত্থান করিত, তাহা অত্যন্ত সাহসের কার্য্য করিয়াছে, বলিয়া অন্যান্যে বিবেচনা করিত। অলঙ্কার পরিবার সময় যে মুক্তামালার ভার সহ্য করিতে পারিত, তাহা কেবল স্তনযুগলের কঠিনতার প্রভাবে। ফুল তুলিবার সময় যে একটি ফুল তুলিয়া আর একটি ফুল তোলা, তাহাও যুবতীদের পক্ষে অসম্ভব ছিল। কন্যাদের শিল্পকার্য্যের মধ্যে, কেবল যে মালা গাঁথা, তাহাও কঠিন লোকের কার্য্য বলিয়াই বিবেচিত হইত। আর দেবতাদের নমস্কার করিবার সময় যে, সেই কন্যাগণের কটিদেশ একেবারে ভাঙ্গিয়া যাইত না, তাহা অত্যন্ত আশ্চর্য্যজনক বলিয়া বোধ হইত।

---

(१)···पुष्प···। (२) माल्यग्रथनम्।

তস্য চৈবংবিধস্য কিঞ্চিদভ্যন্তরমতিক্রম্য ইতস্ততঃ পরিভ্রমতঃ কাদম্বরী-প্রত্যাসন্নস্য পরিজনস্য শুশ্রাব তাংস্তানতিমনোহরানালাপান্ (ব)। তথাহি "লবলিকে! কল্পয় কেতকীধূলিভিল্ববলীলতালবালমণ্ডলানি (ভ)। সাগরিকে! গন্ধোদক-কনক-দীর্ঘিকাসু (১) বিকির রত্নবালুকাম্ (ম)। মৃণালিকে! কৃত্রিমকমলিনীষু কুঙ্কুমরেণুমুষ্টিভিস্ছুরয় যন্ত্রচক্রবাকমিথুনানি (২) (য)। মকরিকে! কর্পূরপল্লবরসেনাধিবাসয় গন্ধপাত্রাণি (র)। রজনিকে! তমাল-(৩) বীথিকান্ধকারেষু নিধেহি মণিপ্রদীপান্ (৪) (ল)। কুমুদিকে! স্থগয় শকুনি-কুলরক্ষণায় মুক্তাজালৈর্দাড়িমীফলানি (ব)। নিপুণিকে! লিখ (৫) মণি-

(ব) তস্যেতি। তস্য কুমারীপুরস্য। কাদম্বর্য্যাঃ প্রত্যাসন্নস্য সর্বদা সন্নিহিতস্য।

(ভ) তথাহীতি। লবলিক ইতি কস্যাশ্চিৎ সম্বোধনম্। এবমন্যত্রাপি। কৈতকীধূলিভিঃ কৈতকী-কুসুমপরাগৈঃ, লবঙ্গলতানাং যান্যালবালানি তেষাং মণ্ডলানি উপরি বেষ্টনানি কল্পয় রচয়।

(ম) সাগেতি। গন্ধোদককনকদীর্ঘিকাসু সুরভিজলপূর্ণ-স্বর্ণপট্টবেষ্টিতস্নানবাপীষু।

(য) মৃণেতি। কৃত্রিমকমলিনীষু কৃত্রিমপদ্মময়বাপীষু। যন্ত্রচক্রবাকমিথুনানি কৃত্রিমযন্ত্রাত্মক-চক্রবাকপক্ষিদম্পতিগণান্। ছুরয় রঞ্জয়।

(র) মকেতি। কর্পূরপল্লবয়ো রসেন দ্রবেণ, অধিবাসয় অধিকসুরভীণি কুরু।

(ল) রজেতি। তমালবীথিকানাং তমালতরুশ্রেণীনাম্ অন্ধকারেষু দেশেষু। নিধেহি স্থাপয়।

(ব) কুমুদিক ইতি। শকুনিকুলেভ্যঃ পক্ষিগণেভ্যো রক্ষণায়। স্থগয় আবৃণু।

(ব) এই জাতীয় সেই কন্যাপুরের মধ্যে, চন্দ্রাপীড় কিছু দূর অতিক্রম করিয়া, ইতস্ততঃ বিচরণকারী কাদম্বরীর আসন্ন পরিচারিকাগণের নানাবিধ মনোহর আলাপ শুনিতে পাইলেন। (ভ) যথা—"লবলিকে! কেতকীপুষ্পের রেণুদ্বারা লবলীলতার আলবালগুলির উপরে মণ্ডল (গোলাকার ভিত্তি) নির্ম্মাণ কর। (ম) সাগরিকে! সুগন্ধজলে পরিপূর্ণ সোণার দীর্ঘিগুলিতে রত্নের বালি ছড়াইয়া দাও। (য) মৃণালিকে! কৃত্রিম-পদ্মময় সরোবরে যে সকল যন্ত্রময় (কলের) চক্রবাক ও চক্রবাকী আছে, তাহাদিগকে মুটে মুটে কুঙ্কুমরেণু দিয়া রঞ্জিত কর। (র) মকরিকে! কর্পূরের জল ও পল্লবের রস দিয়া গন্ধদ্রব্যের পাত্রগুলিকে সুবাসিত কর। (ল) রজনিকে! তমালতরুশ্রেণীর অন্ধকারে মণিময় দীপগুলিকে রাখিয়া দাও। (ব) কুমুদিকে! পক্ষিগণ হইতে রক্ষা করিবার নিমিত্ত দাড়িমফলগুলিকে মুক্তাময় জালে আচ্ছাদিত কর। (শ) নিপুণিকে! মণিময় পুত্তলিকাগুলির স্তনমণ্ডলে

(১) গন্ধোদকদীর্ঘিকাসু। (২) কৃত্রিম্ যন্ত্রপদং নাস্তি। (৩) ভবনতমাল…। (৪) মণিদীপান্। (৫) লিখয়।

शालभञ्जिकास्तनेषु कुङ्कुमरसपत्रभङ्गान् (य)। उत्पलिके! परामृश कनकसम्मार्जनीभिः (१) कदलीगृहमरकतवेदिकाम् (ष)। केसरिके! सिञ्च मदिरारसेन बकुलकुसुममालागृहाणि (स)। मालतिके! पाटलय सिन्दूररेणुना कामदेवगृहदन्तवलभिकाम् (ह)। नलिनिके! पायय कमलमधुरसं भवनकलहंसान् (क्ष)। कदलिके! नय धारागृहं गृहमयूरान् (क)। कमलिनिके! प्रयच्छ चक्रवाकशावकेभ्यो मृणालक्षीररसम् (ख)। चूतलतिके! देहि पञ्जरपुंस्कोकिलेभ्यश्चूतकलिकाङ्कुराहारम् (ग)। पल्लविके! भोजय मरिचाग्रपल्लवदलानि भवनहारीतान् (घ)। लवङ्गिके! विक्षिप (२) चकोर-

(य) निपुणिके इति। मणिशालभञ्जिकानां मणिनिर्म्मितस्त्रीपुत्तलिकानां स्तनेषु कुङ्कुमरसैः पत्रभङ्गान् पत्रावलीः, लिख चित्रय।

(ष) उत्पलिके इति। कदलीगृहस्य उद्यानस्थरम्भामण्डपस्य मरकतवेदिकाम्, परामृश मार्जय।

(स) केसेति। मदिरारसेन मद्यद्रवेण, बकुलकुसुममालागृहाणि बकुलपुष्पमाल्यालङ्कृतभवनानि।

(ह) मालेति। कामदेवगृहस्य दन्तवलभिका गजदन्तनिर्म्मितचूडा ताम्, पाटलय आरक्तीकुरु।

(क्ष) नलीति। कमलमधुरसं पद्ममकरन्दद्रवम्।

(क) कदेति। धारागृहं जलोद्गारयन्त्रसमन्वितं भवनम्।

(ख) कमेति। मृणालक्षीररसं पद्ममृणालनिर्य्यासम्।

(ग) चूतेति। पुमांसश्च ते कोकिलाश्चेति पुंस्कोकिलाः, पञ्जरवर्त्तिनः पुंस्कोकिलाः पञ्जरपुंस्कोकिलास्तेभ्यः, चूतकलिकाङ्कुराहारं आम्रकोरकाङ्कुरमयं खाद्यम्।

[घ] पल्लेति। भवनहारीतान् गृहपालितपक्षिविशेषान्।

(ङ) लवेति। पिप्पलीनां तण्डुलशकलानि अभ्यन्तरस्थबीजखण्डानि।

কুঙ্কুম দিয়া পত্রাবলী চিত্র করিয়া দাও। (ষ) উৎপলিকে! স্বর্ণসম্মার্জ্জনীদ্বারা কদলীগৃহের মরকতবেদিকাটিকে পরিষ্কার কর। (স) কেসরিকে! মদের জল দিয়া, বকুলফুলের মালায় ঘরগুলিকে সিক্ত কর। (হ) মালতিকে! সিন্দুরের রেণু দ্বারা, কামদেবের ঘরের চূড়াটিকে রঞ্জিত করিয়া দাও। (ক্ষ) নলিনিকে! গৃহপালিত কলহংসদিগকে পদ্মমধু পান করাও। (ক) কদলিকে! গৃহপালিত ময়ূরগুলিকে ধারাগৃহে লইয়া যাও। (খ) কমলিনিকে! চক্রবাকশাবকদিগকে মৃণালের রস দাও। (গ) চূতলতিকে! পঞ্জরস্থিত কোকিলদিগকে আম্রকলিকাময় খাদ্য দান কর। (ঘ) পল্লবিকে! গৃহপালিত হারিত পক্ষিগুলিকে মরিচ-পল্লবের দলাগ্র ভোজন করাও। (ঙ) লবঙ্গিকে! চকোরপক্ষীর

(१) कनकसम्मार्जनीभिः। [२] निक्षिप।

पञ्जरेषु पिप्पलीतण्डुलशकलानि (ङ)। मधुकरिके! विरचय कुसुमाभरणकानि (च)। मयूरिके! सङ्गीतशालायां विसर्जय किन्नरमिथुनानि (छ)। कन्दलिके! समारोपय क्रीडापर्वतशिखरं जीवञ्जीवमिथुनानि (ज)। हरिणिके! देहि पञ्जरशुकसारिकाणामुपदेशम्" (१) इत्येतानि (२) अन्यानि च परिहासजल्पितान्यशृणोत् (झ)। तथाहि "चामरिके! मिथ्यामुग्धतां प्रकटयन्ती कमभिसन्धातुमिच्छसि? (ञ)। अयि यौवनविलासोन्मत्तोन्नते! विज्ञातासि, या त्वं स्तन-कलश-भारावनम्यमानमूर्त्तिर्मणिस्तम्भमयूरानालम्बसे (ट)। परिहासकाङ्क्षिणि! रत्नभित्तिपतितमात्मप्रतिबिम्बमालपसि (ठ)। पवनच्छलो-

---

[च] मध्विति। कुसुमाभरणकानि पुष्पमयालङ्कारान्। अनुकम्पायां कप्रत्ययः।

(छ) मयूरिके इति। विसर्जय गानकरणार्थं प्रेरय।

(ज) कन्देति। जीवञ्जीवमिथुनानि चकोरपक्षियुगलानि।

(झ) हरीति। इत्येतानि आदेशवचनानि, अन्यानि च परिहासजल्पितानि नर्म्मभाषितानि। एतत् खलु कन्यापुराध्यक्षा सम्बोध्य सम्बोध्य सर्वाः परिचारिकाः स्वे स्वे कर्म्मणि नियोजयतीति बोध्यम्। आवासप्रवेशे च नायकः सार्थकमुपलभ्यते। एतेन कादम्बर्य्या महती खलु विलाससामग्रीसम्पत्तिः सूचिता।

(ञ) परिहासजल्पितानि प्रदर्शयति तथाहीति। मिथ्यामुग्धतामलीकसरलताम्। अभिसन्धातुं भावप्रदर्शनेन प्रतारयितुम्। एतेन कञ्चित् कटाक्षपातादिकं सूचयित्वा परिहसितम्।

(ट) अयीति। विज्ञातासि यथार्थरूपेण त्वं मयावगतासि। स्तनकलशयोर्भारेण अवनम्यमाना मूर्त्तिर्यस्यास्तादृशी त्वं मणिस्तम्भेषु ये मयूरा मणिनिर्म्मिता एव शिखिनस्तानालम्बसे आश्लिष्यसि। एतेन स्तनकण्डूयानिवृत्तये त्वं मणिमयूरानप्याश्लिष्यसीति परिहसितम्।

(ठ) परीति। आलपसि परभणसीति भावः। एतेन त्वं कस्यचिच्चिन्तया आत्मज्ञानरहितासीति परिहसितम्। अत्रात्मप्रतिबिम्बे अन्ययुवतिभ्रमाद्भ्रान्तिमानलङ्कारो व्यज्यते।

---

পিঞ্জরে পিপুলের বীজখণ্ড সকল নিক্ষেপ কর। (চ) মধুকরিকে! পুষ্পময় আভরণ নির্ম্মাণ কর। (ছ) ময়ূরিকে! কিন্নরদম্পতিগুলিকে সঙ্গীতশালায় ছাড়িয়া দাও। (জ) হে কন্দলিকে! চকোর ও চকোরীদিগকে ক্রীড়াপর্ব্বতের শৃঙ্গে আরোহণ করাইয়া দাও। (ঝ) হে হরিণিকে! পঞ্জরস্থিত শুক ও সারিকাগণকে শিক্ষা দাও।" চন্দ্রাপীড়, এই সমস্ত বাক্য এবং অন্যান্য পরিহাসবাক্যও শুনিতে পাইলেন। (ঞ) যথা—"হে চামরিকে! তুমি মিথ্যা মুগ্ধতা প্রকাশ করিয়া, কাহাকে বঞ্চনা করিতে ইচ্ছা করিতেছ?। (ট) হে যৌবনবিলাসোন্মত্তে! তোমাকে বুঝিতে পারিয়াছি, কলসতুল্য স্তনযুগলের ভারে তোমার শরীর অবনত হইয়া পড়িয়াছে, তাই তুমি মণিস্তম্ভের ময়ূরগুলিকে আলিঙ্গন করিতেছ। (ঠ) হে পরিহাসকাঙ্ক্ষিণি! মণিময় ভিত্তিতে তোমার নিজেরই প্রতিবিম্ব পড়িয়াছে, তুমি তাহার

---

(१)…शारिकोपदेशम्। (२) एतानि।

त्तरीयांशुके! हारप्रभायासितकरतला सङ्कलयसि (१) (ङ)। मणिकुट्टि-मेषूपहारकमलस्खलनभीते! निजमुखप्रतिबिम्बकानि परिहरसि (ढ)। निज-सौकुमार्य्य-गर्व-खर्व्वित-बिसप्रसून-सौभाग्ये! (२) जालवातायनपतितपद्मरागा-लोकं प्रति बालातपशङ्कया करतलमातपत्रीकरोषि (ण)। खेद-स्रस्त-(३)

---

(ङ) पवनेति। पवनेन वायुना हृतम् उत्तरीयांशुकं यस्य तत्सम्बोधनम्। आयासितकरतला परि-श्रमितहस्ता, उत्तरीयांशुकनाशात् मुहुर्मुहुः प्रसारणादिति भावः, हारप्रभा सङ्कलयसि उत्तरीयांशुकं मन्यसे। एतेन हारप्रभायामुत्तरीयांशुकभ्रान्तिं सूचयित्वा परिहसितम्। अतएवात्रापि भ्रान्तिमानलङ्कारो व्यज्यते।

(ढ) मणीति। उपहारकमलानि शोभासम्पादनाय भूतले विकीर्णानि पद्मानि तेषु स्खलनभीता पतन-भया तत्सम्बोधनम्। मणिकुट्टिमेषु मणिबद्धभूतलेषु, निजमुखप्रतिबिम्बकानि परिहरसि परित्यज्य गच्छसि, तदुपहारकमलभ्रमादिति भावः। एतेनात्ममुखप्रतिबिम्बे उपहारकमलभ्रमसूचनेन मुग्धहृदयत्वं सूचयित्वा परिहसितम्। अत्रापि भ्रान्तिमानलङ्कारो व्यज्यते।

(ण) निजेति। निजसौकुमार्य्यगर्व्वेण खर्व्वितं न्यूनीकृतं बिसप्रसूनस्य पद्मस्य सौभाग्यं सौकुमार्य्यं यया तत्सम्बोधनम्, अतएव सौकुमार्य्यातिशयाद्बालातपशङ्कयापि आतपत्रीकरणप्रयोजनमुपस्थितमिति भावः। "बिसप्रसूनराजीव-पुष्कराम्भोरुहाणि च" इत्यमरः। जालवातायने जालरूपे गवाक्षे पतितो यः पद्मरागस्य मणेरालोकस्तं प्रति तमुद्दिश्य, बालातपशङ्कया नवोदितसूर्य्यालोकभ्रमेण करतलं निजहस्तमेव आतपत्रीकरोषि तन्निवारणेच्छया छत्रीकरोषि। अत्र पद्मरागालोके बालसूर्य्यालोकभ्रमनाद्भ्रान्तिमानलङ्कारः। असम्बन्धेऽपि सम्बन्धा-त्तिशयोक्तिः।

---

সহিতই আলাপ করিতেছ!। (ঙ) হে শূন্যহৃদয়ে! বায়ু তোমার উত্তরীয় বসন অপহরণ করিয়া নিয়াছে; এ দিকে তুমি হারের কিরণগুলিকে উত্তরীয় বসন মনে করিয়া তাহা ধরিবার জন্য, হাত খানিকে পরিশ্রান্ত করিতেছ। (ঢ) হে বাহ্যজ্ঞানশূন্যে! তুমি ভূতল-বিক্ষিপ্ত পদ্মের উপরে পড়িয়া যাইবার ভয় করিতেছ; সুতরাং মণিময় ভূতলে নিজমুখের যে সকল প্রতিবিম্ব পড়িয়াছে, সে গুলিকেই ঐ সকল পদ্ম মনে করিয়া তাহা পরিত্যাগ করিয়া যাই-তেছ। (ণ) হে কোমলাঙ্গি! তুমি নিজের কোমলতার অভিমানে পদ্মের কোমলতাকেও খর্ব্ব করিয়াছ; সুতরাং গবাক্ষজালে যে পদ্মরাগমণির আলোক পড়িয়াছে, তাহাকেই নবোদিত সূর্য্যালোক মনে করিয়া তাহা নিবারণ করার জন্য নিজ করতলকে ছত্র করিতেছ। (ত) হে

---

(১) আকলয়সি। (২) ক্বচিত্ ইহ অস্য সম্বোধনমেব নাস্তি। (৩) খেদবশ...।

হস্ত-গলিত-চামরে! (১) নখমণিময়ূখকলাপমাধুনোষি" ইত্যেতান্যন্যানি চ শৃণ্বন্নেব কাদম্বরীভবনসমীপম্ (২) উপযযৌ (৩)। (ত)

পুলিনায়মানমুপবনলতা-গলিত-কুসুম-রেণু-পটলৈঃ, (থ) দুর্দ্দিনায়মান-নিভৃত-পরভৃত-নখ-ক্ষতাগ্র-(৪) সহকারফল-রস-বর্ষৈঃ, (দ) নীহারায়মাণ-মনিলবিপ্রকীর্ণ-বকুল-সেক-সীধু-ধারা-ধূলিভিঃ, (ধ) কাঞ্চনদ্বীপায়মানং

---

(ত) খেদেতি। খেদেন আন্দোলনপরিশ্রমেণ স্রস্তাৎ শিথিলাৎ হস্তাৎ গলিতং পতিতং চামরং যস্যাস্তৎসম্বোধনম্। অতএব চামরভ্রমেণ নখমণিকিরণজালান্দোলনমিতি ভাবঃ। নখমণীনাং নখরূপিরত্ন-ভূষণরত্নানাং ময়ূখকলাপং কিরণজালম্ আধুনোষি চামরভ্রমেণান্দোলয়সি। অত্র তু বাচকপদাভাবাদ্ভ্রান্তিমানলঙ্কারো ব্যজ্যতে। তাদৃশমন্যমালাপমুপহাসঃ। উপযযৌ চন্দ্রাপীড় ইতি শেষঃ।

(থ) পুলিনেতি। উপবনস্য পার্শ্বস্থোদ্যানস্য লতাভ্যো গলিতানি যানি কুসুমরেণুপটলানি তৈঃ, পুলিনায়মানং শুভ্রতাসাম্যাৎ সিকতাময়বদাচরন্তম্। ইতো দ্বিতীয়ান্তপদানি মার্গমদ্রাক্ষীদিতি বক্ষ্যমাণস্য মার্গমিত্যস্য বিশেষণানি। ইদমারভ্য হরিতায়মানমিত্যন্তং যাবৎ প্রত্যেকবিশেষণ এব ব্যঙ্গগতোপমালঙ্কারঃ।

(দ) দুর্দ্দিনেতি। অনিভৃতাশ্চপলা যে পরভৃতাঃ কোকিলাস্তেষাং নখৈঃ ক্ষতানি বিদীর্ণানি অগ্রাণি যেষাং আম্রাণাং সহকারফলানাং পার্শ্ববর্ত্তিনামাম্রফলানাং রসবর্ষৈঃ, দুর্দ্দিনায়মানং বৃষ্টিদিনবদাচরন্তম্।

(ধ) নীহারেতি। অনিলবিপ্রকীর্ণৈর্বায়ুবিক্ষিপ্তৈঃ, বকুলানাং তরূণাং সেকে পুষ্পবিকাসনায় সেচনসময়ে সীধুধারাণাং রমণীমুখমদ্যপ্রবাহাণাং ধূলিভিঃ কণৈঃ, নীহারায়মাণং শুভ্রত্বসাম্যাৎ তুষাররাশিবদাচরন্তম্। "দ্বিরদঘটা কুম্ভভিত্তিসম্বন্ধেন ধাতুধূলিনেতি প্রয়োগাৎ ধূলিঃ পুংস্যপি" ইত্যমরটীকায়াং রঘুনাথঃ।

(ন) কাঞ্চনেতি। চম্পকানাং পুষ্পাণাং যানি দলানি পত্রাণি তেষামুপহারৈঃ শোভাসম্পাদনায় নিক্ষেপৈঃ, কাঞ্চনদ্বীপায়মানং পীতত্বসাম্যাৎ স্বর্ণদ্বীপবদাচরন্তম্।

---

অবশে! চামর আন্দোলন করার পরিশ্রমে তোমার হাতখানি অবশ হইয়াছে, তাই চামরটি পড়িয়া গিয়াছে; সুতরাং তুমি সেই চামর মনে করিয়া নখমণির কিরণগুলিকে আন্দোলিত করিতেছ" এই রকম ও অন্যান্য অনেক রকম আলাপ শুনিতে শুনিতেই চন্দ্রাপীড় যাইয়া কাদম্বরীর বাড়ীর নিকট উপস্থিত হইলেন।

(থ) সেখানে উপস্থিত হইয়া একটি পথ দেখিতে পাইলেন; পার্শ্ববর্ত্তী উদ্যানের লতা হইতে নিপতিত পুষ্পের রেণুসমূহে সে পথটি বালুকাময় চড়ার ন্যায় বিরাজ করিতেছিল; (দ) চঞ্চল কোকিলগণ নখদ্বারা আমগুলিকে ক্ষত বিক্ষত করিয়াছিল; সুতরাং তাহার রসবৃষ্টিতে সেই পথটিকে বৃষ্টির দিনের ন্যায় দেখা যাইতেছিল; (ধ) রমণীগণ, পুষ্পবিকাসের নিমিত্ত বকুলবৃক্ষে মুখমদ্য সেচন করিতেছিল; বায়ু তাহার কণাগুলিকে ইতস্ততঃ ছড়াইয়া দিতেছিল; সুতরাং সেই পথটিকে তুষাররাশির ন্যায় দেখা যাইতেছিল; (ন) চম্পক-

---

(১)···চমরা। (২) ভবনম্। (৩) আযযৌ। (৪)···ক্ষতাম্র···।

